पतिभक्तिरता नित्यं देवपूजासु तत्परा । एकदा ब्राह्मणोऽप्येकः क्षुधार्तो दुर्बलः प्रिये ॥ ४ ॥ अन्नं च याचयामास लम्पटं प्रति वत्सले । दुर्वचश्चावदद्देवि भिक्षुकं प्रति दुर्बलम् ॥ ५ ॥ आत्मघातः कृतस्तेन दुर्बलब्राह्मणेन च । ततो बहुतिथे काले मरणं तस्य चाभवत् ॥ ६ ॥ पातिव्रत्येन तत्पत्न्याः सत्यलोकं जगाम सः । बहुवर्षसहस्राणि स्वर्गे वासोऽभवत्प्रिये ॥ ७ ॥ ततः पुण्यक्षये जाते मर्त्यलोके स मानुषः । पूर्वपापफलाद्देवि पुत्रकन्याविवर्जितः ॥ ८ ॥ तदुद्देशेन मरणं ब्राह्मणस्याभवत् पुरा । मद्यपानं कृतं तेन ततः कुष्ठी प्रजायते ॥ ९ ॥ तस्य शान्तिं प्रवक्ष्यामि यतः पापात्प्रमुच्यते । गायत्रीमूलमंत्रेण लक्षं जाप्यं प्रयत्नतः ॥ १० ॥ दशांशहोमः कर्त्तव्यो विप्राणां भोजनं शतम् । विधिवत्पूजयेद्देवि कपिलां स्वर्णभूषिताम् ॥ ११ ॥

---

नित्य पतिकी भक्तिमे रत और देवपूजनमे तत्पर थी । हे प्रिये ! एक समय एक दुर्बल ब्राह्मण ॥४॥ हे वत्सले ! तिस लंपट तस्करब्राह्मणसे अन्न मांगता भया, तब तिस दुर्बल भिक्षुकको यह खोटा वचन बोलता भया ॥ ५ ॥ फिर तिस दुर्बल ब्राह्मणने अपना अपघात कर दिया अर्थात् मर गया पीछे बहुतसा काल बीत चुका तब तिस लंपट ब्राह्मणकाभी मरण हो गया ॥६॥ सो अपनी स्त्रीके पतिव्रता धर्म करके सत्यलोकमें जाता भया । हे प्रिये ! तहां स्वर्गलोकमे बहुत हजार वर्षोंतक वास करता भया ॥ ७ ॥ फिर पुण्य क्षीण होनेपर वह मृत्युलोकमे मनुष्य भया है हे देवि ! पूर्वपापसे पुत्र कन्या करके हीन है ॥ ८ ॥ क्योंकि इसके उद्देशसे पहले भिक्षुक ब्राह्मणका मरना हुआ था, इसने मदिरा पान की थी तिससे कुष्ठी है ॥ ९ ॥ अब तिसकी शांतिको कहेंगे कि, जिससे पापसे छूट जावेगा, यत्नसे गायत्रीका लक्ष जप करवावे ॥ १० ॥ दशांश होम करवावे । सौ ब्राह्मणोंको भोजन करवावे । हे देवि ! विधिपूर्वक कपिला गौका दान करे और सुवर्णसे विभूषित करे ॥ ११ ॥

दद्याद्विप्राय तां देवि विदुषे ज्ञानरूपिणे ।
अतः पुत्रः प्रजायेत रोगनाशो भवेद्‌ध्रुवम् ॥ १२ ॥

इति श्रीकर्मविपाकसंहितायां भरणीनक्षत्रस्य द्वितीयचरण-
प्रायश्चित्तकथनं नाम नवमोऽध्यायः ॥ ९ ॥

---

## अथ दशमोऽध्यायः ॥ १० ॥

शिव उवाच ॥ एको वणिग्जनो देवि काकुत्स्थनगरे शुभे । अग्निकोणे शिवपुरे योजनार्द्धप्रमाणके ॥ १ ॥ धनाढ्यो ह्यवसद्देवि वैश्यवृत्तिरतः सदा । विक्रयं कुरुते देवि गुडमन्नं रसादिकम् ॥ २ ॥ एकस्मिन् समये देवि गुडमादाय चाध्वनि । वृषभं भारसंपन्नं करोति स वरानने ॥ ३ ॥ भारेण पीडितोऽनड्वान् स वै पथि गतः शिवे । न ज्ञातं तेन वै पापं वृष मार्गे ह्युद्भवम् ॥ ४ ॥

---

हे देवि ! तिस गौको विद्वान् और ज्ञानरूपी ब्राह्मणके अर्थ देवे तो फिर पुत्र जन्मे और रोगोंका नाश होवे ॥ १२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां भरण्या द्वितीयचरण-
प्रायश्चित्तकथनं नाम नवमोऽध्यायः ॥ ९ ॥

---

शिवजी कहते है-हे देवि ! एक वैश्यजन काशीजीसे अग्निकोणमें दो कोशके विस्तारमे बसते हुए सुन्दर काकुत्स्थ नामवाले नगरमे ॥ १ ॥ धन करके पूर्ण हुआ बसता भया और वैश्य वृत्तिमें रत रहता हुआ सदा गुड अन्न रस आदिकोंका बेचना तथा लेना करता था ॥ २ ॥ हे वरानने ! हे देवि ! एक समयमें गुड लेके मार्गमे गमन करते हुए वृषभको वह भार करके संपन्न करता भया ॥ ३ ॥ हे शिवे ! वह वृषभ मार्गमें भारकरके पीडित होता भया, वृषभको पीडा होनेसे

एवं बहुतिथे काले बिल्वमङ्गलके पुरे। वैश्यस्य मरणं जातं सरय्वां सह भार्यया ॥ ५ ॥ स्वर्गलोके गतौ द्वौ च तौ तु क्षेत्रप्रभावतः। षष्टिवर्षसहस्राणि स्वर्गे भुक्तं शुभं फलम् ॥ ६ ॥ ततः पुण्यक्षये जाते मर्त्यलोके वरानने। अवन्तीनगरे जातौ धनधान्यसमन्वितौ ॥ ७ ॥ मध्यदेशे विशालाक्षि पूर्वकर्मफलेन हि। पुत्रो न जायते देवि गर्भपातस्तथा शिवे ॥ ८ ॥ कन्यका वै प्रजायेत वारं वारं वरानने। शरीरे च ज्वरोत्पत्तिर्मध्यमा च प्रजायते ॥ ९ ॥ प्रायश्चित्तं प्रवक्ष्यामि पूर्वपापविशुद्धये। सुवर्णस्य वृषं शुभ्रं पलपञ्चमितं तथा ॥ १० ॥ प्रतिमां कारये-द्देवि वृषमेकं विभूषितम्। प्रपूज्य शिवमन्त्रेण वैदिकेन यथा-विधि ॥ ११ ॥ प्रदद्याद्विदुषे तस्मै ज्ञानिने शुद्धबुद्धये। नमः शिवाय मन्त्रेण लक्षजाप्यं प्रयत्नतः ॥ १२ ॥

---

उत्पन्न हुआ जो पाप तिसको जाना नहीं ॥ ४ ॥ ऐसे बहुतसा काल व्यतीत हो चुका तब बिल्वमंगल नामक पुरमे सरयूनदीके किनारेपर स्त्रीसहित उसका मरना हो गया ॥ ५ ॥ फिर पवित्रक्षेत्रके प्रभावसे वे दोनो स्वर्गलोकमें प्राप्त होते भये तहां स्वर्गलोकमें साठ हजार वर्षोंतक उत्तम फल भोगा ॥ ६ ॥ हे वरानने ! पीछे पुण्य क्षीण हो गया तब ये दोनों उज्जैनपुरीमें धनधान्यसे युक्त होते भये ॥ ७ ॥ हे देवि ! हे विशालाक्षि !! पूर्वकर्मके प्रभावसे मध्यदेशमें उत्पन्न भये है और इसके पुत्र नहीं होता है। हे शिवे ! हे देवि !! अथवा गर्भ-पात होता है ॥ ८ ॥ अथवा बारंबार कन्या जन्मती है। हे वरानने ! इसके शरीरमें मध्यमसा ज्वर रहता है ॥ ९ ॥ अब इसके पूर्वपापकी शुद्धिके वास्ते प्रायश्चित्तको कहेंगे। बीस तोले सुवर्णका सुंदर ( वृष ) बैल बनवावे ॥ १० ॥ हे देवि ! एक बैलकी मूर्ति बना तिसको विभूषित कर फिर वेदमें होनेवाले शिवमंत्रकरके यथार्थविधिसे पूजन करे ॥ ११ ॥ पीछे शुद्ध बुद्धिवाले ज्ञानी

रोगतो मुच्यते देवि नात्र कार्या विचारणा ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां भरण्यास्तृतीयचरणप्रायश्चित्त-
कथनं नाम दशमोऽध्यायः ॥ १० ॥

## अथ एकादशोऽध्यायः ॥ ११ ॥

ईश्वर उवाच ॥ शृणु देवि वरारोहे नृणां कर्मविपाकजम् । प्रवक्ष्यामि न संदेहो यदि ते श्रवणे मतिः ॥ १ ॥ उत्तरे चाप्ययोध्यायास्ततः कोशत्रयोपरि । तत्र तस्थौ च भो देवि लोकशर्मेति नामतः ॥ २ ॥ तस्य पत्नी शुभाङ्गी वै लीलानाम्नीति विश्रुता । ब्राह्मणः कर्मविभ्रष्टो व्याधरूपो वरानने ॥ ३ ॥ मृगान्सबालकान् हत्वा पक्षिणो विविधानपि । पत्नीयुक्तस्तु बुभुजे तुतोष बहुधा तदा ॥ ४ ॥ तस्य पत्नी महादुष्टा मुखरा चञ्चला तथा । परपुंसि रता नित्यं धर्मकर्मविवर्जिता ॥ ५ ॥

---

विद्वान् ब्राह्मणके अर्थ दान देवे और " नमः शिवाय " इस मंत्रकरके यत्नसे लक्ष जाप करवावे ॥ १२ ॥ हे देवि ! रोगसे छूट जाता है इसमें कुछ विचार नही करना ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां भरण्यास्तृतीयचरण-
प्रायश्चित्तकथनं नाम दशमोऽध्यायः ॥ १० ॥

शिवजी कहते है-हे देवि ! हे वरानने ! ! मैं मनुष्योके कर्मविपाकको निःसंदेह कहूंगा, जो तुम्हारी बुद्धि सुननेमे है तो सुनो ॥ १ ॥ अयोध्यापुरीसे उत्तरदिशामे तीन कोशपर लोकशर्मा नामवाला ब्राह्मण रहता था ॥२॥ तिसकी स्त्री सुंदर अंगवाली लीलानामसे प्रसिद्ध थी । हे वरानने ! वह ब्राह्मण अपने कर्मसे भ्रष्ट हो व्याधरूप होके ॥ ३ ॥ बालक मृगोंको मारके तथा अनेक पक्षियोंको मारके स्त्रीयुक्त तिनको भक्षण करता हुआ बहुत प्रसन्न होता भया ॥ ४ ॥ तिसकी स्त्री महादुष्टा क्रोधिनी और चंचला थी नित्य

एवं सर्वं वयो जातं वृद्धे सति वरानने। मरणं तस्य वै देवि स्वपुरे सर्पतस्तथा ॥६॥ पत्नी चैव तदा तस्या दुष्टा वै व्यभिचारिणी। उभौ च नरके यातौ स्वकर्मवशतः प्रिये ॥ ७ ॥ कुम्भीपाके महाघोरे नानानरकयातनाम् । भुक्त्वा बहु सहस्राणि पुनर्जातश्च सूकरः ॥८॥ योनिं च सूकरीं भुक्त्वा बिडालत्वं पुनः प्रिये। ततो बिडालयोनिं च भुक्त्वा गृध्रस्ततोऽभवत् ॥ ९ ॥ पुनः कर्मवशाद्देवि मानुषत्वं ततोऽभवत्। इह लोके वरारोहे पूर्वकर्मप्रभावतः ॥१०॥ मृतवत्सा भवेन्नारी पुत्रश्चैव न जीवति। बहुरोगो भवेद्देवि ज्वरेणैव प्रपीडितः ॥ ११ ॥ पूर्वजन्मकृतं पापमिह जन्मनि भुज्यते। इह लोके कृतं कर्म जन्मजन्मनि भुज्यते ॥ १२ ॥ अथ शान्तिं प्रवक्ष्यामि शृणु त्वं गिरिजे मम। वंशगोपालमन्त्रेण लक्षजाप्यं वरानने ॥ १३ ॥

---

प्रति परपुरुषसे रत रहा करती नित्य अपने धर्मकर्मसे वर्जित थी ॥ ५ ॥ हे वरानने ! ऐसे संपूर्ण अवस्था वीत गई फिर वृद्ध हो गया तब हे देवि ! यह अपनेही पुरमे कही गमन करता हुआ मर गया ॥ ६ ॥ तिसकी दुष्टा व्यभिचारिणी वह स्त्रीभी मृत्युको प्राप्त हो गई। हे प्रिये ! फिर वे दोनोंही अपने कर्मवशसे नरकमे प्राप्त हो गये ॥ ७ ॥ कुम्भीपाक नामक महाघोर नरकमें अनेक प्रकारकी पीडाको बहुत हजार वर्षोंतक भोगके फिर सूकर होता भया ॥ ८ ॥ हे प्रिये ! सूकरकी योनिको भोगके फिर विलावयोनिको भोगके फिर गीध होता भया ॥९॥ हे देवि ! पीछे कर्मवशसे मनुष्ययोनिमें इस मृत्युलोकमें उत्पन्न भया है ॥ १०॥ इसकी स्त्रीकी संतान नही जीवती है ( मृतवत्सा है ) पुत्र नही जीवता है यह बहुत रोग और ज्वरसे पीडित है ॥ ११ ॥ पूर्व जन्ममे किया हुआ पाप इस जन्ममे भोगा जाता है और इस जन्ममें जो कर्म किया है वह अन्य जन्मोमे भोगा जाता है ॥ १२ ॥ हे पार्वति ! अब इसकी शांति कहेंगे सुन । हे वरानने ! संतानगोपाल मंत्र करके लक्ष

दशांशहोमः कर्तव्यो विप्राणां भोजनं शतम् । मन्त्रं च संप्रवक्ष्यामि येन पुत्रमवाप्स्यति ॥ १४ ॥ मंत्रः—ॐ देवकीसुत गोविन्द वासुदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ १५॥ ततो वै स मृगान् कृत्वा मृगबालान् सपक्षिणः । स्वर्णपञ्चपलेनैव मृगान् कृत्वा सबालकान् ॥ १६ ॥ रौप्यस्यैवं वरारोहे पक्षिणः पञ्च कारयेत् । पूजनं विधिवत् कृत्वा संप्रार्थ्य परमेश्वरम् ॥ १७ ॥ स्रष्टा त्वं सर्वलोकानां सर्वकामप्रदः सताम् । देवदेव जगन्नाथ शरणागतवत्सल ॥ १८ ॥ त्राहि मां कृपया देव पूर्वकर्मविपाकतः । एवं संपूज्य देवेशं ततो विप्रं प्रपूजयेत् ॥ १९॥ सुवर्णेन वरारोहे अश्वादिवाहनेन वै । प्रतिमामर्पयेद्देवि विप्राय ज्ञानरूपिणे ॥ २० ॥

---

जप करवावे ॥ १३ ॥ दशांश होम करवावे सौ ब्राह्मणोंको भोजन करावे अब मंत्रको कहेंगे । जिससे पुत्रकी प्राप्ति होवेगी ॥ १४ ॥ मन्त्र—ओं हे देवकीसुत ! गोविंद ! हे वासुदेव ! हे जगत्पते ! मुझको पुत्र दो । हे कृष्ण ! मैं तुम्हारी शरण हूं ॥ १५ ॥ ( यह मंत्र संतानगोपालका है ) इसके अनंतर वह बच्चोंसमेत मृगोंको और पक्षियोंको बनवावे बच्चोंसहित मृग तो पांच पल सुवर्णका बनवावे ॥ १६ ॥ और हे वरारोहे ! पांच पक्षी चांदीके बनवावे पीछे विधिपूर्वक पूजन कर परमेश्वरकी प्रार्थना करे ॥ १७ ॥ हे देवदेव ! हे जगन्नाथ ! ! हे शरणागतवत्सल ! ! ! तुम सब लोकको रचनेवाले हो और श्रेष्ठ पुरुषोंको सब काम देनेवाले हो ॥ १८ ॥ हे देव ! कृपाकरके पूर्वकर्मके विपाकसे मेरी रक्षा करो, ऐसे विष्णु भगवान्का पूजन कर पीछे ब्राह्मणकी पूजा करे ॥ १९ ॥ हे वरारोहे ! सुवर्ण तथा अश्व आदि वाहन करके ब्राह्मणको पूजके फिर ज्ञानरूपी ब्राह्मणके अर्थ मूर्तियोंकोभी दे देवे ॥ २० ॥

वापिकां कूपखातं च पथि मध्ये वरानने ।
प्रकरोति यदा देवि तदा पुत्रः प्रजायते ॥
रोगात्प्रमुच्यते देवि जीवेत् पुत्रो न संशयः ॥ २१ ॥

इति श्रीकर्मविपाकसंहितायां भरण्याश्चतुर्थचरणप्रायश्चित्त-
कथनं नामैकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोऽध्यायः ॥ १२ ॥

### कृत्तिकानक्षत्रफलम् ।

ईश्वर उवाच ॥ कृत्तिकायां वरारोहे प्रथमे चरणे तथा । यो जायते नरो देवि तस्य वक्ष्ये शुभाशुभम् ॥ १ ॥ ईशानेऽपि महादेवि कोशलापुरतोऽनघे । राजपुत्रोऽवसत्कश्चिन्नगरे गूढसंज्ञके ॥ २ ॥ नामतश्चाहिशर्मेति तस्य पत्नी कला शुभा । धनधान्यसमायुक्तो रूपवान् मन्मथो यथा ॥ ३ ॥ याति चाखेटकं नित्यं मृगीं हत्वा च गर्भिणीम् । प्रत्यहं मृगमांसेन पोषयेत्स्वतनुं तथा ॥ ४ ॥ शरीरे वृद्धता जाता दया तस्य न चाभवत् । ततो वै मरणाद्देवि सती भार्या ततोऽभवत् ॥ ५ ॥

---

हे वरानने ! जब मार्गमें बावडी बनवावे अथवा कूँवा खुदवावे तब पुत्र उत्पन्न होवे । हे देवि ! रोगसे छूटे और इसका पुत्र जीवे इसमें संदेह नहीं ॥ २१ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां भरण्याश्चतुर्थचरण-
प्रायश्चित्तकथनं नामैकादशोऽध्यायः ॥ ११ ॥

---

शिवजी कहते है-हे देवि ! कृत्तिकानक्षत्रके प्रथम चरणमें जो जन्मता है ! हे वरारोहे ! तिस मनुष्यके शुभाशुभको कहेंगे ॥१॥ हे महादेवि ! हे अनघे ! अयोध्यापुरीसे ईशानकी तरफ गूढनामवाले नगरमें ॥२॥ आहिशर्मा नामवाला ब्राह्मण धनधान्यसे युक्त और कामदेवके समान रूपवाला था उसकी स्त्री (शुभा) कलानामवाली थी ॥३॥ वह शिकारको नित्य जाता तब एक दिन गर्भिणी मृगीको मारके और दिन दिनके प्रति मृगोंके मांससे अपने शरीरको पोषण करता था ॥४॥ फिर तिसको वृद्ध अवस्था प्राप्त हुई और तिसके दया तबभी नहीं होती भई तिसके

सत्यलोकं गतस्तेन भार्यायाः सुकृतेन तु । भुक्तं कल्पमितं पुण्यं सत्यलोके वरानने ॥ ६ ॥ पुनः पुण्यक्षये जाते मानुषत्वमुपागतः । पत्न्या सह ततो देवि कुले महति पूजिते ॥ ७ ॥ पूर्वजन्मविपाकेन मृतवत्सत्वमाप्नुयात् । मृगीं सगर्भां हतवान् पूर्वजन्मनि सुव्रते ॥ ८ ॥ तेन कर्मविपाकेन मर्त्यलोके ह्यपुत्रकः । तस्य शान्तिं प्रवक्ष्यामि यतः पुत्रः प्रजायते ॥ ९ ॥ गायत्रीजातवेदोभ्यां लक्षमेकं जपं तथा । दशांशहोमः कर्त्तव्यो विप्राणां भोजनं ततः ॥ १० ॥ सुवर्णेन मृगीं कृत्वा मृगबालं तथैव च । पूजयित्वा विधानेन कपिलां च ततः प्रिये ॥ ११ ॥ प्रदद्याद्वेदविदुषे ब्राह्मणाय सुतेजसे । हरिवंशस्य श्रवणं चण्डीपाठं शिवार्चनम् ॥ १२ ॥

---

पीछे वह मृत्युको प्राप्त हुआ, तब उसकी स्त्री तिसके संग अग्निमें सती हो गई॥५॥ तिससे वह स्त्रीके सुकृतसे सत्यलोकको जाता भया और हे वरानने! एक कल्पतक सत्यलोकमें पुण्य भोगा ॥ ६ ॥ फिर पुण्य पूरा हो गया तब मनुष्य शरीरमें प्राप्त हुआ । हे देवि! स्त्रीसहित हो महान् पूज्यकुलमें जन्मा है॥ ७ ॥ पूर्वकर्मविपाकसे ( मृतवत्सत्व ) इसकी संतान नहीं जीवती है । हे सुव्रते! वह गर्भिणी मृगीको मारता भया ॥ ८ ॥ तिस कर्मविपाकसे मृत्युलोकमें पुत्र॰ रहित भया है । अब तिसकी शांतिको कहेंगे जिससे संतान होवेगी ॥ ९ ॥ गायत्रीमंत्र और "जातवेदसे सुनवाम०" इस मंत्रकरके लक्ष जप करवावे फिर पीछे दशांश होम करवावे फिर ब्राह्मणोंको भोजन करवावे ॥ १० ॥ सुवर्णमृगी और मृगीके बच्चे बना तिनका विधिपूर्वक पूजन करे । हे प्रिये! पीछे कपिला गौको ॥ ११ ॥ वेदको जाननेवाले सुंदर तेजवाले विद्वान् ब्राह्मणके अर्थ दे देवे । हरिवंशको सुने दुर्गापाठ करे और शिवपूजन करवावे॥१२॥

एवं कृत्वा विधानेन शीघ्रं पुत्रः प्रजायते ।
कन्यका न भवेत्तस्य गर्भपातो न जायते ॥ १३ ॥
रोगात्प्रमुच्यते रोगी सर्वकामः प्रजायते ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायां कृत्तिकाप्रथमचरणप्रायश्चित्तकथनं नाम द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ॥ १३ ॥

शिव उवाच ॥ नराणां पुण्यशीलानामिह जन्मसमुद्भवम् । सुखं वक्ष्याम्यहं देवि पूर्वकर्मफलं यतः ॥ १ ॥ येन दत्तं पुरा दानं गोसुवर्णगजादिकम् । तत्फलेन महादेवि इह तस्मात् सुखं भवेत् ॥२॥ शरीरे जन्मतः कान्तिर्लक्ष्मीवान् गुणवानपि । सौख्यं प्रभुज्यते नित्यं पुत्रतो धनतस्तथा ॥ ३ ॥ न रोगो जायते देवि दुःखं नैव कदाचन। इह लोके सुखं भुक्त्वा कीर्तिमान् सुखमेधते ॥४॥ अथ वक्ष्याम्यहं देवि नक्षत्रे कृत्तिकाह्वये । द्वितीयचरणे देवि पूर्वं यत् फलमुच्यते ॥ ५ ॥

---

ऐसे विधानसे करे तो शीघ्रही पुत्र उत्पन्न होवे कन्या उत्पन्न न हो और गर्भपातभी न होवे ॥१३॥ रोगी रोगसे छूट जावे । सब कामना सिद्ध हो जावे १४

इति श्रीकर्मविपाकसंहिताभाषाटीकायां कृत्तिकानक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम द्वादशोऽध्यायः ॥ १२ ॥

शिवजी कहते हैं-हे देवि ! पुण्यात्मा मनुष्योंके इस जन्ममे पूर्वकर्मके प्रभावसे सुखकी उत्पत्ति होती है उसको कहते हैं ॥ १ ॥ जिसने पूर्वजन्ममें गौ, सुवर्ण, हाथी आदिका दान किया हो । हे महादेवि ! इस जन्ममें तिस दानसे सुख होता है ॥ २ ॥ जन्मसेही शरीरमें कांति रहती है । लक्ष्मीवान् और गुणवान् होता है। नित्यप्रति पुत्रके अथवा धनके सुखको भोगता है ॥ ३ ॥ हे देवि ! रोग नही होता है और दुःख कभी नही होता है। इस जन्ममें सुख भोगके कीर्तिमान् हो सुखकी वृद्धिको प्राप्त होता है ॥ ४ ॥ हे देवि ! अब कृत्तिकानक्षत्रके दूसरे

कान्यकुब्जो द्विजः कश्चिदिन्द्रशर्मेति नामतः । पत्नी रुद्रमती देवि कुशीला कलहप्रिया ॥ ६ ॥ वेदपाठरतो नित्यं षडङ्गस्य च पाठकः । एकदा तत्र वै देशे कश्चित् क्षत्री नराधिपः ॥७॥ मरणे तस्य वै जाते तद्विप्रस्य निमन्त्रणम् । भुंक्ते तेन तदा देवि क्षत्रियस्य क्रियासु च ॥ ८ ॥ गृहीतं तस्य वै दानं शय्यां चैव गजादिकम् । सर्वं गृह्य गृहं गत्वा भुक्तं बहुदिनं प्रिये ॥ ९ ॥ ततो बहुगते काले तस्य विप्रस्य पञ्चता । स यातो यमलोके वै नरके च सुदारुणे ॥ १० ॥ भुक्तं स्वकर्मजं दुःखं युगमेकं वरानने । गजव्याघ्रकृमेर्योनिं ततो भुंक्ते पृथक् पृथक् ॥ ११ ॥ मनुष्यत्वं ततः प्राप्तः पूर्वकर्मविपाकतः । पुत्रो न जायते देवि कन्यका विविधास्तथा ॥ १२ ॥

---

चरणमें जन्मनेवालेने जो पहले कर्म किया है तिसके फलको कहते हैं ॥ ५ ॥ कोई इन्द्रशर्मा नामवाला कान्यकुब्ज ब्राह्मण था । हे देवि ! इसकी स्त्री रुद्रमती नामवाली दुष्टस्वभाववाली कलह करनेवाली थी ॥ ६ ॥ यह ब्राह्मण वेदपाठ और षडंगके पाठ करनेमें तत्पर रहता था एकसमय तिस देशमें कोई क्षत्रिय राजा आता भया ॥ ७ ॥ तिस राजाकी मृत्यु हो गई तब तिस ब्राह्मणको निमंत्रण भया । हे देवि ! तहां तिस क्षत्रियकी क्रियामें तिस ब्राह्मणने भोजन किया ॥ ८ ॥ और शय्या हस्ती आदि दान ग्रहण किया । हे प्रिये! संपूर्ण दान ग्रहण करके घरमे जाके बहुत दिनतक भोगा ॥ ९ ॥ फिर बहुतसा काल बीत चुका तब तिस ब्राह्मणकी मृत्यु हुई फिर वह धर्मराजके लोकमें प्राप्त हो दारुण नरकमें पडता भया ॥ १० ॥ हे वरानने ! एक युगतक अपने कर्मका दुःख भोगा पीछे हस्ती, व्याघ्र, कृमि इन योनियोको अलग २ भोगके ॥ ११ ॥ फिर पूर्वकर्मके प्रभावसे मनुष्ययोनिको प्राप्त भया है । हे देवि ! इसके पुत्र नही होता है अनेक कन्याही जन्मती हैं ॥ १२ ॥

मृतवत्सा भवेन्नारी रोगाश्च विविधाः प्रिये । शान्तिं तस्य प्रवक्ष्यामि यतः पुत्रमवाप्स्यते ॥ १३ ॥ गायत्रीलक्षजाप्येन त्र्यंबकेन तथा प्रिये । होमं च कारयामास षडंशं दानमेव च ॥ १४॥ दशवर्णाश्च गा दद्याद्विधिवद्ब्राह्मणाय वै । भोजयेच्छतसंख्यं च ब्राह्मणं वेदपारगम् ॥ १५ ॥ एवं कृतेन भो देवि पुत्रश्चैव प्रजायते । रोगाणां च निवृत्तिः स्यात् पूर्वपापक्षयो भवेत् ॥ १६

इति श्रीकर्मविपाकसंहितायां कृत्तिकानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः ॥ १४ ॥

शिव उवाच ॥ तृतीयं तस्य वै देवि चरणं वदतः शृणु ।
कान्यकुब्जकुले कश्चिन्नगरे सूर्यसंज्ञके ॥ १ ॥

---

अथवा इसकी स्त्रीके सन्तान नहीं जीती है अनेक प्रकारके रोग रहते हैं हे प्रिये! अब इसकी शांतिको कहेंगे तिससे पुत्रकी प्राप्ति होगी॥१३॥ हे प्रिये! गायत्रीमंत्र तथा "त्र्यंबकं यजामहे॰" इस मंत्रकरके लक्ष जप करावे दशांश होम करावे घरके द्रव्यसे (षडंश) छठे हिस्से धनका दान करे॥ १४ ॥ और विधिपूर्वक दश प्रकारके रंगोवाली गौओको ब्राह्मणके अर्थ देवे और वेदपाठी सौ ब्राह्मणोंको भोजन करवावे ॥ १५ ॥ हे देवि ! ऐसा करनेसे पुत्र होता है रोगोंकी निवृत्ति हो और पूर्वजन्मके पाप नष्ट होता है॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां कृत्तिकानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

शिवजी कहते है-हे देवि ! अब कृत्तिकानक्षत्रके तीसरे चरणको सुन, सूर्य-

उद्योतशर्मा विख्यातस्तस्य स्त्री गिरिजाऽभवत् । वेदपाठरतो नित्यं दारिद्र्येणैव पीडितः ॥ २ ॥ कर्कशा भामिनी तस्य निष्ठुरं वदति स्मृता । एकदा सूर्यग्रहणे तैलकारस्तदागतः ॥ ३ ॥ गङ्गामध्ये ततो दानं तस्मै विप्राय वै शिवे । प्रददौ लक्षसंख्यां वै स्वर्णमुद्रां तु दक्षिणाम् ॥ ४ ॥ प्रतिगृह्य ततो दानं गृहं गत्वा द्विजस्तदा । व्ययं करोति स्म तदा भार्यापुत्रेण चैव हि ॥ ५ ॥ वेदपाठं ततस्त्यक्त्वा प्रत्यहं ससुखं प्रिये । मरणं वृद्धसमये गृहे शय्योपरि स्थिते ॥ ६ ॥ स्वर्णमध्ये च दानं वै न दत्तं गिरिनन्दिनि । स गतो नरके घोरे यमराजेन प्रेरितः ॥७॥ भुंक्ते नरकजं दुःखं स्त्रीपुत्रेण च संयुतः । युगमेकं वरारोहे प्रेतत्वं काकतां गतः ॥ ८ ॥ ततः शृगालयोनिं च मानुषत्वं ततो गतः । पूर्वजन्मकृतं कर्म इह लोके प्रभुज्यते ॥ ९ ॥

---

पुरमें कान्यकुब्जकुलमें कोई उद्योतशर्मा नामवाला ब्राह्मण भया तिसकी स्त्री गिरिजा नामवाली होती भई यह ब्राह्मण नित्यप्रति वेदपाठ करनेमें रत रहता था और दारिद्र्यसे पीडित था ॥ १ ॥ २ ॥ इसकी स्त्री कर्कशा नामवाली थी पतिको क्रूरवचन बोलती थी एक समय सूर्यग्रहणमे कोई तैलकार ( तेली ) तहां आता भया ॥ ३ ॥ हे शिवे ! पीछे तिस तैलकारने इस ब्राह्मणके अर्थ गंगाजीके मध्यमें लाख मोहरोंका दान दिया ॥ ४ ॥ तब वह ब्राह्मण तिस दानको ग्रहण कर अपने घरमे जाके दिन २ प्रति स्त्रीपुत्रसहित खर्चता भया ॥ ५ ॥ हे शिवे ! पीछे वह वेदपाठको त्यागके दिन २ प्रति सुखको भोगता भया फिर वृद्ध अवस्थामें घरमें खट्वापर स्थित हुएही इसकी मृत्यु हो गई ॥६॥ हे गिरिजे ! इसने सुवर्णके ढेरसे कुछभी दान न किया था इसलिये यह धर्मराजसे पेरा हुआ नरकमें जाता भया ॥ ७ ॥ हे वरारोहे ! स्त्रीपुत्रसंयुक्त हुआ तहां नरकके दुःखको एक युगतक भोगता भया फिर काग भया ॥ ८ ॥ पीछे गीदडकी योनिको प्राप्त हो फिर मनुष्य भया है । क्योंकि,

पाठयामास वै वेदान् ब्राह्मणेभ्यो वरानने । तत्संचितफलाद्देवि महदैश्वर्यमाप्नुयात् ॥ १० ॥ भार्या मृता ततः पुत्रो द्वितीया च विवाहिता । शरीरे बहवो रोगाः सुखं तस्य न जायते ॥ ११ ॥ वृद्धे सति वरारोहे पुत्रः शत्रुर्भवेदिति । मृतवत्सा भवेन्नारी पूर्वजन्मविपाकतः ॥ १२ ॥ तस्य पुण्यमहं वक्ष्ये यतो रोगो निवर्तते । पुनः पुत्रो भवेद्देवि कन्यका नैव जायते ॥ १३ ॥ जातवेदादिमन्त्रेण जपं वै कारयेद्बुधः । लक्षत्रयं प्रयत्नेन ततो होमं तिलादिभिः ॥ १४ ॥ चतुरस्रे शुभे कुण्डे हरिवंशश्रुतिस्ततः । भूदानं विधिवत्कुर्याच्छय्यां पात्राय दापयेत् ॥ १५ ॥ एवं कृते न संदेहो रोगनाशो भविष्यति । पुत्रश्च जायते देवि नात्र कार्या विचारणा ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां कृत्तिकानक्षत्रतृतीयचरणप्रायश्चित्त-
कथनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

पूर्वजन्ममे किया हुआ कर्म इस लोकमे भोगा जाता है ॥ ९ ॥ हे देवि ! यह जो ब्राह्मणोंको वेद पढाता भया तिस कर्मफलसे महान् ऐश्वर्यवान् भया है ॥ १० ॥ स्त्री मर गई फिर पुत्र मर गया पीछे दूसरी स्त्री विवाही है इसके शरीरमें बहुतसे रोग हैं सुख नही होता है ॥ ११ ॥ हे वरारोहे ! वृद्ध अवस्थामे इसका पुत्रही अत्यंत शत्रु होवे अथवा पूर्वजन्मके कर्मसे इसकी स्त्रीके संतानही नही जीवे ॥ १२ ॥ इसके पुण्यको मैं कहूंगा जिससे रोग निवृत्त हो फिर पुत्र उत्पन्न होवे ! हे देवि ! कन्या नहीं होगी ॥ १३ ॥ "जातवेदसे सुनवाम०" इस मंत्रकरके बुद्धिमान् जन यत्नसे तीन लक्ष जप करावे पीछे तिल आदिकोंसे होम करवावे ॥ १४ ॥ चौकुंठे शुभ कुण्डमे होम कराना, हरिवंशपुराण सुने, पृथ्वीका दान करे और सत्पात्र ब्राह्मणके अर्थ विधिपूर्वक शय्याका दान देवे ॥ १५ ॥ ऐसा करनेसे निश्चय रोगका नाश होवेगा ! हे देवि ! पुत्रभी उत्पन्न होवेगा इसमें कुछ विचार नही करना ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां कृत्तिकानक्षत्रतृतीय-
चरणप्रायश्चित्तकथनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः ॥ १५ ॥

शिव उवाच ॥ कान्यकुब्जो द्विजः कश्चिन्नर्मदादक्षिणे तटे। माहिष्मत्यां वसत्येको द्विजः परमवैष्णवः ॥ १ ॥ नामतो योधशर्मेति तस्य भार्या तु दानवी । प्रत्यहं वैश्यवृत्तिस्तु विक्रयं चाकरोत्सदा ॥ २ ॥ तत्र वैश्य उवासैको धनधान्यसमन्वितः । वैश्यतस्तेन विप्रेण स्वर्णं नीतमृणं बहु ॥ ३ ॥ ततो बहुतिथे काले स विप्रो मृत्युमागतः । ऋणं तस्मै न दत्तं वै वैश्याय तु स्वकर्मणा ॥ ४ ॥ मरणे सति विप्रस्तु रौरवं नरकं गतः । वैश्यकर्म कृतं तेन स्वकर्म परिमुच्यते ॥ ५ ॥ विंशद्वर्षसहस्राणि नागलोके वसत्यसौ । नरकान्निःसृतो देवि यातो वृषभसूकरौ ॥ ६ ॥ योनिद्वयं फलं भुक्त्वा मनुष्यत्वमवाप्तवान् । धनधान्यसमायुक्तस्तत्पुण्यस्य प्रभावतः ॥ ७ ॥ ऋणसम्बन्धतो देवि वैश्यपुत्रत्वमागतः । प्रत्यहं तस्य वै द्रव्यं व्ययं कुर्याद्दिनेदिने ॥८

---

शिवजी बोले-नर्मदाके दक्षिणतटपर माहिष्मती नगरीमें एक परम वैष्णव कान्यकुब्ज ब्राह्मण रहता था ॥ १ ॥ उस ब्राह्मणका नाम योधशर्मा और उसकी स्त्रीका नाम दानवी था, यह नित्य वैश्यवृत्तिके अनुसार क्रय विक्रय करता था ॥ २ ॥ वहीं एक धन धान्यसे युक्त वैश्य रहता था इस योधशर्मा ब्राह्मणने तिस वैश्यसे बहुतसा धन कर्ज लिया ॥ ३ ॥ चिरकालके उपरान्त इस ब्राह्मणकी मृत्यु होगई जीतेजी इस ब्राह्मणने उस बनियेको कर्जका धन नहीं दिया ॥ ४ ॥ इस योधशर्माने अपने ब्रह्मकर्मको छोड वैश्यवृत्ति कर बनियेका धन हराथा इस कारण यह रौरव नरकको प्राप्त हुआ॥५॥ हे देवि ! इसने बीस हजार वर्षतक नागलोकमें नरकयातना भोगी जब नरकसे निकला तब बैल और सूकरकी योनिको पाता हुआ ॥ ६ ॥ इन दोनों योनियोंमें अपने किये पूर्वकर्मके फलको भोग मनुष्य हुआ है और धनधान्यसे युक्त है ॥ ७ ॥ हे देवि ! ऋणसंबंधसे उस वैश्यने इसके यहां पुत्र

मद्यवेश्याप्रदानेन धनं सर्वं व्ययं कृतम् । यदा पुत्रः समुत्पन्नो युवरूपोऽभवत्प्रिये ॥ ९ ॥ तदा मृत्युमवाप्नोति शोकं दत्त्वा तयोस्तदा । पुनः पुत्रो न जातो वै पूर्वजन्मविपाकतः ॥ १० ॥ प्रायश्चित्तं प्रवक्ष्यामि पूर्वपापविशुद्धये । गायत्रीलक्षजाप्येन तदर्थं वाटिकां पथि ॥ ११ ॥ कूपं प्रयत्नतः कुर्यात्तडागं विधिपूर्वकम् । होमं वै कारयेच्चैव विधिपूर्वं वरानने ॥ १२ ॥ पलपञ्चसुवर्णस्य दानं दद्याद्विशेषतः । दशवर्णा प्रदातव्या स्वर्णयुक्ता सहाम्बरा ॥ १३ ॥ भोजयेच्छतविप्रांस्तु यथाशक्ति सदक्षिणान् । एवं कृते न संदेहो रोगनाशो भवेदनु ॥ १४ ॥ पुत्रपौत्रा विवर्द्धन्ते मम वाक्यं न चान्यथा ॥ १५ ॥

इति श्रीकर्मविपाकसंहितायां कृत्तिकानक्षत्रचतुर्थचरणप्रायश्चित्त-
कथनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

रूपसे जन्म लिया और दिन २ इसके धनको खर्च करता था ॥ ८ ॥ मद्य पीकर वेश्याके प्रसंगसे इसने सब धन खर्च करडाला । हे प्रिये ! जब यह पुत्र युवावस्थाको प्राप्त हुआ ॥ ९ ॥ तभी पिताको शोकसागरमें डालकर मरगया फिर पूर्वकर्मके वश इसके कोई पुत्र नहीं हुआ ॥ १० ॥ अब इसके पूर्वकृत पापकी शुद्धिके लिये प्रायश्चित्त कहताहूँ । अपने पाप दूर करनेके लिये यह एक लाख गायत्रीका जप करावे और मार्गमें बाग लगवावे ॥ ११ ॥ उसमें विधिपूर्वक एक कुआँ और तालाव बनवावे और विधानपूर्वक वहां हवन करे ॥ १२ ॥ विशेष करके बीस तोले सुवर्ण और दशवर्णवाली गौ सोनेसे सींग मढाकर वस्त्र उढाय ब्राह्मणको दान करके दे ॥ १३ ॥ सौ ब्राह्मणोंको भोजन करावे और अपनी शक्तिके अनुसार उसको दक्षिणा दे ऐसा करनेसे निःसन्देह रोगोंका नाश होजाता है ॥ १४ ॥ महादेवजी पार्वतीसे कहते है और उसके पुत्र पौत्रोंकी वृद्धि होती है इस मेरे वचनको सत्य मानो ॥ १५ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां कृत्तिकानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

# अथ षोडशोऽध्यायः ॥ १६ ॥

## रोहिणीनक्षत्रफलम् ।

महादेव उवाच ॥ अथातः सम्प्रवक्ष्यामि ब्रह्मनक्षत्रजं फलम् । रोहिण्याः प्रथमे पादे यस्य जन्म च जायते ॥ १ ॥ तस्य कर्म पुरा देवि संचितं संब्रवीम्यहम् । अन्तर्वेद्यां द्विजः कश्चिद्गोपनामावसत्प्रिये ॥ २ ॥ पुण्यकर्मविहीनश्च चौरकर्मरतः सदा । सार्द्धं चौरेण भो देवि बहुद्रव्यमुपार्जितम् ॥ ३ ॥ परस्त्रीलम्पटो देवि स्वभार्यां परिमुच्य च । एवं बहुगते काले कालवश्यस्ततोऽभवत् ॥ ४ ॥ यमाज्ञया यमदूतैर्नरके नाम कर्दमे । वासयामास भो देवि षष्टिवर्षसहस्रकम् ॥ ५ ॥ नरकान्निःसृतो देवि कुक्कुटत्वं प्रजायते । ततो यातो महादेवि नरयोनिं च दुर्लभाम् ॥ ६ ॥ पाण्डुरोगेण संयुक्तः पुत्रो नैव प्रजायते । वेश्याः कन्याः प्रजायन्ते पुत्रस्य मरणं भवेत् ॥ ७ ॥

---

महादेवजी बोले—अब रोहिणी नक्षत्रके प्रथम चरणमे जन्म लेनेवाले मनुष्यके कर्मफलको कहता हूँ ॥१॥ हे देवि ! हे प्रिये ! अन्तरवेदीमें ( गंगायमुनाके मध्यदेशमे ) गोप नामक ब्राह्मण रहता था ॥ २ ॥ यह ब्राह्मण पुण्यकर्मसे हीन और चोरी करनेमे सदा लीन रहता था, हे देवि ! इसने चोरोंके साथ बहुतसा धन पैदा किया ॥ ३ ॥ हे देवि ! यह अपनी स्त्रीको छोडकर सदा पराई स्त्रियोमे रत रहता था, ऐसे बहुतकालके पीछे इसकी मृत्यु होगई ॥४॥ हे देवि ! यमराजकी आज्ञासे यमदूतोंने इसे कर्दम नामक नरकमे साठ हजार वर्षतक रक्खा ॥ ५ ॥ हे देवि ! जब नरकसे निकला तब मुरगेकी योनि पाई । हे महादेवि ! तिसके उपरान्त दुर्लभ मनुष्ययोनिको प्राप्त हुआ है॥६॥ अब यह पांडुरोगसे युक्त रहता है इसके पुत्र उत्पन्न नहीं होता । यदि पुत्र हुआ भी तो वह मरजाताहै और कन्या उत्पन्न होकर वेश्या होजाती हैं ॥७॥

तस्योपायं तु वक्ष्यामि तत्सर्वं शृणु मे प्रिये । ॐ नमः शिवाय मंत्रेण लक्षजाप्यं च कारयेत् ॥ ८ ॥ पार्थिवं तिलपिष्टेन गोमयेन तथा प्रिये । पूजयामास विधिवद्भक्तियुक्तेन चेतसा ॥ ९ ॥ होमं च कारयेद्देवि षडंशं दक्षिणां ततः । आचार्याय सुवर्णं च पूर्वपापविशुद्धये ॥ १० ॥ कूपं खात्वा ततो देवि वाटिकां चैव कारयेत् । एवं कृते न संदेहो रोगनाशो भवेदनु ॥ ११ ॥ कन्यका न भवेद्देवि पुत्रश्चैव प्रजायते । मृतवत्सा लभेत्पुत्रं चिरजीविनमुत्तमम् ॥ १२ ॥

इति श्रीकर्मविपाकसंहितायां रोहिणीनक्षत्रप्रथमचरणप्रायश्चित्त-कथनं नाम षोडशोऽध्यायः ॥ १६ ॥

## अथ सप्तदशोऽध्यायः ॥ १७ ॥

शिव उवाच ॥ द्वितीयचरणे देवि रोहिण्याः शृणु विस्तरम् । गंगाया उत्तरे कूले पुरं वैमानिकं शुभम् ॥ १ ॥

---

हे प्रिये ! अब दोष दूर होनेके सम्पूर्ण उपाय कहताहूँ तिनको तुम सुनो "ॐ नमः शिवाय" इस मंत्रका एक लाख जप करावै ॥ ८ ॥ और तिलकी पिट्ठीकी तथा गोबरके पार्थिव बनाकर भक्तिपूर्वक विधानसे उनका पूजन करावे ॥ ९ ॥ हे देवि ! फिर हवन करावै और अपने समस्त धनमेंसे छठे हिस्सेकी दक्षिणा दे, आचार्यको अपने पापोंकी शुद्धिके लिये सुवर्ण देवे ॥ १० ॥ हे देवि ! कुआँ खुदावे और बगीचा लगवावे ऐसा करनेसे निःसन्देह रोगमुक्त होजाता है ॥ ११ ॥ हे देवि ! फिर कन्या उत्पन्न नहीं होती वरन् पुत्र उत्पन्न होता है मृतवत्सादोष दूर होकर पूर्ण आयुष्ययुक्त पुत्र होता है ॥ १२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां रोहिणीनक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नाम षोडशोऽध्यायः ॥ १६ ॥

शिवजी बोले-हे देवि ! अब रोहिणीनक्षत्रके द्वितीयचरणमें उत्पन्न

वासुदेवश्च नाम्ना हि ब्राह्मणो वेदपारगः । लीलावती पवित्रा च तस्य पत्नी शुभा तथा ॥ २ ॥ युवती रूपसंपन्ना स्वैरिणी च सदा प्रिये । बहु द्रव्यं तया लब्धं परपुंसः प्रसंगतः ॥ ३ ॥ पापादुपार्जितं द्रव्यं भुज्यते पतिना सह । गङ्गायां मरणं तस्य विप्रस्य भार्यया सह ॥ ४ ॥ स्वर्गवासो हि दम्पत्योः षष्टिवर्षसहस्रकम् । ततः पुण्यक्षये जाते मर्त्यलोके वरानने ॥ ५ ॥ धनधान्यसमायुक्तो धर्मे मतिरथाधिका । पुत्राश्च बहवस्तेषां मरणं चैव जायते ॥ ६ ॥ कन्यका विविधास्तासां मृत्युश्चैव प्रजायते । पुनश्च तस्य हानिश्च बहुरोगः प्रजायते ॥ ७ ॥ तस्य शान्तिं प्रवक्ष्यामि यत्कृतं पूर्वजन्मनि । त्र्यंबकेति च मन्त्रेण लक्षजाप्यं च कारयेत् ॥ ८ ॥ देवस्य प्रतिमां कृत्वा पूजयेच्चैव शास्त्रतः । सुवर्णस्य शिवं कुर्यात् पलपञ्चप्रमाणकम् । धूपैर्दीपैश्च नैवेद्यैर्मन्त्रेणानेन पूजयेत् ॥ ९ ॥

---

होनेवाले फलको विस्तारके साथ सुनो. गंगाजीके उत्तरकिनारे वैमानिक नामक सुन्दर पुर था वहांपर वेदके मर्मको जाननेवाला वासुदेवनामक ब्राह्मण रहता था और लीलावती नामकी उसकी स्त्री सुंदर पवित्र आचरणोंसे युक्त थी ॥ १ ॥ २ ॥ हे प्रिये ! वह सुन्दर युवती सदा परपुरुषमें रत रहती इसीसे अन्य मनुष्योंद्वारा इसने बहुतसा धन प्राप्त किया ॥ ३ ॥ पापकर्मसे धनको एकत्र करके उसने अपने पतिके साथ भोगा फिर स्त्रीके साथ ब्राह्मणका शरीर गंगाजीमे छूट गया ॥ ४ ॥ इस कारण स्त्रीपुरुषोका स्वर्गमें साठ हजार वर्षतक वास हुआ, हे वरानने ! फिर पुण्यक्षय होनेपर मृत्युलोकमें जन्म हुआ है ॥ ५ ॥ यहांपर यह धर्ममें प्रीति रखनेवाला और धनधान्यसे युक्त है इसके अनेक पुत्र हुए और मर गये ॥ ६ ॥ तथा बहुतसी कन्या होकर मरगईं, इसके शरीरमें अनेक रोग उत्पन्न होते है और वारंवार इसको हानि उठानी पडती है ॥ ७ ॥ अब इसके पूर्वजन्ममे किये हुए कर्मोंकी शान्ति कहता हूँ "त्र्यम्बकं यजामहे०" इस मन्त्रका एक लाख जप करावै ॥ ८ ॥ और शास्त्रके अनुसार पार्थिवपूजन करै फिर बीस तोले सुवर्णकी शिवजीकी

ॐ ह्रौंह्रींजूंसः हराय नमः इति प्रतिमास्थापनं रौप्यपात्रे । ॐ ह्रौंह्रींजूंसः महेश्वराय नमः इति धूपकरणानि संगृह्य स्थापयेत् । ॐ ह्रौंह्रींजूंसः पिनाकधृते नमः इति प्रतिमां संस्पृश्यावाहनं च । आवाहये महादेवं देवदेवं सनातनम् । इमां पूजां गृहाण त्वं मम पापं व्यपोहतु ॥ १० ॥ ॐ ह्रौंह्रींजूंसः यंरंलंवंशंषंसंहंक्षंसोहं शंकरस्य सर्वेन्द्रियवाङ्मनश्चक्षुःश्रोत्रघ्राणा इहागत्य इह जीवस्थितिसुखं चिरं तिष्ठन्तु स्वाहा । इति प्राणप्रतिष्ठां विधाय शिवं ध्यायन्पूजयेत् । ॐ ह्रौंह्रींजूंसः पशुपतये नमः इति पञ्चामृतेन स्नानम् । ॐ ह्रौंह्रींजूंसः शिवाय नमः इति चन्दनादिभिः पूजनम् । ॐ ह्रौंह्रींजूंसः महादेवाय नमः इति विसर्जनम् । गोदानं च ततः कुर्यात्कृष्णां च कपिलां ततः । विप्राय वेदविदुषे सुवर्णदक्षिणां ततः ॥ ११ ॥

---

मूर्ति बनवाकर धूप, दीप, नैवेद्यादिद्वारा इन मंत्रोंसे पूजन करै ॥ ९ ॥ " ओह्रौंह्रींजूंसः हराय नमः " इस मंत्रसे चांदीके पात्रमें मूर्तिको स्थापित करै, " ओं ह्रौंह्रींजूंसः महेश्वराय नमः" इस मन्त्रसे धूपपात्रको आगे रक्खे, " ओं ह्रौंह्रींजूंसः पिनाकधृते नमः " इस मंत्रसे मूर्तिको छूकर आवाहन करे । "आवाहये महादेवं देवदेवं सनातनम् । इमां पूजां गृहाण त्वं मम पापं व्यपोहतु" और उक्त मंत्रको पढे । मंत्रार्थ—हे महादेव ! हे देवदेव ! हे सनातन ! इस मूर्तिमे आकर मेरी पूजाको ग्रहण करो और मेरे पापोंको दूर करो ॥ १० ॥ " ॐ ह्रौंह्रींजूंसः यंरंलंवं इत्यादि " मंत्रसे प्राणप्रतिष्ठा करके शिवजीका ध्यानपूर्वक पूजन करे । " ॐ ह्रौंह्रींजूंसः पशुपतये नमः " इस मंत्रद्वारा पंचामृतसे स्नान करावे । " ॐ ह्रौंह्रींजूंसः महादेवाय नमः " इस मंत्रसे चन्दनादि द्वारा पूजन करै । "ॐ ह्रौंह्रींजूंसः महादेवाय नमः" इस मंत्रसे विसर्जन करै, फिर वेदपाठी ब्राह्मणको सुवर्णकी दक्षिणाके साथ काली कपिला गौ दान करदे ॥ ११

प्रदक्षिणां ततः कुर्याद्विप्रस्येशानरूपिणः । शतसंख्यद्विजांश्चैव भोजयित्वा विसर्जयेत् ॥ १२ ॥ प्रयागे मकरे माघे पत्न्या सह वरानने । स्नानं कुर्याच्च भो देवि व्रतमेकादशीं चरेत् ॥ १३ ॥ एवं कृते न संदेहो रोगनाशश्च जायते । पुत्रं चापि लभेद्देवि चिरंजीविनमुत्तमम् ॥ १४ ॥ यद्येवं न प्रकुरुते सप्तजन्मस्वपुत्रकः ॥ १५ ॥

इति श्रीकर्मविपाकसंहितायां रोहिणीनक्षत्रद्वितीयचरण-
प्रायश्चित्तकथनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अथ अष्टादशोऽध्यायः ॥ १८ ।

ईश्वर उवाच ॥ गोमत्या उत्तरे कूले क्रोशद्वयप्रमाणतः ।
विष्णुदासेति विख्यातो देवीपुत्रो वरानने ॥ १ ॥
शङ्करे वै पुरे शुभ्रे तस्य भार्या च सुन्दरी ।
कर्कशा कुलटा सा वै पतिविद्वेषकारिणी ॥ २ ॥

---

और शिवरूपी ब्राह्मणकी प्रदक्षिणा करै । एवं सौ ब्राह्मणोंको भोजन कराय बिदा करे ॥ १२ ॥ हे वरानने ! हे देवि ! प्रयागराजमें मकरकी संक्रान्तिपर गंगायमुनाके संगममें स्त्रीके साथ स्नान करै और एकादशीका व्रत करै ॥ १३ ॥ हे देवि ! ऐसा करनेसे रोग दूर होजाते है और पूर्णायु श्रेष्ठ पुत्र प्राप्त होता है ॥ १४ ॥ यदि इस भाँतिसे शांति न करै तो सात जन्मतक पुत्ररहित रहता है ॥ १५ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां रोहिणीनक्षत्रद्वितीयचरण-
प्रायश्चित्तकथनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

शिवजी बोले—गोमतीनदीके उत्तर किनारे दो कोशकी दूरीपर सुन्दर शंकरपुर नामक नगरमें विष्णुदास नामसे प्रसिद्ध देवीका पुत्र ( भाट ) रहता था, उसकी स्त्री सुन्दरी, कर्कशा, कुलटा और पतिसे द्वेष करनेवाली थी ॥ १ ॥ २ ॥

शुश्रूषां कुरुते नैव श्वश्वोश्चैव वरानने । स्वधर्मनिरतो नित्यं शिवभक्तिपरायणः ॥ ३ ॥ कृषिं वै सोऽकरोच्चैव विप्राणां चैव सेवकः । पित्रोश्च परमो दासः सदा च प्रियभाषणः ॥ ४ ॥ एतस्मिन्नगरे देवि व्रती कश्चित्समागतः । भिक्षार्थमागतो द्वारे तया भिक्षा ददे न च ॥ ५ ॥ अपभ्रंशमवोचत्तु भिक्षुकं प्रति सुंदरी । विष्णुदासो गृहे नासीत्तद्दिने कुत्राचिद्गतः ॥ ६ ॥ एवं बहुगते काले तस्य मृत्युर्बभूव ह । भक्तत्वान्मम भो देवि यक्ष-लोके गतः स वै ॥ ७ ॥ त्रिंशद्वर्षसहस्राणि यक्षेण सह भोग-वान् ॥ ८ ॥ तस्य भार्या मृता क्रूरा श्वश्वोश्च दुःखदायिनी ॥ सा गता नरके घोरे रौरवे नाम्नि भामिनि ॥ ९ ॥ भुक्त्वा नर-कजं दुःखं पुनर्व्याघ्री बभूव ह । पुनः शृगाली वै जाता मानुषी च ततोऽभवत् ॥ १० ॥

---

हे देवि ! वह अपनी सासकी सेवा नहीं करती थी और विष्णुदास अपने धर्ममें तत्पर एवं शिवभक्त था ॥ ३ ॥ तथा खेती करनेवाला, ब्राह्मणोंका सेवक, माता-पिताका दास और सदा प्रिय बोलनेवाला था ॥ ४ ॥ हे देवि ! इस नगरमें कोई संन्यासी आकर विष्णुदासके द्वारपर भिक्षा मांगने लगा, उस समय विष्णुदास घर नहीं था उसकी स्त्रीने उस भिक्षुकसे दुर्वचन कहे और भिक्षा नहीं दी ॥ ५ ॥ ६ ॥ हे देवि ! ऐसे बहुत समयके उपरान्त विष्णु-दासकी मृत्यु होगई और मेरा भक्त होनेसे यक्षलोकको प्राप्त हुआ ॥ ७ ॥ विष्णुदासने तीस हजार वर्षतक यक्षोंके साथ भोग विलास किया ॥ ८ ॥ हे भामिनी ! इधर विष्णुदासकी स्त्री अपने क्रूरस्वभावसे सासको दुःख देनेवाली मरकर रौरवनामक नरकमें प्राप्त हुई ॥ ९ ॥ वहां नरकपीडाको भोग व्याघ्री हुई फिर शृगाली हुई, शृगालीकी योनिको भोगकर अब मानवी हुई है ॥ १० ॥

पुनर्विवाहिता सा वै मर्त्यलोके वरानने। वंध्या चैव विशालाक्षि पूर्वजन्मविपाकतः। रोगो बहु भवेद्देवि सुखं वै नोपजायते॥ ११॥ तस्याः पुण्यं प्रवक्ष्यामि सर्वपापप्रणाशनम्। स्वपतिं प्रत्यहं माघे स्नापयेदुष्णवारिणा॥ १२॥ श्वश्रूचरणयोः प्रातर्नमस्कुर्यात् प्रयत्नतः। अलाबुं नैव खादेत्तु षोडशाब्दप्रमाणतः॥ १३॥ माघे नियमतो देवि पतिना सह सुव्रते। स्नानं नियमतो देवि दीपं दद्याद्यथाविधि॥ १४॥ ततः कृत्वा सुवर्णस्य वृक्षं वै द्विपलस्य च। रौप्यां दशपलां देवि वेदीं शुभ्रां च कारयेत्॥ १५॥ वृक्षं तस्यां च संस्थाप्य कल्पवृक्षस्वरूपिणम्। पूजयित्वा ततो देवं शंखचक्रगदाधरम्॥ १६॥ सगणं देवदेवेशं वृषकेतुं वरप्रदम्। ततो वै पूजयेद्देवि विधिवच्चारुरूपिणम्॥ १७॥ वस्त्रकाञ्चनकेयूरैः कुण्डलाभ्यां विशेषतः। तद्वृक्षं वेदिकायुक्तं तस्मै विप्राय दापयेत्॥ १८॥

---

हे वरानने! हे विशालाक्षि! अब इसका विवाह हुआ सो पूर्वजन्मके दोषसे यह वंध्या हुई है, हे देवि! इसको बहुतसे रोग व्याकुल करते है अतः सुख नही मिलता है॥ ११॥ हे देवि! अब जिस कर्मसे इसके पूर्वजन्मकृत पाप नष्ट होजायँ उस पुण्यको कहता हूं—यह अपने पतिको माघ महीनेमें गरम जलसे स्नान करावै॥१२॥ और प्रतिदिन अपनी सासके चरणकमलोंमें प्रणाम करे, सोलहवर्षतक तोंबीको न खाय॥ १३॥ हे देवि! हे सुव्रते! माघके महीनेमें नित्यप्रति नियमसे पतिके साथ स्नान करै और हे देवि! अच्छी तरह विधानसे दीपदान करे॥ १४॥ हे देवि! आठ तोले सोनेका एक वृक्ष बनवावै और चालीस तोले चांदीकी सुन्दर वेदी बनवावै॥ १५॥ हे देवि! उस वेदीपर कल्पवृक्षस्वरूप उस सोनेके वृक्षको स्थापित कर शंख, चक्र, गदा और पद्मधारी विष्णुभगवान्का पूजन करै॥ १६॥ हे देवि! फिर गणोंके साथ देवताओंके ईश वृषभध्वज वरदाता सुन्दरस्वरूपवान् महादेवजीका विधिपूर्वक पूजन करे॥ १७॥ और वस्त्र, सुवर्ण, बाजूबंद,

अन्यान्विप्रान्वरारोहे भोजयेद्विविधै रसैः । पायसैर्मोदकैः शुभ्रैः षट्षष्टिप्रमितान्प्रिये ॥ १९ ॥ ततो गां कपिलां दद्यात्स्वर्णशृङ्गीं सनूपुराम् । सप्तम्यां रवियुक्तायां व्रतं कुर्यान्मम प्रिये ॥ २० ॥ गोपालस्य च मंत्रेण लक्षजाप्यं च कारयेत् । होमस्तत्तद्दशांशेन मार्जनं तर्पणं तथा ॥ २१ ॥ एवं कृते न संदेहः शीघ्रं पुत्रो ह्यवाप्यते । कन्यका नैव जायन्ते रोगश्चैव निवर्त्तते २२

इति श्रीकर्मविपाकसंहितायां रोहिणीनक्षत्रतृतीयचरणप्रायश्चित्तकथनं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## अथ एकोनविंशोऽध्यायः ॥ १९ ॥

शिव उवाच ॥ रोहिण्याश्चरणं देवि चतुर्थं सांप्रतं शृणु । यत्कृतं सञ्चितं पूर्वमिह जन्मनि तत्फलम् ॥ १ ॥

---

विशेषकर कुण्डलोंके साथ पूजन करै फिर सम्पूर्ण सामग्री और वेदीके साथ उस वृक्षको ब्राह्मणको दान करके दे ॥ १८ ॥ हे वरारोहे ! हे प्रिये ! फिर अनेकभांतिके रसो द्वारा निर्मित खीर लड्डू आदि पदार्थोंसे छयासठ ब्राह्मणोको भोजन करावै ॥ १९ ॥ हे प्रिये ! फिर सोनेसे सीग और चांदीसे खुर मढाय, गलेमे धूँघुरू बांध कपिला गौका दान करै और रविवारी सप्तमीका व्रत करे ॥ २० ॥ और सन्तानगोपालके मंत्रका एकलाख जप करावै, जपका दशांश हवन, हवनका दशांश मार्जन और मार्जनका दशांश तर्पण करै ॥ २१ ॥ ऐसा करनेसे शीघ्रही निःसन्देह पुत्र उत्पन्न होता है, कन्या नहीं होती और उस पुरुषके सम्पूर्ण रोग नष्ट होजाते हैं ॥ २२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां रोहिणीनक्षत्रतृतीयचरणप्रायश्चित्तकथनं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

हे देवि ! अब रोहिणीनक्षत्रके चतुर्थचरणमें जन्म लेनेवाले मनुष्योंका वह

बुद्धिशर्मा द्विजः कश्चिदन्तर्वेद्यां बभूव ह । पुरोहितो महाभ्रष्टः परपाके सदा रतः ॥ २ ॥ सा स्त्री पररता तस्य चञ्चलाचपला सदा । धनं च सञ्चितं तेन प्रतिग्राहेण वै प्रिये ॥ ३ ॥ मरणं तस्य वै जातं पश्चाद्भार्या मृता तु सा । गतोऽसौ नरके घोरे पूर्वजन्मविपाकतः ॥ ४ ॥ युगमेकं वरारोहे भुक्त्वा नरकयातनाम् । वृषयोनिं च सम्प्राप्तो रासभत्वं ततोऽलभत् ॥ ५ ॥ मानुषत्वं पुनर्यातो मध्यदेशे वरानने । अपुत्रता भवेद्देवि कन्यका चैव जायते ॥ ६ ॥ शरीरे रोग उत्पन्नः सुखं नैव प्रजायते । प्रायश्चित्तं ततो देवि प्रवक्ष्यामि वरानने ॥ ७ ॥ आकृष्णेति जपेन्मन्त्रं लक्षं वै विधिवत्प्रिये । होमं तु कारयेद्देवि तिलाज्यमधुना सह ॥ ८ ॥ कुण्डे वै वर्तुलाकारे दशांशं तर्पणं तथा । मार्जनं तु विशेषेण ततो ब्राह्मणभोजनम् ॥ ९ ॥

---

कर्मफल सुनो, जो इन्होंने पूर्वजन्ममें संचित किया है ॥ १ ॥ अन्तरवेदी ( गंगायमुनाके बीच ) में कोई बुद्धिशर्मा नामक ब्राह्मण होता हुआ वह पुरोहित होनेपर भी महाभ्रष्ट और सदा दूसरोंकी रसोई किया करता था ॥ २ ॥ इसकी स्त्री परपुरुषगामिनी, बिजलीसी सदा चपल रहती थी और हे प्रिये ! बुद्धिशर्माने प्रतिग्रह ( दान ) लेकर धनसंचय किया ॥ ३ ॥ कुछ समयके उपरान्त इसकी और इसकी स्त्रीकी मृत्यु होगई, तब पूर्वजन्ममें किये कर्मोंसे यह घोर नरकमें प्राप्त हुआ ॥ ४ ॥ हे वरारोहे ! वहाँ एक युगतक इसने नरकयंत्रणा भोगी फिर बैलकी योनि और गधेकी योनिको प्राप्त हुआ ॥ ५ ॥ हे वरानने ! अब मध्यदेशमें वह मनुष्य हुआ है हे देवि ! पूर्वजन्मके कर्मोंसे यहाँ इसके पुत्र नही हुआ वरन कन्यायें उत्पन्न हुई हैं ॥ ६ ॥ हे देवि ! हे वरानने ! इसके शरीरमें रोग उत्पन्न होते हैं और इसको सुख नहीं मिलता अत एव इसका प्रायश्चित्त तुमसे कहता हूँ ॥ ७ ॥ हे प्रिये ! 'आकृष्णेन०' इस मंत्रका विधानके साथ एक लाख जप करावे एवं तिल, घी और सहतके साथ गोलकुंडमें सावधानीसे होम करावे फिर दशांश तर्पण

दशवर्णा प्रदातव्या गुडधेनुस्तथा प्रिये। शय्यां दद्यात्प्रयत्नेन विधिवद्ब्राह्मणाय च ॥ १० ॥ भोजयेद्ब्राह्मणाञ्छुद्धान्वेदपाठ-रतान्प्रिये। सप्तसप्ततिसंख्यान्वै दीक्षिताञ्छुद्धमानसान् ॥ ११ ॥ प्रयागे माघमासे वै प्रातः स्नानं सभार्यया। एवं कृते न सन्देहः पुत्रस्तस्य प्रजायते ॥ १२ ॥ रोगः प्रमुच्यते तस्य वन्ध्यात्वं च प्रणश्यति। मृतवत्सा लभेत् पुत्रं कन्यका नैव जायते॥ १३॥

इति श्रीकर्मविपाकसंहितायां रोहिणीनक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः ॥ २० ॥

### मृगाशिरोनक्षत्रफलम्।

शिव उवाच ॥ अथ वक्ष्ये महादेवि चंद्रनक्षत्रजं फलम्। यत्कृतं मानुषैः पूर्वं तच्छृणुष्व वरानने ॥ १ ॥ मध्यदेशे पुरे शुभ्रे वसत्येको द्विजः खलु। ब्रह्मकर्मरतो नित्यं वेदवेदाङ्गपारगः ॥

---

और तर्पणका दशांश मार्जन करै तिसके उपरान्त ब्राह्मणको भोजन करावै ॥ ८ ॥ ९ ॥ दशवर्णवाली गौको तथा गुडकी धेनु बनवाकर विधानपूर्वक ब्राह्मणको दे और ब्राह्मणको शय्यादान करके दे ॥ १० ॥ हे प्रिये! फिर शुद्ध, वेदपाठी, दीक्षित पवित्र अन्तःकरणवाले सतहत्तर ब्राह्मणोंको भोजन करावे ॥ ११ ॥ और माघके महीनेमें श्रीप्रयागराजमें गंगायमुनाके संगममें स्त्रीके साथ स्नान करै ऐसा करनेसे निःसन्देह पुत्र उत्पन्न होता है ॥ १२ ॥ उसके समस्त रोग नष्ट होजाते हैं और स्त्रीका वंध्यापन जाता रहता है तथा फिर कन्या नहीं उत्पन्न होती पूर्णायु पुत्र उत्पन्न होता है ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां रोहिणीनक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

शिवजी बोले–हे महादेवि! हे वरानने!! अब मृगशिर नक्षत्रमे जन्म लेने-वाले मनुष्योंके पूर्वजन्मके कर्मफलको कहताहूँ तिसको सुनो ॥ १ ॥ सुंदर मध्यदेशके किसी पुरमें प्रतिदिन ब्रह्मकर्मको करनेवाला वेद वेदांगका ज्ञाता

प्रत्यहं पाठयामास चतुर्वेदान्सविस्तरान् । वेदशर्मा द्विजः ख्यातस्तस्य पत्नी सुशीलिका ॥ ३ ॥ प्रत्यहं पाठयेद्वेदं जीविकार्थं वरानने । लोहकारोऽभवन्मित्रं तस्य विप्रस्य सुव्रते ॥ ४ ॥ स्वर्णं शतपलं देवि स्थापितं लोहकर्मणा । तस्य विप्रस्य भवने मित्रत्वाच्च वरानने ॥ ५ ॥ लोहकारस्य मरणं ततः पूर्वं वरानने । न दत्तं तस्य वै स्वर्णं लोहकाराय भामिनि ॥ ६ ॥ तत्स्वर्णं प्रत्यहं देवि बुभोज सह भार्यया । एवं बहुगते काले मरणं ब्राह्मणस्य वै ॥ ७ ॥ सूर्यलोकोऽभवद्देवि यतः सूर्यस्य सेवकः । विंशद्वर्षसहस्राणि सूर्यलोकेऽवसत्प्रिये ॥ ८ ॥ ततः पुण्यक्षये जाते मर्त्यलोके च मानवः । पुत्रकन्याविहीनस्तु धनधान्यसमन्वितः॥ ९॥ लोहकारस्य स्वर्णं हि गृहीतं नैव दत्तवान् । तेन कर्मविपाकेन लोहकारः सुतोऽभवत् ॥ १० ॥

---

एक ब्राह्मण वसता था ॥ २ ॥ यह ब्राह्मण नित्य विस्तारके साथ चारो वेदोंका पाठ करता था इस कारण इसका नाम वेदशर्मा प्रसिद्ध होगया और इसकी स्त्रीका नाम सुशीला था ॥ ३ ॥ हे वरानने ! यह वेद पढाकरही अपनी आजीविका करता था हे सुव्रते ! एक लुहार इसका मित्र था ॥ ४ ॥ हे देवि ! हे वरानने !! लुहारने अपने मित्र वेदशर्माके घर चारसौ तोले सुवर्ण रख दिया॥५ हे वरानने ! हे भामिनी !! कुछ समयके पीछे लुहार मरगया वेदशर्माने लुहारका रक्खा हुआ सुवर्ण उसको नही दिया ॥ ६ ॥ हे देवि ! उस सुवर्णको व्यय करके प्रतिदिन वेदशर्मा अपनी स्त्रीके साथ भोगने लगा । ऐसे बहुत वर्ष बीतजानेपर ब्राह्मणकी मृत्यु होगई ॥ ७ ॥ हे देवि ! सूर्यनारायणका भक्त होनेके कारण वह सूर्यलोकको गया और बीस हजार वर्षतक सूर्यलोकमें वास किया ॥ ८ ॥ पीछे पुण्यक्षय होनेपर मृत्युलोकमे आकर मनुष्य हुआ यहांपर पुत्र और कन्याओंसे रहित, धनधान्यसे युक्त हुआ ॥ ९ ॥ उसने पूर्वजन्ममें लुहारका सुवर्ण लेकर नहीं दिया था इस कारण वह लुहार इसके पुत्ररूपसे

प्रीतिमांश्चैव सर्वेषां पितृमातृप्रियंकरः । पूर्वरूपं समापन्नस्तदा मृत्युर्भवेदनु ॥ ११ ॥ पुनः पुत्रस्य चाभावः कन्यका नैव जायते । तस्याऽघस्य विशुद्ध्यर्थं प्रायश्चित्तमतः शृणु ॥ १२ ॥ गात्रयीलक्षजाप्येन दुर्गायाः पूजनेन च । दशवर्णाप्रदानेन भूमिदानेन पार्वति ॥ १३ ॥ सर्वं पापं क्षयं याति पूर्वजन्मसमुद्भवम् । गयाश्राद्धं प्रयत्नेन तदर्थं नियतः प्रिये ॥ १४ ॥ प्रयागे मकरे मासि स्नानं कुर्यात्प्रयत्नतः । ततः पापं क्षयं याति पुनः पुत्रश्च जीवति ॥ १५ ॥ रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां मृगशिरोनक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नाम विंशोऽध्यायः ॥ २० ॥

---

उत्पन्न हुआ ॥ १० ॥ यह सबसे प्रीति करनेवाला माता पिताको प्रिय करनेवाला पुत्र जिस समय युवा अवस्थाको प्राप्त हुआ तभी इसकी मृत्यु होगई ॥ ११ ॥ फिर इसके कोई पुत्र वा कन्या नहीं हुई अब इसकी पापशुद्धिके लिये प्रायश्चित्त कहता हूं सो सुनो ॥ १२ ॥ हे पार्वती ! एक लाख गायत्री मंत्रका जप करावे और दुर्गादेवीका पूजन करै तथा दशवर्णवाली गौ और भूमिदान करके ब्राह्मणको दे ॥ १३ ॥ हे प्रिये ! पूर्वजन्ममें किये सब पापोके दूर करनेके लिये यह विधिपूर्वक गयाजीमें श्राद्ध करे ॥ १४ ॥ और माघमहीने प्रयागराजमें यत्नके साथ स्नान करे तो इसके समस्त पाप दूर होजायँगे और पुत्र उत्पन्न होकर पूर्णायु होगा ॥ १५ ॥ और निःसन्देह इसके सम्पूर्ण रोग नष्ट होजायँगे ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मृगशिरोनक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नाम विंशोऽध्यायः ॥ २० ॥

## अथैकविंशोऽध्यायः ॥ २१ ॥

शिव उवाच ॥ कान्यकुब्जे शुभे देशे निकटे नन्दने पुरे[1] । बोधशर्मा द्विजश्चासीत् पुरे तस्मिन्हि निर्धनः ॥ १ ॥ परान्नं भुज्यते नित्यं परप्रेष्यरतः सदा । तस्य पत्नी समाख्याता बाधमा नाम वै पुरा ॥ २ ॥ जन्मतो मरणं यावत्परान्नं भुज्यते च वै । नरके पतनं तेन तयोर्जातं प्रतिग्रहात् ॥ ३ ॥ बहुवर्षसहस्राणि प्रवासो नरकेऽभवत् । नरकान्निःसृतो देवि काकश्चैव मृगोऽभवत् ॥ ४ ॥ पुनर्वै मेषयोनिश्च पूर्वकर्मविपाकतः । ततो वै मानुषो जातो मध्यदेशे वरानने ॥ ५ ॥ रोगवान्नृत्यशीलश्च पुत्रकन्याविवर्जितः । परान्नं प्रत्यहं भुंक्ते श्राद्धं नैव कृतं पुरा ॥ ६ ॥ अतो वंशस्य विच्छेदः फलं चैव तु पूर्वजम् । शान्तिं तस्य प्रवक्ष्यामि पूर्वपापक्षयो यतः ॥ ७ ॥

---

शिवजी बोले-नन्दननामक पुरके समीप सुन्दर कान्यकुब्जदेशमें निर्धन बोधशर्मानामक ब्राह्मण बसता था ॥ १ ॥ यह प्रतिदिन दूसरोंका अन्न भोजन करता और दूसरोंका समाचार आदि पहुँचाता रहता था, इसकी स्त्रीका नाम बाधमा था ॥ २ ॥ हे देवि ! इसने जन्मसे लेकर मरनेतक दूसरोंकाही अन्न भोजन किया इस दोषसे यह स्त्रीसहित नरकमें प्राप्त हुआ ॥ ३ ॥ हजारों वर्षतक इसने नरककी पीडा भोगी फिर वहांसे निकलकर हे देवि ! काक और मृगकी योनि पाई ॥ ४ ॥ फिर इसको मेढेकी योनि मिली हे वरानने ! अब यह पूर्वजन्मके फलसे मध्यदेशमें मनुष्य हुआ है ॥ ५ ॥ यहांपर यह रोगी, नाचनेवाला, पुत्र कन्याओंसे रहित हुआ, यह अब भी पराये अन्नको खाता है इसने पूर्वजन्ममें श्राद्ध नही किया, इस कारण इसका वंश नहीं चला, अब इसके पूर्वजन्मके किये कर्मोंकी शान्ति कहताहूं जिससे यह समस्त

---

1 काश्चिच्च नन्दने पुरे इति वा पाठः ।

गायत्रीजातवेदोभ्यां द्विलक्षं जापयेच्छिवे। ततः पापविशुद्धिः स्याद्दशांशहवनं यदा ॥८॥ मार्जनं देवि कर्तव्यं ब्राह्मणान्भोजयेत्ततः। शतसंख्यान्द्विजाञ्छुद्धान्गृहस्थानपि भक्तितः ॥ ९ ॥ वृषमेकं प्रदद्यात्तु नीलवर्णविभूषितम्। एवं कृते न संदेहो रोगनाशो भवेद् ध्रुवम् ॥ पुत्रस्तु जायते देवि वन्ध्यात्वं च प्रणश्यति॥

इति श्रीकर्मविपाकसंहितायां मृगशिरोद्वितीयचरणप्रायश्चित्तकथनं नामैकविंशोऽध्यायः ॥ २१ ॥

---

## अथ द्वाविंशोऽध्यायः ॥ २२ ॥

शिव उवाच ॥ नर्मदादक्षिणे तीरे पुरीका नाम वै पुरी।
तस्यां पुर्यां विशालाक्षि कुलालो धनवानपि ॥ १ ॥
कुलालकर्मतो देवि बहु द्रव्यमुपार्जितम्।
कर्मचन्द्र इति ख्यातस्तस्य पत्नी च देवकी ॥ २ ॥

---

पापोसे छूट सकता है ॥ ६ ॥ ७ ॥ हे शिवे! गायत्री और जातवेदसे इन मंत्रोंका दो लाख जप करावै, तिसके पीछे पापशुद्धिके लिये दशांश हवन करे ॥ ८ ॥ हे देवि! फिर दशांश मार्जन और तर्पण करै तिस पीछे भक्तिपूर्वक गृहस्थ सौ ब्राह्मणोंको भोजन करावै ॥ ९॥ और एक नील बैलको भूषित करके दानकरै ऐसा करनेसे निःसन्देह रोगसे छूटजाता है, हे देवि! फिर पुत्र उत्पन्न होता है और उसकी स्त्रीका वंध्यात्वदोष दूर होजाता है ॥ १० ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मृगशिरोनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकविंशोऽध्यायः ॥ २१ ॥

---

शिवजी बोले–हे विशालाक्षि! नर्मदानदीके दक्षिणकिनारे पुरीकानामवाली पुरीमें एक धनवान् कुम्हार रहता था ॥ १ ॥ हे देवि! इसने कुम्हारके कर्ममेंही बहुतसा धन संग्रह किया कर्मचन्द्र इसका नाम और देवकी इसकी

स्वकर्मनिरतो नित्यं पात्रं कृत्वा दिनेदिने । एवं सर्वं व्ययं जातं वृद्धत्वं च ततोऽभवत् ॥ ३ ॥ वृद्धे जाते महादेवि दरिद्रत्वमजायत । शूर्पकारस्य वै द्रव्यं व्यवहारे गृहीतवान् ॥ ४ ॥ शतसंख्यमितं स्वर्णं व्ययं सर्वं कृतं शिवे । कुलालस्याभवन्मृत्युः पत्नी तस्य मृता पुरा ॥ ५ ॥ नर्मदायां महादेवि तावुभौ मृत्युमापतुः । तत्तीर्थस्य फलाद्देवि स्वर्गलोकं गतावुभौ ॥ ६ ॥ बहुवर्षसहस्राणि ताभ्यां भुक्तं शुभं फलम् । ततः पुण्यक्षये जाते मृत्युलोके च जायते ॥ ७ ॥ मानुषेऽपि शुभं जन्म धनधान्यसमन्वितः । पुनर्विवाहिता नारी पूर्वजन्मप्रसङ्गतः ॥ ८ ॥ ऋणसंबन्धतो देवि पुत्रो जातस्तदा शिवे । शूर्पकारो महादेवि वैरुद्धयं बालतः कृतम् ॥ ९ ॥ प्रत्यहं वसु यल्लब्धं तत्सर्वं च व्ययं तथा । द्यूतवेश्याप्रदानेन धनं सर्वं व्ययं गतम् ॥ १० ॥

---

स्त्रीका नाम था ॥ २ ॥ यह अपने काममें सदा लगा रहता और पात्रादि बना बनाकर बेंचा करता था इसी भांति वृद्धावस्थाको प्राप्त हुआ ॥ ३ ॥ हे महादेवि ! बुढापेमे यह धनहीन होगया तब इसने शूर्पकारसे सौ अशर्फियें कर्ज ली. हे शिवे ! इसने इनकोभी खर्च करडाला फिर कुम्हारकी मृत्यु होगई पहले इसकी स्त्री मरचुकी थी ॥ ४ ॥ ५ ॥ हे महादेवि ! यह दोनों स्त्री पुरुष नर्मदानदीपर मरनेके कारण तीर्थके फलसे स्वर्गलोकमें प्राप्त हुए ॥ ६ ॥ इन्होने हजारोंवर्ष स्वर्गके शुभफलको भोगा फिर पुण्य क्षीण होनेपर मृत्युलोकमें जन्म हुआ ॥ ७ ॥ यहांपर धनधान्यसे युक्त होकर सुन्दर मनुष्ययोनिको प्राप्त हो पूर्वजन्मके प्रसंगसे पूर्वजन्मकीही स्त्रीके साथ विवाह हुआ ॥ ८ ॥ हे देवि ! हे शिवे महादेवि ! ऋणके संबंधसे वही सूर्पकार इसके पुत्ररूपसे उत्पन्न हुआ और बालकपनसेही वैर लेनेके कारण मातापितासे विरोध करने लगा ॥ ९ ॥ प्रतिदिन इस बालकके हाथ जो धन लगता यह सबको उडादेता था, जुआ और वेश्याके प्रसंगमें इस बाल-

युवा जातो यदा देवि पुत्रः कन्यासमन्वितः । मरणं तस्य वै जातं पुनः पुत्रो न जायते ॥ ११ ॥ अथ शान्तिं प्रवक्ष्यामि शृणु सर्वं वरानने । गायत्रीलक्षजाप्येन त्र्यम्बकेन तथा प्रिये ॥ ॥ १२ ॥ कर्त्तव्यं कुण्डमुग्रं वै त्रिकोणं विधिवत्प्रिये । होमं च कारयेद्देवि दशांशं तर्पणं ततः ॥ १३ ॥ ततो वै कपिलां दद्याद्धेमशृंगीं सहाम्बराम् । एवं कृत्वा वरारोहे पुनः पुत्रः प्रजायते ॥ १४ ॥ शूर्पकारस्य प्रतिमां पलसप्तदशस्य तु । सुवर्णस्यैव भो देवि रचितां वस्त्रवेष्टिताम् ॥ १५ ॥ शूर्पं रौप्यस्य वै कुर्यात्पलषष्टिप्रमाणतः । प्रदद्याद्वेदविदुषे ब्राह्मणाय सुतेजसे ॥ १६ ॥ तस्योद्देशेन भो देवि ऋणबन्धात्प्रमुच्यते । पुत्रश्च जायते देवि नात्र कार्या विचारणा ॥ १७ ॥

इति श्रीकर्मविपाकसंहितायां मृगशिरोनक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

कने समस्त धन खर्च करडाला ॥ १० ॥ जिस समय यह युवा हुआ और इसके पुत्र कन्या हुए तभी यह मरगया फिर इसके पिताके कोई पुत्र नहीं हुआ ॥ ११ ॥ हे वरानने ! हे प्रिये ! अब इसकी शान्तिको कहता हूँ तुम सुनो, एक लाख गायत्री मंत्रका और एक लाख त्र्यंबकमंत्र ( महामृत्युंजयमंत्र ) का जप करावे ॥ १२ ॥ हे प्रिये ! हे देवि ! विधिके साथ उग्र त्रिकोण कुंडको बनवावे फिर इसमें हवन करै और दशांश तर्पण करे ॥१३॥ हे वरारोहे ! फिर सुवर्णसे सींगोंको मढाकर सुंदर वस्त्र उढाय कपिला गौका दान करै इस प्रकार करनेसे फिर पुत्र उत्पन्न होता है ॥ १४ ॥ हे देवि ! अडसठ तोले सुवर्णकी एक प्रतिमा सूर्पकारकी बनवावे और वस्त्रसे आच्छादित करै ॥ १५ ॥ और दो सौ चालीस ताले चांदीका एक सूर्प ( छाज ) बनवाकर तेजस्वी वेदपाठी विद्वान्को देवे ॥ १६ ॥ हे देवि ! ऐसा करनेसे वह सम्पूर्ण ऋणसे छूट जाता है और निःसन्देह पुत्र उत्पन्न होता है ॥ १७ ॥

इति श्रीकर्म० मृगशिरो० तृतीयचरण० नाम द्वाविंशोऽध्यायः ॥ २२ ॥

## अथ त्रयोविंशोऽध्यायः ॥ २३ ॥

शिव उवाच ॥ अथ वक्ष्याम्यहं देवि चतुर्थचरणं तथा । मृगशिरो नाम नक्षत्रं तस्य पूर्वं च सञ्चितम् ॥ १ ॥ अवंतीपुरतो देवि दक्षिणे क्रोशपञ्चके । पुरं तत्रैव विख्यातं केशवं नाम शोभनम् ॥ २ ॥ वसत्येको हि देवेशि ब्राह्मणो वेदपारगः । किशोरशर्मा विख्यातो मृतगेहे प्रभुज्यते ॥ ३ ॥ कष्टेनैव महादेवि व्ययं कुर्याद्दिनेदिने । धनं च बहुधा कृत्वा पुण्यकर्म न कारयेत् ॥४॥ ततो भ्रातुः कनिष्ठस्य भागं नैव ददाति सः । त्रिकोटिप्रमितं द्रव्यं स्वगृहे चैव सञ्चितम् ॥ ५॥ द्रव्यस्यैव विभागाय मरणं ब्राह्मणोपरि । कृतं भ्रात्रा कनिष्ठेन द्रव्यं तस्मै न दत्तवान् ॥ ६ ॥ एवं बहुतिथे काले किशोरः स मृतस्तु वै । गतो वै नरके घोरे युगानेकोनविंशतिम् ॥ ७ ॥ पुनः कर्मवशाद्देवि गर्दभत्वं च जायते । वृकयोनिस्ततो जातो मानुषत्वं भवेत्पुनः ॥ ८ ॥

---

शिवजी बोले-हे देवि ! मृगशिर नक्षत्रके चौथे चरणके पूर्वसंचित फलको कहताहूं ॥ १ ॥ हे देवि ! अवन्तीपुरीसे दक्षिणकी ओर पांचकोशपर सुन्दर केशवनामक पुर विख्यात है ॥ २ ॥ हे देवेशि ! वहां किशोरशर्म्मा नामक एक ब्राह्मण रहता था और प्रतिदिन यह मृतकोंके घर भोजन करता था ॥ ३ ॥ हे महादेवि ! बडे कष्टसे रहकर कृपणतासे वह अपना खर्च करता था ऐसे उसने बहुतसा धन संचय किया और उसमेंसे कोई पुण्यकर्म नही किया ॥ ४ ॥ उसने अपने छोटे भाईको हिस्सा न देकर तीन करोड रुपया अपनेही घरमे रखलिये ॥ ५ ॥ द्रव्य बांटनेके अर्थ किशोरशर्माके भाईने अपने प्राण दे दिये परन्तु किशोरशर्माने उसको धन नही दिया ॥ ६ ॥ बहुत समयके बीतजानेपर किशोरशर्माकी मृत्यु होगई और उन्नीस युगोंतक घोर नरकमें वास हुआ ॥ ७ ॥ हे देवि ! फिर कर्मवशसे यह गधेकी योनिको

कुबेर इति तन्नाम लीलानाम्नी च तस्य सा । पतिव्रता प्रिया देवि रङ्गकारश्च तां त्यजेत् ॥ ३ ॥ ब्राह्मणी नगरस्थैका तया प्रीतिं समुद्वहन् । त्यक्त्वा पतिव्रतां भार्यां ब्राह्मणीं प्रीतितोऽभजत् ॥४॥ द्रव्यं च सञ्चितं तेन रङ्गकारेण वै शिवे । भूमिमध्ये च तद्द्रव्यं कृतं तेनैव सुन्दरि ॥ ५ ॥ किञ्चिद्दानं कृतं तेन गङ्गायमुनसङ्गमे । मरणं तस्य वै जातं तस्य याता विवाहिता ॥ ६ ॥ तत्पुरे वर्तते बाला लीलानाम पतिव्रता । सत्यलोकं गतः सोऽपि लक्षद्वयमितं प्रिये ॥७॥ पुनः पुण्यक्षये जाते नरो भवति वै शिवे । मध्यलोके च विख्यातो धनधान्यसमन्वितः ॥ ८ ॥ पुत्राश्च बहवो जाताः कोऽपि तेषां न जीवति । शरीरे त्वामयोत्पत्तिः खञ्जत्वं चरणे तथा ॥९॥ ब्राह्मणीगमनं देवि पूर्वजन्मनि वै कृतम् । तेन पापेन भो देवि वंशो ह्यस्य न जीवति ॥ १०

---

एक रंगरेज बसता था वह सदा अनेक भाँतिके वस्त्रोको रंगकर अपने धर्मको पालन करता था ॥ २ ॥ हे देवि ! रंगरेजका कुबेर नाम था और उसकी स्त्रीका लीला नाम था, कुबेरने अपनी पतिव्रता प्यारी स्त्रीको त्याग दिया ॥ ३ ॥ और अपनी स्त्रीको छोड अवंतीपुरीमे रहनेवाली एक ब्राह्मणीके साथ प्रीति करने लगा ॥ ४ ॥ हे शिवे ! हे सुन्दरि ! कुबेरने बहुतसा द्रव्य संचय करके पृथ्वीमें गाड दिया ॥ ५ ॥ पीछे गंगा यमुनाके संगममे उसने कुछ दान किया और मृत्युको प्राप्त हुआ फिर उसकी विवाहिता स्त्री भी मरगई ॥ ६ ॥ हे प्रिये ! अवन्तीपुरीमेही लीला सती होगई और दो लाख वर्षतक उसने सत्यलोकमें वास किया ॥ ७ ॥ पुण्यके क्षय होनेपर हे शिवे ! वह रंगरेज मध्यदेशमें धनधान्यसे युक्त होकर विख्यात हुआ ॥ ८ ॥ वहां इसके पुत्र तो अनेक उत्पन्न हुए परन्तु जिया एक भी नहीं, शरीरमे रोग उत्पन्न होगये और पॉवसे लंगडा होगया ॥ ९ ॥ हे देवि ! इसने पूर्व जन्ममे ब्राह्म-

अस्य शान्तिं प्रवक्ष्यामि तच्छृणुष्व वरानने । दशायुतं जपेद्देवि गायत्रीं वेदमातरम् ॥ ११ ॥ हवनं तद्दशांशेन तर्पणं मार्जनं तथा । षडंशं चैव दानं वै दद्याद्वेदविदे शिवे ॥१२॥ ब्राह्मणान् भोजयेत्पश्चान्नवतिं पायसेन च । गां चैव विधिवद्दद्यात्ताम्रवर्णां सुभूषिताम् ॥ १३ ॥ एवं कृते न संदेहो बहुपुत्रश्च जायते । रोगस्यैव विमुक्तिः स्यान्नात्र कार्या विचारणा ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायां रौद्रनक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## अथ पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीशिव उवाच ॥ शृणु देवि वरारोहे नृणां वै पूर्वजन्मानि ।
यत्कृतेन महाघोरे नरके परिपच्यते ॥ १ ॥

---

णीके साथ भोग किया था इस कारण इसके वंश नही चलता है ॥ १० ॥ हे वरानने ! हे देवि ! अब इसकी शान्ति कहताहूँ तिसको तुम सुनो, यह वेदमाता गायत्रीका एक लाख जप करावे ॥ ११ ॥ हे शिवे ! फिर जपका दशांश हवन, हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै तथा अपने धनका छठा भाग वेदके जाननेवाले ब्राह्मणको दान करके दे ॥ १२ ॥ और नव्वे ब्राह्मणोको खीरका भोजन करावे फिर लाल गौको भूषित करके विधिपूर्वक दान करै ॥ १३ ॥ ऐसा करनेसे निःसन्देह अनेक पुत्र उत्पन्न होते है और रोगसे मुक्त होजाता है इसमें कुछ विचार नहीं करना चाहिये ॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायाम् आर्द्रानक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

शिवजी बोले-हे देवि ! हे वरारोहे ! अब मनुष्योंके पूर्वजन्मके कर्मफल

उज्जयिन्यपरद्वारे वैश्यो वसति भाग्यवान् । धनधान्यसमायुक्तः स्वधर्मनिरतः सदा ॥ २ ॥ एवमर्धवयो जातं दरिद्रत्वं ततोऽभवत् । व्यापारार्थं ततो देवि विप्रस्वर्णं गृहीतवान् ॥ ३ ॥ पलविंशप्रमाणेन व्ययं यातं वरानने । ततो वैश्यस्य मृत्युर्वै भार्यया सहितस्य वै ॥४॥ स्वर्गं यातस्ततो देवि नर्मदामरणादपि । षष्टिवर्षसहस्राणि स्वर्गस्यैव शुभं फलम् ॥५॥ भुक्तं बहुविधं देवि भार्यया सहितेन वै । ततः पुण्यक्षये जाते पुनर्मर्त्यौ बभूवतुः ॥६॥ धनधान्यसमायुक्तौ पुत्रकन्याविवर्जितौ । रुग्णौ दुर्बलगात्रौ च पूर्वकर्मफलेन तौ ॥ ७ ॥ ऋणसम्बन्धतो देवि विप्रः पुत्रोऽभवत्तदा । ऋणं यावत्प्रमाणं वै गृहीतं पूर्वजन्मनि ॥ ८ ॥ तावन्मात्रं गृहीत्वा तु ततो वै मरणं भवेत् । पुनः पुत्रो न तस्यैव विंशद्वर्षे गते सति ॥ ९ ॥ तस्य दानं शृणुष्वादौ पूर्वपापक्षयो यतः । गृहवित्ताष्टमं भागं ब्राह्मणाय समर्पयेत् ॥१०॥

---

सुनो जिसके करनेसे वह घोर नरकमें पोग भोगते है ॥ १ ॥ उज्जैन नगरीके पश्चिमी द्वारपर एक भाग्यशाली वैश्य बसता था, वह धन धान्यसे युक्त और सदा अपने धर्ममें रत रहता था ॥ २ ॥ हे देवि ! इस भांति जब आधी आयु बीत गई तब वह वैश्य निर्धन होगया फिर उसने व्यापारके लिये ब्राह्मणसे अस्सी तोले सोना कर्ज लिया, हे वरानने ! जब वहभी खर्च होलिया तब वह वैश्य स्त्रीके साथ मृत्युको प्राप्त हुआ ॥ ३ ॥ ४ ॥ हे देवि ! नर्मदानदीमें मरनेके फलसे साठ हजार वर्षतक स्वर्गके सुन्दर फलको भोगके ॥ ५ ॥ अनेक प्रकारसे भार्याके साथ उसने भोगा फिर पुण्यके क्षय होनेपर दोनों मनुष्ययोनिको प्राप्त हुए ॥ ६ ॥ पूर्वजन्मके कर्मफलसे दोनों स्त्री-पुरुष धनधान्यसे युक्त, पुत्रकन्याओंसे रहित, रोगी और दुर्बल शरीरवाले हैं ॥ ७ ॥ हे देवि ! ऋणके सम्बन्धसे यह ब्राह्मण इसके पुत्ररूपसे उत्पन्न हुआ और जितना धन पूर्व जन्ममें दिया था ॥ ८ ॥ उतनाही लेकर उड़ादिया फिर मरगया, इसके उपरान्त बीस वर्ष होगये और अबतक कोई पुत्र नहीं हुआ ॥ ९ ॥ अब प्रथम उसका दान सुनो

स्वर्णपञ्चपलेनैव पुष्पं च कमलाकृति। प्रदद्याद्वेदविदुषे पूर्वपापक्षयो भवेत् ॥११॥ पुनः पुत्रः प्रसूयेत नात्र कार्या विचारणा॥१२॥

इति श्रीकर्मविपाकसंहितायां रौद्रनक्षत्रद्वितीयचरणप्रायश्चित्त-कथनं नाम पंचविंशोऽध्यायः ॥ २५ ॥

---

## अथ षड्विंशोऽध्यायः ॥ २६ ॥

श्रीशिव उवाच ॥ अवन्ती नगरी नाम्ना ततः क्रोशद्वयोपरि । अग्निकोणे महादेवि मङ्गलं नाम वै पुरम् ॥ तस्मिन्ग्रामे वसत्येको ब्राह्मणो द्यूततत्परः ॥ १ ॥ मद्यपानरतो नित्यं चौर-विद्यासु तत्परः । परस्त्रीलंपटो देवि वेश्यायां निरतः सदा ॥२॥ प्रत्यहं कुरुते देवि द्विजरूपो नराधमः । चौरत्वाद्द्रव्यमुत्पाद्य नैव दानं समाचरत् ॥ ३ ॥

---

जिसके करनेसे पूर्वकृत पाप नष्ट होजाय, यह अपने घरका आठवां भाग धन ब्राह्मणको दान करके दे ॥ १० ॥ और बीस तोले सुवर्णका कमलके सदृश पुष्प बनवाकर वेदपाठी ब्राह्मणको देवे तो पूर्वजन्मके पाप नष्ट होजाते हैं॥११॥ और फिर निःसन्देह पुत्र उत्पन्न होताहै ॥ १२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायाम् आर्द्रानक्षत्रद्वितीयचरण-प्रायश्चित्तकथनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

शिवजी बोले-हे महादेवि ! उज्जैन नगरीके अग्निकोणमें दो कोशपर एक मंगलपुर ग्राम है वहां एक ज्वारी ब्राह्मण बसता था ॥ १ ॥ वह प्रतिदिन मद्य पीता, चोरी करता, पराई स्त्रियोंसे दुराचरण करता और वेश्याओंसे रमण करता था ॥ २ ॥ हे देवि ! प्रतिदिन यह ब्राह्मणरूपी नराधम चोरीसे धन-संचय करता और उसमेंसे कुछभी दान नहीं करता था ॥ ३ ॥

एवं बहु धनं जातं तस्य मृत्युर्बभूव ह । नरके पातयामास यमदूतो यमाज्ञया ॥ ४ ॥ सप्ततिर्वै सहस्राणि रौरवे परिपच्यते । महाकष्टं लभेद्देवि सूचीमुखघुणादिभिः ॥ ५ ॥ पुनः कर्मवशाद्देवि नरकान्निर्गतो यदा । बिडालकाकयोनिं च तदा प्राप्तो द्वयं हि च ॥ ६ ॥ योनिद्वयफलं भुक्तं मानुषत्वं ततोऽलभत् । मध्यदेशे वरारोहे ततः पीडा महत्यति ॥ ७ ॥ वंशच्छेदो भवेद्देवि पूर्वकर्मविपाकतः । तस्योपरि विशालाक्षि शान्तिं शृणु वरानने ॥ ८ ॥ गायत्रीजातवेदोभ्यां त्र्यम्बकेण यथाविधि । जपं वै कारयेद्देवि हवनं तर्पणं तथा ॥ ९ ॥ लक्षत्रयं जपेद्देवि पूर्वपापविशुद्धये ॥ १० ॥ ततो वै पूजयेद्देवि तुलसीं विष्णुरूपिणीम् । पूजयेद्विविधैश्चान्नैर्धूपनैवेद्यदीपकैः ॥ ११ ॥ भूमिदानं ततो देवि यथाशक्ति प्रदापयेत् ॥ १२ ॥

---

इस भांति बहुतसा धन संग्रह करके यह मरगया तब यमराजकी आज्ञासे यमदूतने इसे नरकमे डाल दिया ॥४॥ हे देवि ! सत्तर हजार वर्षतक इसने रौरव नरकमे वास किया वहां सुईके तुल्य मुखवाले कीडोने इसको महाकष्ट दिया ॥५॥ हे देवि ! कर्मवश जब नरकमेसे निकला तब बिल्लीकी योनि मिली, बिल्लीकी योनि भोगकर काककी योनिको प्राप्त हुआ ॥ ६ ॥ हे वरारोहे ! उपरोक्त दोनों योनिमें पीडा भोगकर मध्यदेशमें मनुष्ययोनिको प्राप्त हुआ है और यहां वडे कष्ट भोगता है ॥ ७ ॥ हे देवि ! हे विशालाक्षि ! हे वरानने ! पूर्वकर्मसे ही इसका वंश नहीं चलता है, अब उसकी शान्तिको सुनो ॥ ८ ॥ गायत्री, जातवेदसे और त्र्यंबक मंत्रका पूर्वकृत पापोंकी शुद्धिके लिये तीन लाख जप करावे और जपका दशांश हवन, तर्पण, मार्जन विधिपूर्वक करै ॥ ९ ॥ १० ॥ तिसके उपरान्त विष्णुस्वरूपवाली तुलसीदेवीका अनेक प्रकारके अन्नसे तथा धूपदीपादि नैवेद्यसे पूजन करे ॥ ११ ॥ हे देवि ! फिर अपनी शक्तिके अनुसार

एवं कृते महादेवि सर्वरोगक्षयो भवेत् ।
पुत्रश्च जायते देवि वन्ध्यात्वं च प्रणश्यति ॥ १३ ॥
इति श्रीकर्मविपाकसंहितायां रौद्रनक्षत्रतृतीयचरणप्रायश्चित्त-
कथनं नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

## अथ सप्तविंशोऽध्यायः ॥ २७ ॥

शिव उवाच ॥ अथातः संप्रवक्ष्यामि शृणु देवि यथा पुरा ।
नरेण यत्कृतं पूर्वं पूर्वजन्मनि किल्बिषम् ॥ १ ॥ अवन्ती-
पुरतोऽवात्सीच्छूद्र एको महाधनः । कृषिकर्मरतश्चैव क्रय-
विक्रयतत्परः ॥ २ ॥ व्यापारे सर्ववस्तूनि च्छागमेषपशूनि च ।
सततं भोक्ष्यते देवि च्छागमांसं विशेषतः ॥ ३ ॥ विक्रयः
क्रियते च्छागमेषयोर्गृहवासिनोः । गजमश्वं तथा रत्नं वस्त्राणि
विविधानि च ॥ ४ ॥ एकदा सूर्यग्रहणं दृष्टं तेन वरानने ।
गोसहस्रं कृतं दानं भार्यया सहितेन वै ॥ ५ ॥

---

पृथ्वीका दान करै ॥१२॥ हे महादेवि! ऐसा करनेसे समस्त रोग नष्ट होजाते हैं, हे देवि! फिर पुत्र उत्पन्न होता है और स्त्रीका वंध्यात्वदोष दूर होजाताहै॥
इति श्रीकर्मविपाकसंहिताभाषाटीकायाम् आर्द्रानक्षत्रतृतीयचरण-
प्रायश्चित्तकथनं नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

शिवजी बोले-हे देवि! सुनो अब आर्द्रानक्षत्रके चौथे चरणमें जन्म लेने-वाले मनुष्योंके पूर्वजन्ममें किये पापोंको कहताहूं ॥ १ ॥ उज्जैन नगरीमें एक महाधनी शूद्र रहता था यह खेती तथा क्रयविक्रयके कामको करता था॥ २ ॥ हे देवि! वह सब वस्तुका व्यापार करता तथा बकरा, मेंढा आदि पशुओंका व्यापार करता था और निरन्तर बकरेके मांसको खाया करता था ॥ ३ ॥ और अपने घरमें रखकर बकरा, मेंढा, हाथी, घोडा, रत्न एवं अनेक प्रकारके वस्त्रोंको बेंचा करता था ॥ ४ ॥ हे वरानने! एक समय अपनी स्त्रीके साथ

नर्मदायां विशालाक्षि स्वर्णवस्त्रयुतं तथा । सुखं च बहुधा भुक्त्वा मृत्युलोकसमुद्भवम् ॥ ६ ॥ स्वर्णकारस्य वै द्रव्यं व्यवहारनिमित्तकम् । गृहीतं चैव नो दत्तं ततः शृणु वरानने ॥ ७ ॥ ततो बहुगते काले शूद्रस्य मरणं ह्यभूत् । ततोऽसौ नरके घोरे वर्षलक्षद्वयं तथा ॥ ८ ॥ तत्रैव बहुधा पीडा भुक्त्वा चैव स्वकर्मतः । पुनर्जातो मृत्युलोके काकश्च महिषो बकः ॥ ९ ॥ मानुषत्वं ततो देवि कुले महति वै शुभे । स्वर्णकारस्य द्रव्यं वै गृहीतं पूर्वजन्मनि ॥ १० ॥ न दत्तं वै ऋणं देवि पुत्रस्य मरणं ततः । युवरूपो यदा जातो व्याधिग्रस्ततनुस्तदा ॥ ११ ॥ देहार्धे वातरोगस्य पुत्रस्य मरणं ततः । भार्याद्वयसमायुक्त एका प्रीतिमती भवेत् ॥ १२ ॥ पूर्वजन्मनि यत्कर्म शुभं वाप्यशुभं तनोः । मृत्युलोके मनुष्येण भुज्यते नात्र संशयः ॥ १३ ॥

---

नर्मदा नदीपर सूर्यग्रहणके समय इस शूद्रने हजार गौओंको वस्त्र अलंकारोंके साथ दान किया, हे विशालाक्षि ! उससे इसने मृत्युलोकके विविध प्रकारके सुख भोगे ॥ ५ ॥ ६ ॥ हे वरानने ! इतना करकेभी व्यवहारमें सुनारका द्रव्य लेकर नहीं दिया तिसके फलको सुनो ॥ ७ ॥ बहुत समय बीतजानेपर उस शूद्रकी मृत्यु हुई तब उसने दो लाखवर्षतक घोर नरकमें वास किया ॥ ८ ॥ और वहां अपने कर्मोंसे उसने अनेक प्रकारके कष्ट सहे फिर मृत्युलोकमें आकर क्रमसे काक, भैंसा और बगलेकी योनिको प्राप्त हुआ ॥ ९ ॥ हे देवि ! फिर अच्छे कुलमें मनुष्ययोनि मिली, सुनारका द्रव्य जो पूर्वजन्ममें लेकर ॥ १० ॥ नहीं दिया था इस कारण उस ऋणसे इसका पुत्र मरगया जब युवा होनेपर रोगोंसे युक्त हो गया ॥ ११ ॥ वह रोग आधे शरीरमें वातका हो गया था फिर इसका पुत्र मरा, इसके दो स्त्रियें थीं उनमेंसे एक अधिक प्यारी थी ॥ १२ ॥ मनुष्य अपने शरीरसे जो पूर्वजन्ममें शुभ या अशुभ कर्म करता है इसको निःसन्देह मृत्युलोकमें भोगता है ॥ १३ ॥

अथ ते सम्प्रवक्ष्यामि पापनिग्रहहेतवे। गायत्रीलक्षजाप्येन हरिवंशश्रवेण च ॥ १४ ॥ रथाश्ववस्त्रदानेन ग्रामदानेन वै तथा। तिलधेनुप्रदानेन सर्वपापक्षयो भवेत् ॥ १५ ॥ स्वर्णमुद्रासहस्रस्य प्रतिमां कारयेद्बुधः। पूर्वोक्तेन विधानेन पूजयित्वा प्रदापयेत् ॥ १६ ॥ पार्थिवं पूजयामास तथा गोमयनिर्मितम्। लक्षत्रयप्रमाणं च पञ्चगव्येन पूजयेत् ॥ १७ ॥ पञ्चामृतेन वा देवि गोदुग्धेनैव पूजयेत्। तथा च विविधैर्मन्त्रैः षडङ्गैर्वेदसंभवैः ॥ १८ ॥ अर्द्धाङ्गं मुच्यते रोगो नात्र कार्या विचारणा। वन्ध्यात्वं प्रशमं याति लभेत्पुत्रं न संशयः ॥ १९ ॥ मृतवत्सा लभेत्पुत्रं चिरजीविनमुत्तमम् ॥ २० ॥

इति श्रीकर्मविपाकसंहितायां रौद्रनक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

अब उसके पाप नष्ट होनेके उपाय कहता हूं। गायत्रीका एक लाख जप करावै और हरिवंश पुराणकी कथा सुनै ॥ १४ ॥ और रथ, घोडा, ग्राम, तिलधेनुका दान करै ॥ १५ ॥ बुद्धिमान् मनुष्य हजार अशर्फियोंकी सोनेकी मूर्ति बनवावे और पूर्वोक्त रीतिसे पूजन करके ब्राह्मणको दान करै ॥ १६ ॥ फिर मृत्तिकाके और गौके गोबरके तीन लाख पार्थिव बनाकर पंचगव्यसे पूजन करे ॥ १७ ॥ हे देवि ! पीछे पंचामृतसे पूजन कर गौके दूधसे पूजन करै और पूजनमें वेदवेदांगके मंत्र पढै ॥ १८ ॥ ऐसा करनेसे आधे शरीरका वातरोग नष्ट हो जाता है और निःसन्देह उसकी स्त्रीका वंध्यात्व दोष दूर होकर पुत्र उत्पन्न होता है ॥ १९ ॥ और मृतवत्सा स्त्रीभी चिरंजीवी उत्तम पुत्रको प्राप्त करती है ॥ २० ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायाम् आर्द्रानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

## अथाष्टाविंशोऽध्यायः ॥ २८ ॥

### पुनर्वसुनक्षत्रफलम् ।

ईश्वर उवाच ॥ ये मानुषाः परद्रव्यं हरन्ति सततं प्रिये । ते नरा दुःखितां यान्ति रोगेणैव प्रपीडिताः ॥ १ ॥ ऋणं यस्य गृहीतं वै तदृणं न ददाति च । ऋणसम्बन्धतो देवि पुत्रो भवति दारुणः ॥ २ ॥ तस्य गात्रं च वै भग्नं धातुच्छिन्नं तथा नरः । कन्या हता तु पूर्वं हि फलं भवति तादृशम् ॥ ३ ॥ अवन्तीपुरतो देवि ख्यातं चैव सुशोभनम् । क्रोशमात्रं ततो देवि चोत्तरे नगरं तथा ॥ ४ ॥ वसन्तपुरमित्याख्यं वसन्ति बहवो जनाः । नाम्ना तन्मध्य आभीरो नन्दनो वसति प्रिये ॥५॥ तस्य भार्या तु विख्याता नाम्ना वै सुन्दरी प्रिये । सर्वथा च महादेवि कृपणः सह भार्यया ॥ ६ ॥ मित्रं तस्य महादेवि ब्राह्मणो वेदपारगः । स तिष्ठति पुरीमध्ये धनं च बहु संचितम् ॥ ७ ॥ प्रत्यहं च परान्नेन भोजनं कुरुते नरः। यदा स प्रौढतां यातस्तां पुरीं च तदाऽत्यजत् ॥ ८ ॥

---

शिवजी बोले-हे प्रिये ! जो मनुष्य सदा दूसरोंके धनको हरते हैं वही मनुष्य दुःख पाते और सदा रोगी रहते है ॥ १ ॥ जो ऋण लेकर नही देते है उनके उस ऋणसे दारुण ( दुःखद ) पुत्र उत्पन्न होता है ॥ २ ॥ पूर्वजन्ममे कन्याका वध करनेसे मनुष्यका शरीर भग्न हो जाता है और धातु क्षीण होती रहती है ॥ ३ ॥ हे देवि ! उज्जैन नगरीसे उत्तरकी ओर एक कोशपर सुन्दर वसन्तपुर ग्राम है, हे प्रिये ! वहाँ बहुतसे मनुष्योंका बास है और नन्दन अहीर बसता है ॥ ४ ॥ ५ ॥ हे प्रिये ! हे महादेवि ! इसकी स्त्रीका नाम सुन्दरी था यह दोनो ( नंदन और सुन्दरी ) बडे कृपण थे ॥ ६ ॥ हे महादेवि ! इस नन्दन अहीरका मित्र एक वेदपाठी ब्राह्मण उज्जैन पुरीमे था और यह ब्राह्मणसे बहुतसा धन पैदा किया था ॥ ७ ॥ यह

आगतो मित्रपार्श्वे वै वसन्ते वै पुरे शुभे । आभीरो हि गृहे वासं मित्रत्वाद्दत्तवान्स्वयम् ॥ ९ ॥ बहुकालमवात्सीत्स तत्प्रीत्या सुरसुन्दरि । आभीरेण ततो देवि स्वर्णं दृष्ट्वा प्रहर्षितः ॥ १० ॥ तस्य स्वर्णं समाहृत्य स्वगृहे स्थापितं तदा । ब्राह्मणेन महत्कष्टं कृतं द्रव्यस्य शोकतः ॥ ११ ॥ महाशोकसमायुक्तः काश्यां चैव समागतः । शरीरं च ततस्त्यक्त्वा स्वर्णशोकेन वै द्विजः ॥ १२ ॥ शूद्रेणैव महादेवि तस्य स्वर्णं प्रभुज्यते । ततो बहुगते काले मरणं तस्य चाभवत् ॥ १३ ॥ नरके पातयामासुर्यमदूता यमाज्ञया । षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ १४ ॥ ततस्तेन तु प्रेतत्वं भुक्तं वर्षसहस्रकम् । उलूकत्वं वरारोहे कौशिक्या निकटे ततः ॥ १५ ॥ सरय्वा उत्तरे कूले मानुषत्वं ततोऽभवत् । मध्यदेशे च भो देवि पत्न्या सह वरानने ॥ १६ ॥

---

ब्राह्मण सदा दूसरोका अन्न भोजन करता था जब बूढा हुआ तब अपनी नगरीको छोड ॥ ८ ॥ सुन्दर वसन्तपुरमें अपने मित्र नन्दन अहीरके घर आगया, नन्दनने भी मित्र जानकर अपने घरमें स्थान दिया ॥ ९ ॥ हे सुरसुन्दरि ! हे देवि ! इस प्रकार अहीरकी प्रीतिसे यह ब्राह्मण बहुत समयतक उसके घर रहा इस ब्राह्मणके पास सोना देखकर अहीर बडा प्रसन्न हुआ ॥ १० ॥ और उस ब्राह्मणके सोनेको हरण करके नन्दन अहीरने अपने घरमे रख लिया, सुवर्ण हरजानेके शोकसे ब्राह्मणको महाकष्ट हुआ ॥ ११ ॥ इस महाशोकसे व्याकुल होकर ब्राह्मण काशीजीको चलागया, और वहां सुवर्णके शोकसे अपने शरीरको छोड दिया ॥ १२ ॥ हे महादेवि ! इधर नन्दन अहीरने उस ब्राह्मणके सोनेको भोगा ऐसे बहुत समय बीतनेपर नन्दनकी मृत्यु होगई ॥ १३ ॥ तब यमराजकी आज्ञासे यमदूतोने नन्दनको नरकमे डाल दिया, वहां साठ हजार वर्षतक इसने नरककी पीडा भोगी ॥ १४ ॥ तिससे उपरान्त एक हजार वर्षतक प्रेतकी योनि भोगी, हे वरारोहे ! फिर कौशिकी नदीके किनारे उल्लूकी योनिको प्राप्त हुआ ॥ १५ ॥ हे देवि ! हे वरानने ! उसके पीछे सरयू नदीके उत्तर किनारे मध्यदेशमें स्त्रीके

धनधान्यसमायुक्तो राजसेवासु तत्परः। जातः पुनर्वसौ देवि प्रथमे चरणे खलु ॥ १७ ॥ पूर्वजन्मनि भो देवि दत्तवान्गोशतं सतः। भूपतित्वं ततो देवि धनाढ्यत्वं भवेत्खलु ॥ १८ ॥ ब्राह्मणस्य हृतं स्वर्णं स्वयं चोरेण यत्पुरा। तेन पापेन भो देवि पुत्रस्य मरणं खलु ॥ १९ ॥ तस्य शान्तिं प्रवक्ष्यामि तत्सर्वं शृणु पार्वति। गृहवित्ताष्टमं भागं पुण्यकार्यं च कारयेत् ॥ २० ॥ गायत्रीजातवेदोभ्यां याः फलीति तथा प्रिये। लक्षत्रयं जपं कुर्याद्दशांशहवनं ततः ॥२१॥ तर्पणं मार्जनं चैव दशांशक्रमतस्तथा। श्रवणं हरिवंशस्य चण्डिकार्चनमेव च ॥ २२ ॥ शिवार्चनं विशेषेण वापिकां चैव कारयेत्। कूपं चैव तडागं च पथि मध्ये च कारयेत् ॥ २३ ॥ कूष्मांडं नारिकेरं च पंचरत्नसमन्वितम्। गंगामध्ये प्रदातव्यं शनौ चाश्वत्थपूजनम् ॥ २४ ॥

---

साथ मनुष्ययोनिको प्राप्त हुआ ॥ १६ ॥ हे देवि! अब पुनर्वसुके प्रथम चरणमें जन्म लेनेसे यह मनुष्य धनधान्यसे युक्त और राजसेवामें तत्पर रहता है१७॥ हे देवि! पूर्वजन्ममे इसने सौ गौ दान करी थी इसलिये यह धनवान् और राजा हुआ है ॥ १८ ॥ हे देवि! इसने पूर्वजन्ममे जो स्वयं ब्राह्मणका धन चुराया है तिस पापसे इसको पुत्रशोक हुआ है ॥ १९ ॥ हे पार्वति! अब उसकी शान्तिको कहता हूँ तिसको तुम सुनो, घरके धनका आठवां भाग पुण्य कार्यमे लगावै ॥ २० ॥ हे प्रिये! फिर गायत्री, जातवेदसे, याः फलिनीः इन मंत्रोंका तीन लाख जप करावे और दशांश हवन करावे ॥२१॥ हवनका दशांश तर्पण, तर्पणका दशांश मार्जन करावे, फिर हरिवंश पुराणका पाठ सुने और चंडिकाका पूजन करै ॥ २२ ॥ विशेष करके शिवजीका पूजन करे और मार्गमे बावडी, कुआँ और तालाव वनवावे ॥ २३ ॥ और कूष्मांड नारिकेर पंचरत्नोंके साथ गंगाजीके बीचमें दान करै तथा शनैश्चरके दिन

पलसप्तदशेनैव प्रतिमां कारयेद्बुधः । चतुष्कोणां ततो वेदिं दशगौप्यपलैर्युताम् ॥ २५ ॥ तन्मध्ये प्रतिमां स्थाप्य सपुत्रस्य द्विजस्य तु । पूजयेद्देवि वै भक्त्या मंत्रेणानेन वै शिवे ॥ २६ ॥ ॐ नमो भगवते वासुदेवाय ॥ ॐ ब्रह्मणे नमः ॥ ॐ अनन्ताय नमः ॥ ॐ पुरुषाय नमः ॥ ॐ पुरुषोत्तमाय नमः ॥ ॐ शार्ङ्गिणे नमः॥ ॐ पीताम्बराय नमः॥ ॐ चक्रपाणये नमः ॥ ॐ अच्युताय नमः ॥ वासुदेवादिदशभिर्मंत्रैरेभिः पृथक् पृथक् । पूजयेत्प्रतिमां तां तु ततो दद्याद्द्विजन्मने ॥ २७॥ पूजयेद्देवदेवेशं सर्वपापापनुत्तये। ततः सम्प्रार्थ्य देवेशं शंखचक्रगदाधरम् । पीताम्बरं चतुर्बाहुं पुण्डरीकनिभेक्षणम् ॥ २८ ॥ वासुदेव जगन्नाथ धराधर गुरो हरे । मम पूर्वकृतं पापं क्षम्यतां परमेश्वर ॥ २९ ॥

---

पीपलका पूजन करै ॥ २४ ॥ फिर पुत्रसहित ब्राह्मणकी मूर्त्ति अडसठ तोले सोनेकी बनवावे और चालीस तोले चांदीकी चौकोन वेदी बनवावे ॥ २५ ॥ हे शिवे ! उस वेदीपर पुत्रसहित ब्राह्मणकी मूर्तिको स्थापित करै और आगे लिखे मंत्रोंसे भक्तिपूर्वक पूजन करै ॥ २६ ॥ १ ॐ नमो भगवते वासुदेवाय, २ ॐ ब्रह्मणे नमः, ३ ॐ अनन्ताय नमः, ४ ॐ पुरुषाय नमः, ५ ॐ पुरुषोत्तमाय नमः, ६ ॐ शार्ङ्गिणे नमः, ७ ॐ पीताम्बराय नमः, ८ ॐ चक्रपाणये नमः, ९ ॐ अच्युताय नमः, १० ॐ गदाधराय नमः, इस प्रकार वासुदेवादि १० दश नाममंत्रोंसे पृथक् पृथक् पूजा करके वेदीसहित दोनों मूर्तियोंको ब्राह्मणको देदे ॥ २७ ॥ फिर पूर्वजन्मकी पापशुद्धिके लिये विष्णु भगवान्का पूजन करे और ध्यान करे, शंख, चक्र, गदा धारी, पीताम्बर पहरे, चार भुजाओंसे युक्त, कमलकी समान नेत्रवाले विष्णु भगवान्को हाथ जोडकर प्रार्थना करै और कहे—हे वासुदेव ! हे जगन्नाथ ! हे धराधर ! हे गुरो ! हे हरे ! मेरे

ततो गां कपिलां दद्यात्स्वर्णशृङ्गीं सनूपुराम् । विधिवद्वेदविदुषे ब्राह्मणाय तपस्विने ॥ ३० ॥ दशवर्णां ततो दद्याद्ब्राह्मणान्भोजयेत्ततः ॥ ३१ ॥ भूमिदानं ततो दद्याद्विप्राय विदुषे ततः । एवं कृते न संदेहः पूर्वपापं विनश्यति ॥ ३२ ॥ सन्तानो जायते देवि रोगाणां संक्षयस्तनः । कन्यका नैव जायन्ते वन्ध्यात्वं च प्रणश्यति ॥ ३३ ॥

इति श्रीकर्मविपाकसंहितायां पुनर्वसुनक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

## अथैकोनत्रिंशोऽध्यायः ॥ २९ ॥

शिव उवाच ॥ अथातः सम्प्रवक्ष्यामि यत्कृतं पूर्वजन्मनि । अवन्तीपुरतो देवि पूर्वे क्रोशप्रमाणके ॥ १ ॥ लक्ष्मणस्य पुरं ख्यातं तत्रैव बहवो जनाः । वसन्ति वैष्णवाः सर्वे वेदकर्मविचक्षणाः ॥ २ ॥ स्वर्णकारो वसत्येकः स्वकर्मनिरतः सदा । दामोदर इति ख्यातस्तस्य पत्नी प्रभावती ॥ ३ ॥

---

पूर्वजन्मके किये हुए पापोको क्षमा करे ॥ २८ ॥ २९ ॥ तिसके उपरान्त सोनेसे सीग मढाकर घूँघुरू बांध विधिपूर्वक कपिला गौको दान करके वेदपाठी तपस्वी ब्राह्मणको दे ॥ ३० ॥ फिर दशवर्णवाली गौका दान करै और ब्राह्मणोको भोजन करावे ॥ ३१ ॥ और विद्वान् ब्राह्मणको पृथ्वीदान करके दे ऐसा करनेसे निःसन्देह पूर्वके किये हुए पाप नष्ट होजाते है ॥ ३२ ॥ हे देवि ! फिर स्त्रीका वंध्यात्व दोप दूर होकर पुत्रही उत्पन्न होताहै और समस्त रोग दूर होजाते है ॥ ३३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पुनर्वसुनक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

शिवजी बोले—हे देवि ! पूर्वजन्ममे किये हुये कर्मफलको कहता हूँ—उज्जैनसे एककोश पूर्वमे ॥ १ ॥ लक्ष्मणपुर ग्राम है वहां बहुतसे मनुष्य वसते है वहां सब परमवैष्णव और वैदिक कर्मके ज्ञाता हैं ॥ २ ॥ तहां अपने कर्ममें

विष्णुभक्तिरतः शान्तः सज्जनानां च सेवकः। पत्नी पतिव्रता तस्य पतिशुश्रूषणे रता ॥ ४ ॥ तस्य पुत्रद्वयं जातं गुणज्ञं पितृसेवकम्। एका च वल्लवी तत्र निवासाय तदाऽऽगता ॥५॥ पुत्रद्वयसमायुक्ता बहुगोधनसंयुता। एको द्यूतरतः पुत्रो द्वितीयश्चोरसंमतः ॥ ६ ॥ अर्जितं महिषीवृन्दं गोधनं बहुधा तथा। चौर्यद्यूतोपचाराभ्यां महार्घत्वमजायत ॥ ७ ॥ दुग्धादिकं महादेवि भुज्यते प्रत्यहं सदा। स्वर्णकारो विना द्रव्यमाभीरीं सर्वसंयुताम् ॥ ८ ॥ आनीतवांस्तु स्वगृहं तदा च वरवर्णिनीम्। ततो बहुगते काले महामारीज्वरादिना ॥ ९ ॥ पुत्राभ्यां सममद्राक्षीन्मरणं वल्लवी तदा। द्रव्यं तस्यास्तदा देवि स्वर्णकारो गृहीतवान् ॥ १० ॥ भुक्तं द्रव्यं च तत्सर्वं यावत्तिष्ठति भूतले। भार्यया सह पुत्राभ्यां महिषीगोधनादिकम् ॥ ११ ॥

---

तत्पर एक दामोदर सुनार रहता था और उसकी स्त्रीका नाम प्रभावती था॥३॥ यह दामोदर सुनार विष्णुका भक्त, शान्त, सज्जन पुरुषोका सेवक था और इसकी स्त्री प्रभावती पतिव्रता एवं पतिकी सेवा करनेवाली थी ॥ ४ ॥ गुणवान् पिताकी आज्ञा माननेवाले दो पुत्र दामोदरके उत्पन्न हुए, वही पर एक बल्लवी स्त्री बसनेके लिये आगई ॥ ५ ॥ इस बल्लवीके दो पुत्र और बहुतसी गौएं थी इसका एक पुत्र ज्वारी दूसरा चोर था ॥ ६ ॥ इन दोनो पुत्रोने जुआ और चोरी करके बहुतसी गाये और भैसे इकट्ठी करी इस कारण बल्लवी धनाढ्य होगई ॥ ७ ॥ हे महादेवि! दामोदर सुनार प्रतिदिन विनाही द्रव्यके इस बल्लवीका दूध दही आदि खाता था, फिर दामोदर बल्लवीको धन और दोनों पुत्रोंके साथ अपने घर ले आया ऐसे बहुत समय बीतनेपर बल्लवी महामारीके ज्वरसे अपने दोनों पुत्रोंसहित मृत्युको प्राप्त हुई। हे देवि! तब दामोदर सुनारने उसका सब धन लेलिया ॥ ८ ॥ ९ ॥ १० ॥ और जबतक यह दामोदर जिया तबतक स्त्री पुत्रोंके साथ इस बल्लवीकी गौ, महिषी आदि धनको भोगा॥११

ततो वयोन्तरे देवि मृत्युस्तस्याभवत्किल । पत्नी पश्चान्मृता साध्वी ताभ्यां स्वर्गमभूत् पुरा ॥ १२ ॥ पंचवर्षसहस्राणि स्वर्गे सुखमजीजनत् । पुनः पुण्यक्षये जाते मानुषत्वं भवेद्भुवि ॥ १३॥ अयोध्यानगरे देवि सरय्वा उत्तरे तटे । क्रोशद्वये विशालाक्षि पुरे देहलसंज्ञके ॥ १४ ॥ स्वकर्मनिरतः प्राज्ञः स्वविद्यायां विचक्षणः । स्वदेशे चैव विख्यातः शत्रूणां च विमर्दनः ॥ १५॥ पुनर्विवाहिता पत्नी साध्वी या पूर्वजन्मनि । तस्य नेत्रे विशालाक्षि पूर्वजन्मफलाद्गते ॥ १६ ॥ बाल्ये चैव तु पुत्रस्य नेत्रं वामं प्रणाशितम् । तेन पापेन भो देवि गतं नेत्रद्वयं शिवे ॥ १७ ॥ आभीर्या गमनं पूर्वं तस्याः स्वर्णं हृतं पुरा । तेन पापेन भो देवि दद्रुपामासुतक्षयम् ॥ १८ ॥ भक्षितं तस्य तत्स्वर्णं न दत्तं ब्राह्मणाय वै । तेन पापेन भो देवि मृतं पुत्रवरं शुभम् ॥ १९ ॥

---

हे देवि ! पूर्णायुके बीचमेंही दामोदरकी मृत्यु हुई फिर इसकी साध्वी स्त्रीभी मरगई तब दोनोंने स्वर्गमे वास किया ॥ १२ ॥ और पाँच हजार वर्षतक स्वर्गमें सुख भोगा जब पुण्यक्षीण हुआ तब मृत्युलोकमे मनुष्ययोनिको प्राप्त हुए॥ १३॥ हे देवि ! हे विशालाक्षि ! अयोध्यानगरीसे दो कोशपर सरयू नदीके उत्तर किनारे देहलपुरीमें अब जन्म हुआ है ॥ १४ ॥ यह अपने कर्ममें तत्पर, विद्वान्, अपनी विद्यामे प्रवीण स्वदेशमें विख्यात और शत्रुओका मर्दन करनेवाला है॥ १५॥ इसकी जो पतिव्रता स्त्री पूर्वजन्ममें थी वही अब व्याही गई है हे विशालाक्षि ! पूर्व जन्मके फलसे इसके नेत्र जाते रहे ॥ १६ ॥ हे देवि ! इसने बालकपनमें पुत्रका वामनेत्र नष्ट किया था इस कारण उस पापसे इसके दोनो नेत्र जाते रहे ॥ १७ ॥ हे देवि ! इसने प्रथम तो बल्लवी अहीरोको रक्खा और पीछे उसका समस्त धन हरलिया इस कारण इसके दाद और पामा रोग हुआ है तथा पुत्र नष्ट होगया है ॥ १८ ॥ हे देवि ! इसने बल्लवोका समस्त धन लेकर भोगा उसमेंसे ब्राह्मणोंको कुछ भी दान करके नहीं दिया अतएव

मित्रसम्बन्धतो यातं पुत्रं पौत्रं तथा द्वयम् । पूर्वजन्मकृतं देवि शुभाशुभफलं तथा ॥ २० ॥ भुज्यते प्राणिभिः सर्वैस्तथा देवि विशेषतः । म्लेच्छसेवारतो नित्यं म्लेच्छस्यैव च संगतः ॥२१॥ कुमार्गतो भवेद्देवि मृत्युलोकेऽभवद्यदा । शान्तिं शृणु महादेवि पूर्वपापप्रणाशनीम् ॥ २२ ॥ गृहवित्ताष्टमं भागं पुण्यकार्ये चकार सः । गायत्रीजातवेदोभ्यां याः फलीत्र्यम्बकेण वा ॥ २३ ॥ विष्णोरराटमंत्रेण जपं वै कारयेत्तथा । पंचलक्षप्रमाणेन यथा पापं प्रणश्यति ॥ २४ ॥ होमं वै कारयेद्देवि दशांशं विधिपूर्व-कम् । ततो वै तर्पणं कुर्यान्मार्जनं तु विशेषतः ॥ २५ ॥ प्रतिमां कारयेत्तद्वद्विष्णोश्चैव शिवस्य च । अष्टादशपलस्यैव सुवर्णस्य हरिं विभुम् ॥ २६ ॥ तद्वदेव शिवस्यैव रजतस्य परं विभुम् । प्रतिमां पूजयेद्देवि मंत्रेणानेन सुव्रते ॥ २७ ॥

---

इसका श्रेष्ठ पुत्र मरगया है ॥ १९ ॥ हे देवि ! मित्रसंबंधी पापके होनेसे पुत्र और पौत्रकी मृत्यु हुई है, यह सब पूर्व जन्ममे किये हुए कर्मोंका फल है॥२०॥ पूर्वजन्मके फल मनुष्योंको विशेषरूपसे भोगने पडते है, इस कारण पाप कर्मोंसे यह म्लेच्छोकी सेवा और संगति करता है ॥ २१ ॥ हे देवि ! हे महादेवि ! जबसे इसका मृत्युलोकमें जन्म हुआ है तबसे कुमार्गमेही रहता है, अब इसके पूर्वजन्मके पापोंके दूर करनेवाली शान्तिको सुनो ॥ २२ ॥ अपने घरके द्रव्यका आठवां भाग पुण्यकार्यमे लगावे और गायत्री,जातवेदसे, याः फलिनीः, त्र्यंबकं, विष्णो रराट इन पॉच मंत्रोंका पांच लाख जप करावै तब पूर्वजन्मके किये हुए पाप नष्ट हो जाते है ॥ २३ ॥ २४ ॥ हे देवि ! विधिपूर्वक जपका दशांश हवन, हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै॥२५॥ फिर विष्णु और शिवकी मूर्त्ति बनवावै, बहत्तर तोले सोनेकी विष्णुकी मूर्ति

इन्द्रादिदशदिक्पालांस्तत्तन्मंत्रैः प्रपूजयेत् । गन्धपुष्पाक्षतैः सर्वान् पूजयेच्च पृथक्पृथक् ॥ ॐ इन्द्राय नमः ॥ ॐ अग्नये नमः ॥ ॐ यमाय नमः ॥ ॐ निर्ऋतये नमः ॥ ॐ वरुणाय नमः ॥ ॐ वायवे नमः ॥ ॐ कुबेराय नमः ॥ ॐ ईशानाय नमः ॥ ॐ ब्रह्मणे नमः ॥ ॐ अनन्ताय नमः ॥ ॐ गरुडध्वज देवेश चराचरगुरो हरे । वासुदेव जगन्नाथ पूर्वपापं व्यपोहतु ॥ २८ ॥ ॐ नन्दिकेश्वर भूतेश देवदेव सुरेश्वर । मम पूजां गृहाण त्वं पूर्वपापं प्रणाशय ॥ २९ ॥ ततो गां कपिलां देवि स्वर्णशृंगीं प्रपूजयेत् । मन्त्रेणानेन भो देवि सर्वपापहरां शुभाम् ॥ ३० ॥ ॐ नमो भगवती कामेश्वरी मम पापं व्यपोहतु स्वाहा । पुरा मम कृतं पापं कामधेनुर्व्यपोहतु । कपिले त्वं जगन्मातर्मम कार्यं प्रसाधय ॥ ३१ ॥

---

और बहत्तर तोले चांदीकी शिवकी मूर्त्ति बनवाकर हे सुव्रते! आगे लिखे मंत्रोंसे पूजन करै ॥ २६ ॥ २७ ॥ इन्द्रआदि दश दिक्पालोंको गंधपुष्पाक्षतसे पृथक् २ पूजन करै-१ ॐ इन्द्राय नमः॥ २ ॐ अग्नये नमः॥ ३ ॐ यमाय नमः॥ ४ ॐ निर्ऋतये नमः ॥ ५ ॐ वरुणाय नमः ॥ ६ ॐ वायवे नमः॥ ७ ॐ कुबेराय नमः॥ ८ ॐ ईशानाय नमः॥ ९ ॐ ब्रह्मणे नमः॥ १० ॐ अनन्ताय नमः॥ फिर हाथ जोडकर प्रार्थना करे-हे गरुडध्वज! हे देवेश! हे चराचरगुरो! हे हरे! हे वासुदेव! हे जगन्नाथ! मेरे पूर्वजन्मके किये पापोंको नष्ट करो ॥ २८॥ हे नन्दिकेश्वर! हे भूतेश! हे देवदेव! हे सुरेश्वर! मेरी पूजाको ग्रहण करके मेरे पापोंको नष्ट करो ॥ २९ ॥ हे देवि! फिर कपिला गौके सोनेसे सींग मढाय पूर्व जन्मके पापसे मुक्त होनेके लिये इस मंत्रसे पूजन करै ॥ ३० ॥ पूजनका मंत्र यह है-"ॐ नमो भगवती कामेश्वरी मम पापं व्यपोहतु स्वाहा" हे कामधेनु! हे कपिले! हे जगन्मातः! मेरे पूर्वजन्मके किये हुए पापोंको

ततश्च दद्याद्गां देवि ब्राह्मणाय शिवात्मने। दशवर्णां ततो दद्यात् पात्राणि विविधानि च ॥ ३२ ॥ वृषभं च ततो देवि नीलवर्णं सुसंस्कृतम्। ब्राह्मणाय प्रदद्यात्तु सर्वपापस्य संक्षये ॥ ३३ ॥ भोजयेद्विविधैरन्नैः पायसैश्च समोदकैः। ब्राह्मणं शतसंख्याकं रुद्रविष्णुस्वरूपिणम् ॥ ३४ ॥ प्रतिमां दापयेत्पश्चाद्ब्राह्मणाय वराय च। बन्धुभिः सह भुञ्जीत ततो विप्रविसर्जनम् ॥ ३५॥ यथाशक्त्या प्रदद्याद्वै ब्राह्मणेभ्यश्च दक्षिणाम्। हरिवंशस्य श्रवणं पार्थिवस्य च पूजनम् ॥ ३६ ॥ भूमिदानं विशेषेण ब्राह्मणाय च दापयेत् ॥ ३७ ॥ एवं कृते वरारोहे पूर्वजन्मसमुद्भवम्। पापं प्रशमयेच्छीघ्रं मम वाक्यं च नान्यथा ॥ ३८॥ रोगादिविविधोत्पन्नं तत्सर्वं विलयं व्रजेत्। वंशवृद्धिर्भवेद्देवि नात्र कार्या विचारणा ॥ ३९ ॥

इति श्रीकर्मविपाकसंहितायां पुनर्वसुनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

नष्ट करो और मेरा कार्य सिद्ध करो ॥ ३१ ॥ तदनन्तर हे देवि ! शिवरूप ब्राह्मणको गोदान करै, फिर दशवर्णवाली गौको दूधके पात्रोंके साथ दान करै ॥ ३२ ॥ हे देवि ! फिर नीले बैलको भूषित करके समस्त पापोंके नाशके लिये ब्राह्मणको दे ॥ ३३ ॥ और नाना प्रकारके अन्नोंसे खीर और लड्डुओंसे शिव और विष्णुस्वरूप मानकर सौ ब्राह्मणोंको भोजन करावै ॥ ३४ ॥ अपने श्रेष्ठ आचार्य ब्राह्मणको दोनो मूर्तियें दे और अपने कुटुम्बी जनोंके साथ भोजन कर ब्राह्मणको बिदा दे ॥ ३५ ॥ यथाशक्ति दक्षिणा देकर ब्राह्मणके मुखसे हरिवंशपुराणकी कथा सुनै और पार्थिव पूजन करावै ॥ ३६ ॥ विशेषकर ब्राह्मणके लिये पृथ्वी दान करै ॥ ३७ ॥ हे वरारोहे ! ऐसा करनेसे पूर्वजन्ममें किये हुए समस्त पाप नष्ट हो जाते हैं, यह मेरा सत्य वचन है ॥ ३८ ॥ और अनेक प्रकारके उत्पन्न हुए समस्त

## अथ त्रिंशोऽध्यायः ॥ ३० ॥

शिव उवाच ॥ पुर्यामवन्तिकायां वै नापितो वसति प्रिये । स्वकर्मणः परिभ्रष्टः कृषिकर्मरतः सदा ॥ १ ॥ पत्नी तस्य महादेवि परपुंसि रता सदा । कर्कशा नाम विख्याता दर्दुरो नाम नापितः ॥ २ ॥ एकस्मिन्दिवसे देवि वैश्यो धनसमन्वितः । स्वर्णकोटिं च संगृह्य निकटे तस्य चागतः ॥ ३ ॥ नापितेन ततो देवि वैश्यो धनसमन्वितः । अर्द्धरात्रे गते काले ततः खड्गेन वै हतः ॥ ४ ॥ द्रव्यं सर्वं गृहीत्वा तु तां पुरीं च ततस्त्यजन् । सर्वं स्वर्णं व्ययं कृत्वा न दानं च कृतं क्वचित् ॥ ५ ॥ एकदा समये देवि नापितेन सह स्त्रिया । प्रयागे मकरे मासि मासमेकं निरन्तरम् ॥ ६ ॥ प्रत्यहं क्रियते स्नानं भार्यया सहितेन वै । गोदानं च कृतं तेन वृषभं स्वर्णभूषितम् ॥ ७ ॥

---

रोग दूर होजाते हैं, हे देवि ! वंशकी वृद्धि होती है इसमें कुछ विचारकी आवश्यकता नहीं है ॥ ३९ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पुनर्वसुनक्षत्राद्वितीयचरण-प्रायश्चित्तकथनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

शिवजी बोले—हे प्रिये ! उज्जैन नगरीमे एक नाई बसता था वह अपने कामको न करके खेती करता था ॥ १ ॥ हे महादेवि ! उस नाईका नाम दर्दुर था और उसकी स्त्रीका नाम कर्कशा विख्यात था। यह स्त्री सदा परपुरुषसे प्रीति रखती थी ॥ २ ॥ हे देवि ! एक दिन कोई धनी वैश्य एक करोड अशर्फियें लिये इस नाईके घर आ टिका ॥ ३ ॥ हे देवि ! इस दर्दुर नाईने अर्द्धरात्रिके समय उस धनवान् वैश्यको खड्गसे मारडाला ॥ ४ ॥ और सब धन लेकर उज्जैन नगरीको छोड दिया अन्यत्र रहकर सब धन खर्चने लगा परन्तु दान उसने कुछ भी नहीं किया ॥ ५ ॥ हे देवि ! यह नाई अपनी स्त्रीके साथ प्रयागराजमें मकरकी संक्रांतिपर एक महीने निरन्तर रहा ॥ ६ ॥ और प्रातिदिन स्त्रीके साथ गंगायमुनाके संगममें स्नान कर

ततो वै मरणं तस्य नापितस्य सुरेश्वरि । निर्जले तस्य वै देशे चोपले पथि मध्यगे ॥ ८ ॥ यमदूतैर्महादेवि नरके नाम कर्दमे । क्षिप्तो यमाज्ञया वर्षसहस्रं षष्टिसंमितम् ॥ ९ ॥ नरकान्निर्गतो देवि व्याघ्रयोनिस्ततोऽभवत् । पुनर्महिषयोनिं च मानुषत्वं ततो गतः ॥ १० ॥ ऋक्षे पुनर्वसौ देवि तृतीयचरणे वरे । प्रातःस्नानफलं देवि नृपवंशे समुद्भवः ॥ ११ ॥ मध्यदेशे वरारोहे सरय्वा उत्तरे तटे । महाधनेन संयुक्तश्चौराणां कर्मकारकः ॥ १२॥ पत्नी तस्याभवद्वन्ध्या मृतवत्सा सुतायुता । कफरोगसमायुक्ता ज्वरेणैव प्रपीडिता ॥ १३ ॥ मित्रस्यैव वधः पूर्वं नापितेन यतः कृतः । तेन कर्मफलेनैव महारोगसमुद्भवः ॥ १४ ॥ पुत्रोऽपि जायते देवि तस्य मृत्युरभूत्किल । शान्तिं तस्य प्रवक्ष्यामि शृणु देवि समासतः ॥ १५ ॥ गायत्रीमूलमंत्रेण पञ्चलक्षजपं यदा । तदा पापं क्षयं याति पूर्वजन्मनि यत्कृतम्॥ १६॥

---

गौदान और सुवर्णसे भूषित करके बैल दान किया ॥ ७ ॥ हे सुरेश्वरि ! तिसके पीछे किसी निर्जन देशमे मार्गके बीच पत्थरके ऊपर उस नाईकी मृत्यु होगई ॥ ८ ॥ हे महादेवि ! तब यमराजकी आज्ञासे यमदूतोंने इसे साठ हजार वर्षतक कर्दमनामक नरकमे डाला ॥९॥ हे देवि ! नरकसे निकलकर यह व्याघ्रकी योनिको प्राप्त हुआ, फिर भैंसकी योनि प्राप्त हुई, भैंसकी योनिमे कर्मफल भोगकर मनुष्य हुआ है ॥ १० ॥ प्रयागराजमें स्नानके फलसे यह राजकुलमें पुनर्वसुनक्षत्रके तीसरे चरणमें उत्पन्न हुआ है ॥ ११ ॥ हे वरारोहे ! मध्यदेशमे सरयू नदीके उत्तरतटपर इसका जन्म हुआ, पूर्वजन्मके पुण्यसे यह महाधनी और पापसे चोर है ॥ १२ ॥ इसकी स्त्री मृतवत्सा नामकी वन्ध्या है, कफरोगसे युक्त और ज्वरसे पीडित रहती है॥१३ ॥ इसने पूर्वजन्ममें मित्रको मारा था उससे यह महारोगी रहता है ॥ १४ ॥ हे देवि ! इसके पुत्रभी उत्पन्न हुआ और वह शीघ्रही मर गया, अब इसके पापोंकी शान्तिको कहता हूँ तिसको सुनो ॥ १५ ॥ जो गायत्रीके मंत्रका

श्रवणं हरिवंशस्य चण्डीपाठं शिवार्चनम् । विधिवद्देवि कर्तव्यं पापं सर्वं विनश्यति ॥ १७ ॥ चतुरस्रे ततः कुण्डे होमं चैव तु कारयेत् । तिलधान्यादिभिर्देवि दशांशजपसंख्यया ॥ १८ ॥ वैश्यस्य प्रतिमां देवि कारयेद्वै सुवर्णतः। पञ्चविंशपलेनैव रचितां च प्रयत्नतः ॥ १९ ॥ ताम्रपात्रे शुभे स्थाप्य पूजयेत्प्रतिमां ततः। मन्त्रेणानेन भो देवि गंधपुष्पाक्षतादिभिः ॥ २० ॥ ॐ नमस्ते देवदेवेश शंखचक्रगदाधर । अज्ञानाद्वा प्रमादाद्वा मया पापं कृतं पुरा । तत्सर्वं क्षम्यतां देव शरणागतवत्सल ॥ २१ ॥ ॐ चक्रधराय नमः ॥ ॐ गोविंदाय नमः ॥ ॐ दामोदराय नमः ॥ ॐ कृष्णाय नमः ॥ ॐ हंसाय नमः ॥ ॐ परमहंसाय नमः ॥ ॐ अच्युताय नमः ॥ ॐ हृषीकेशाय नमः ॥ चक्रधरादिभिर्नाम्ना सर्वदिक्षु प्रपूजयेत् । प्रतिमां पूजयित्वा तु तां विप्राय प्रदापयेत् ॥ २२ ॥

---

पांच लाख जप करावे तो पूर्वजन्ममें कियेहुए पापोंसे छूट जायगा ॥ १६ ॥ और हरिवंशकी कथा सुनै, दुर्गापाठ और शिवजीका पूजन भक्तिसे विधिपूर्वक करावै तो सब पाप दूर हो जाते है ॥ १७ ॥ हे देवि ! चौखूंटा कुंड बनवाय, जपका दशांश तिल धान्यादिसे हवन करावै ॥ १८ ॥ हे देवि ! फिर सौ तोले सोनेकी यत्नके साथ वैश्यकी मूर्ति बनवावे ॥ १९ ॥ सुन्दर ताम्रपात्रमें उस मूर्तिको स्थापित करके आगे कहे मंत्रोंसे गंध पुष्पाक्षतादिसे पूजन करै ॥२०॥ हे देवदेवेश ! हे शंखचक्रगदाधर ! मैंने पूर्वजन्ममें जानकर वा विना जाने जो पाप किये हैं उनको आप क्षमा करो मै आपकी शरणमें आकर आपको नमस्कार करता हूं, हे देव ! आप शरणागतवत्सल हैं॥२१॥ १ ॐ चक्रधराय नमः। २ ॐ गोविन्दाय नमः। ३ ॐ दामोदराय नमः। ४ ॐ कृष्णाय नमः। ५ ॐ हंसाय नमः। ६ ॐ परमहंसाय नमः। ७ ॐ अच्युताय नमः। ८ ॐ हृषीकेशाय नमः। इन चक्रधर आदि नामोसे सम्पूर्ण दिशाओंमे पूजन

ततो गां कृष्णवर्णां तु ब्राह्मणाय प्रदापयेत् । पञ्चसंख्यामितां देवि प्रदद्यात्सुकुलाय च ॥ २३ ॥ ब्राह्मणान्भोजयेद्देवि यथा-संख्यं वरानने । एवं कृते वरारोहे शीघ्रं पुत्रः प्रजायते । वन्ध्यात्वं नाशयत्याशु सर्वरोगो विनश्यति ॥ २४ ॥

इति श्रीकर्मविपाकसंहितायां पुनर्वसुनक्षत्रतृतीयचरण-
प्रायश्चित्तकथनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

## अथैकत्रिंशोऽध्यायः ॥ ३१ ॥

ईश्वर उवाच ॥ अवन्त्याः पश्चिमे देवि क्रोशमात्रोपरि प्रिये । कैवर्तको वसत्येको नन्दने च पुरे शुभे ॥ १ ॥ मनोहर इति ख्यातो धनाढ्यो जायते महान् । मत्ता तस्याभवत्पत्नी पतिशुश्रू-षणे रता ॥ २ ॥ मत्स्यमांसस्य भो देवि विक्रयं चाकरोत्खलु । संचितं बहु रत्नं च न दानं बहुधा करोत् ॥ ३ ॥

---

करै और प्रतिमाका पूजन करके ब्राह्मणको दे ॥ २२ ॥ हे देवि ! फिर काली ५ गौ दान करके कुलीन ब्राह्मणोंको देय ॥ २३ ॥ हे देवि ! हे वरानने ! फिर यथासंख्य ब्राह्मणोंको भोजन करावे ! हे वरारोहे ! ऐसा करनेसे शीघ्रही पुत्र उत्पन्न होता है और वंध्यात्व दोष जाता रहता है तथा सम्पूर्ण रोग नष्ट हो जाते हैं ॥ २४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पुनर्वसुनक्षत्रतृतीयचरण-
प्रायश्चित्तकथनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

शिवजी बोले—हे देवि ! हे प्रिये ! उज्जैनसे पश्चिम एक कोसपर सुन्दर नन्दनपुरमें एक धीवर बसता था ॥ १ ॥ इसका नाम मनोहर था और वह महाधनी था, इसकी स्त्रीका नाम मत्ता था और वह सदा पतिकी सेवा करती थी ॥ २ ॥ हे देवि ! इसने मछलीका मांस बेंचकर बहुतसे रत्न

एकदा चन्द्रग्रहणे शतस्वर्णयुतं वृषम् । अदाद्विप्राय विदुषे भार्यया सह भक्तितः॥४॥ ततो मृत्युवशं यातो भार्या तस्य मृता पुरा । यमदूतैर्महाघोरे नरके पातितः पुरा ॥ ५ ॥ यमाज्ञया महादेवि षष्टिवर्षसहस्रकम् । नरकान्निःसृतो देवि शृगालो गहने वने ॥ ६ ॥ पुनः काको वरारोहे ततो भवति मानुषः । गुणज्ञो देवताभक्तो वेश्यासुरततत्परः ॥ ७ ॥ रागी सूक्ष्मतनुर्वक्ता ज्ञानवान् सुतवर्जितः। तस्य भार्याऽभवत्स्थूला प्रियवाक्च सदाज्वरा ॥ ८ ॥ पूर्वजन्मप्रसङ्गाच्च मत्स्यमांसोपभोगिनी । मासि पुष्पं भवेद्देवि गर्भस्य पतनं तथा ॥ ९ ॥ अस्य शान्तिं प्रवक्ष्यामि शृणु देवि सुशोभने । यत्कृतेन वरारोहे शीघ्रं पुत्रमवाप्नुयात् ॥१०॥ हरिवंशस्य श्रवणं वारत्रयं विधानतः । गायत्रीमूलमंत्रेण पंचलक्षजपं तथा ॥ ११ ॥

---

इकट्ठे किये परन्तु दान कुछभी नही किया ॥ ३ ॥ एक समय चन्द्रग्रहणके समय सौ सुवर्णमुद्रा (अशर्फियों) के साथ एक बैलको भक्तिपूर्वक स्त्री पुरुषने ( मनोहर धीवर और उसकी स्त्री मत्ताने ) दान करके विद्वान् ब्राह्मणको दिया ॥ ४ ॥ तिसके पीछे इसकी मृत्यु हुई, इसकी स्त्री कुछ दिन पहलेही मरचुकी थी, पूर्वकर्मोंके अनुसार यमराजकी आज्ञासे यमदूतोने घोर नरकमे डाल दिया ॥ ५ ॥ हे देवि ! यमराजकी आज्ञानुसार साठ हजार वर्षतक उस नरकको भोगकर जब वहांसे निकला तब गहनवनमें शृगालकी योनिको प्राप्त हुआ ॥ ६ ॥ हे वरारोहे ! फिर काकयोनिको प्राप्त करके उसको भोग मनुष्ययोनिको प्राप्त हुआ और गुणवान् देवभक्त एवं वेश्यागामी हुआ ॥ ७ ॥ यह राग गानेवाला, सूक्ष्म शरीरवाला, वक्ता, ज्ञानी और पुत्ररहित है, इसकी स्त्री स्थूल शरीरवाली प्रियवचन बोलनेवाली और सदा ज्वरसे युक्त रहती है ॥ ८ ॥ हे देवि ! पूर्वजन्ममे इसने मछलीके मांसका भोजन किया है इस कारण महिनेमे पुष्प तो आता है परन्तु गर्भ गिर जाता है ॥ ९ ॥ हे देवि ! हे सुशोभने ! हे वरारोहे ! अब इसकी शान्तिको कहता हूँ जिसके करनेसे शीघ्रही पुत्र उत्पन्न होता है ॥ १० ॥ यह तीन बार

दशांशं हवनं देवि दशांशं चैव तर्पणम् । मार्जनं च विशेषेण दशांशं चैव कारयेत् ॥ १२ ॥ ततो गां कपिलां दद्याद्दशवर्णां ततः प्रिये । सूर्यस्य प्रतिमां देवि हेम्नो दशपलस्य च ॥ १३ ॥ भूषितां विविधैर्वस्त्रैः स्वर्णरौप्यविभूषणैः । पूजयित्वा विधानेन मंत्रेणानेन पार्वति ॥ १४ ॥ ॐ त्वं ज्योतिः सर्वलोकानां पूज्यस्त्वं सर्वदेहिनाम् । पूर्वजन्मकृतं पापं हर मे तिमिरापह ॥ १५ ॥ ॐ सूर्याय नमः ॥ ॐ सवित्रे नमः ॥ ॐ साक्षिणे नमः ॥ ॐ त्रिगुणात्मधारिणे नमः ॥ ॐ द्वादशकलात्मने नमः ॥ ॐ केयूरधारिणे नमः ॥ ॐ तीक्ष्णांशुधारिणे नमः ॥ ॐ कलाकाष्ठादिरूपिणे नमः ॥ ॐ विष्णवे नमः ॥ ॐ ब्रह्मणे नमः ॥ ॐ रुद्राय नमः ॥ ॐ मार्त्तण्डाय नमः ॥ मंत्रैर्द्वादशभिर्देवि पूजयेत्प्रतिमां ततः ॥ धूपदीपादिभिर्देवि ताम्बूलैश्च निवेदनैः ॥ १६ ॥ पूजितां प्रतिमां दद्याद्ब्राह्मणाय वराय च । दासीं दासं धनं धान्यं ब्राह्मणाय प्रदापयेत् ॥ १७ ॥

---

हरिवंश पुराणको विधिपूर्वक पाठ सुनै और गायत्रीका पांच लाख जप करावै ॥ ११ ॥ हे देवि ! जपका दशांश हवन, हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै ॥ १२ ॥ हे प्रिये ! फिर दशवर्णवाली कपिला गौका दान करै और ४० तोले सुवर्णकी सूर्यनारायणकी मूर्ति बनवाय ॥ १३ ॥ विविध वस्त्र और सोने चांदीके आभूषणोंसे भूषित कर हे पार्वति ! विधिपूर्वक इन मंत्रोंसे पूजन करै ॥ १४ ॥ मंत्र-हे सूर्य ! आप सम्पूर्ण लोकोंके प्रकाशक और सब प्राणियोंके पूज्य हो मेरे पूर्वजन्ममें किये हुए समस्त पापोको दूर करो ॥ १५ ॥ ॐ श्रीसूर्याय नमः १, ॐ सवित्रे नमः २, ॐ साक्षिणे नमः ३, ॐ त्रिगुणात्मधारिणे नमः ४, ॐ द्वादशकलात्मने नमः ५, ॐ केयूरधारिणे नमः ६, ॐ तीक्ष्णांशुधारिणे नमः ७, ॐ कलाकाष्ठादिरूपिणे नमः ८, ॐ विष्णवे नमः ९, ॐ ब्रह्मणे नमः १०, ॐ रुद्राय नमः ११, ॐ मार्तण्डाय नमः १२, इन बारह मंत्रोंसे हे देवि ! सूर्यकी प्रतिमाका पूजन करै और धूपदीपादि और ताम्बूल निवेदन करके ॥ १६ ॥ फिर उस प्रतिमाको श्रेष्ठ ब्राह्मणके लिये देदे ।

अश्वदानं रथं वस्त्रं पात्राणि विविधानि च । शय्यादिकं वरारोहे वित्तशाठ्यं न कारयेत् ॥ १८ ॥ एवं कृते न संदेहश्चिरजीवि-सुतं लभेत् । पूर्वजन्मकृतं पापं क्षयं याति न चान्यथा ॥१९॥ सप्तमी रविसंयुक्ता व्रतं कुर्यात्सुरेश्वरि । पापव्याधिः क्षयं याति ज्वरः क्वापि न जायते ॥ २० ॥

इति श्रीकर्मविपाकसंहितायां पुनर्वसुनक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## अथ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

### पुण्यनक्षत्रफलम् ।

शिव उवाच ॥ पापेन जायते व्याधिः पापेनैवासुतो भवेत् ।
पापेन जायते मूर्खः पापेनैव दरिद्रता ॥ १ ॥
पूर्वजन्मकृतं यत्तु पापं वा पुण्यमेव वा ।
इह जन्मनि भो देवि भुज्यते सर्वदेहिभिः ॥ २॥

---

दासी, दास, धन और धान्य ब्राह्मणको दे ॥ १७ ॥ हे वरारोहे ! घोडा, रथ, वस्त्र अनेक प्रकारके पात्र और शय्या इन सब वस्तुओंका अपनी शक्तिके अनुसार दान करै ॥ १८ ॥ ऐसा करनेसे निःसन्देह चिरंजीवी पुत्र प्राप्त होता है और पूर्वजन्मके कियेहुए सब पाप दूर होजाते हैं नही तो दूर नही होते हैं ॥ १९ ॥ हे सुरेश्वरि ! रविवारसे युक्त सप्तमीका व्रत करै तो सब रोग नष्ट हो जाते हैं और ज्वर कभी नहीं आता है ॥ २० ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पुनर्वसुनक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

शिवजी बोले—हे प्रिये ! पापसे व्याधि उत्पन्न होती है, पापसे मनुष्य पुत्रहीन होता है, पापसे मूर्ख होता है और पापहीसे दरिद्रता होती है ॥१॥ हे देवि ! पूर्वजन्ममें कियेहुए पुण्य अथवा पाप मनुष्योंको इस जन्ममें

पुण्येन जायते विद्या पुण्येन जायते सुतः। पुण्येन सुन्दरी नारी पुण्येन लभते श्रियम् ॥ ३ ॥ अथातः संप्रवक्ष्यामि पुष्यनक्षत्रजं फलम्। तत्सर्वं शृणु मे देवि यत्कृतं पूर्वजन्मनि ॥ ४ ॥ मध्यदेशे वरारोहे धनाढ्यो बल्लवोऽवसत्। हंसकेतुरिति ख्यातो भार्या तस्य तु केकयी ॥ ५ ॥ बहवो वृषभास्तस्य महिष्यो गास्तथा प्रिये। धर्मकर्मरतश्शूद्रो विक्रेता गोवृषादिकम् ॥ ६॥ घृतादेश्च वरारोहे विक्रयं कुरुते सदा। एको वैश्यो धनाढ्यो वै तस्य मित्रं तदाऽभवत् ॥ ७॥ महाप्रीतिस्तयोर्जाता बहुवर्षप्रमाणतः। एकदा तु निशायां वै शूद्रेण स वणिक् प्रिये ॥ ८ ॥ सुप्तो रत्नादिलोभेन कुठारेण तदा हतः। द्रव्यं सर्वं गृहीतं तु भूमिमध्ये तथा धृतम् ॥ ९ ॥ तन्मध्ये तु षडंशस्य व्ययं कुर्याद्दिनेदिने। बहुवर्षगते काले शूद्रो मृत्युवशोऽभवत् ॥ १० ॥

---

भोगने पडते है ॥ २ ॥ पुण्यके प्रभावसे विद्या आती है, पुण्यसेही पुत्र उत्पन्न होता है, पुण्यसेही सुन्दरी स्त्री मिलती है और पुण्यसेही लक्ष्मी प्राप्त होती है ॥ ३ ॥ हे वरारोहे! अब पुष्यनक्षत्रमें उत्पन्न होनेवाले मनुष्योंके पूर्वजन्ममें किये हुए कर्मोंको कहता हूं सो तुम उनको सुनो ॥ ४ ॥ हे वरारोहे! मध्य देशमें एक धनवान् हंसकेतु गोप रहता था और केकयी उसकी स्त्री थी ॥ ५ ॥ हे प्रिये ! इसके अनेक बैल, भैसे और गौएँ थी, अपने धर्ममें तत्पर यह गोप गौ और भैसोंको बेंचा करता था ॥ ६ ॥ हे वरारोहे! घी और मट्ठेको बेंचता था उस समय एक धनी वैश्यसे इसकी मित्रता हुई॥७॥ हे प्रिये! और बहुत दिनोंतक इन दोनोंमे परम प्रीति रही एक समय रात्रिमे रत्न आदिके लोभसे गोपने वैश्यको निद्रावस्थामें कुल्हाडीसे मारडाला और वैश्यका सब धन लेकर पृथ्वीमें गाड दिया ॥८॥९॥ उस धनमेंसे छठे हिस्से प्रतिदिन यह खर्च करने लगा ऐसे बहुत दिन बीतनेपर इसकी मृत्यु

पातयामास घोरे तं यमदूतो यमाज्ञया । षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ ११ ॥ ततो जातो महादेवि राक्षसो गहने वने । पुनः शृगालयोनिं च मानुषो ह्यभवत्पुनः ॥ १२ ॥ धनधान्यसमायुक्तो भार्या जाता तु या पुरा । वन्ध्या रोगसमायुक्ता कन्यका चैव जायते ॥ १३ ॥ तस्य रोगोऽभवत्पश्चाद्विविधश्च वयोऽन्तरे । पूर्वजन्मनि भो देवि मित्रं च निहतं यतः ॥ १४ ॥ तत्पापेन च भो देवि पुत्रो नैवोपजायते । महिषीपुत्रघाताच्च कम्परोगः प्रजायते ॥ १५ ॥ तस्य शांतिं प्रवक्ष्यामि शृणु देवि सुशोभने । षडंशं वै ततो दानं विदुषे ब्राह्मणाय च ॥१६॥ गां तथा महिषीं दद्याद्विधिवद्भोजयेद्द्विजान् । गायत्रीजातवेदोभ्यां द्विलक्षं च जपं ततः ॥ १७ ॥

---

होगई ॥ १० ॥ तब यमराजकी आज्ञासे यमदूतने इसे घोर नरकमें डाल दिया, वहां इसने साठ हजार वर्षतक नरककी पीडा भोगी ॥ ११ ॥ हे महादेवि ! फिर यह गहन वनमें राक्षस हुआ, पीछे गीदडकी योनि मिली, अब मनुष्ययोनिको प्राप्त हुआ है ॥ १२ ॥ धनधान्यसे युक्त है, पूर्वजन्मकी स्त्री इस जन्ममें मिली है, अब वह वंध्या और रोगसे युक्त रहती है एवं कन्या सन्तानको उत्पन्न करती है॥ १३ ॥ हे देवि ! इस ( गोप ) ने पूर्वजन्ममें जो अपने मित्रको मारडाला था तिस कारण अब इसको अनेक प्रकारके रोग हुए हैं॥ १४ ॥ हे देवि ! उसी पापसे इसके पुत्र नहीं उत्पन्न हुआ। यह एक भैंसके कटरेको मारता था इस कारण इसको कंप रोग हुआ है ॥ १५ ॥ हे देवि ! हे सुशोभने ! अब उसकी शान्तिको कहता हूँ तुम सुनो—प्रथम तो यह अपने समस्त द्रव्यका छठा हिस्सा विद्वान् ब्राह्मणको दान कर दे ॥ १६ ॥ फिर गौ और भैंस विधिपूर्वक दान करके ब्राह्मणोंको भोजन करावे और 'गायत्री' एवं 'जातवेदसे०'

कुण्डे त्रिकोणके चैव होमं वै कारयेत्ततः । जपस्यैव दशांशेन हवनादिकमाचरेत् ॥ १८ ॥ ततो वै प्रतिमां कुर्याद्वैश्यस्यैव विधानतः । द्वादशेन पलेनैव सुवर्णस्य विशेषतः ॥ १९ ॥ पूजयेत्पूर्वजैर्मंत्रैस्ततो विप्राय दापयेत् । एवं कृते न संदेहः पुत्रो भवति नान्यथा ॥ २० ॥ सर्वे रोगाः क्षयं यान्ति नात्र कार्या विचारणा ॥ २१ ॥

इति श्रीकर्मविपाकसंहितायां पुष्यनक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## अथ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

शिव उवाच ॥ अथातः सम्प्रवक्ष्यामि शृणु देवि विशेषतः । आदौ पापफलं देवि भुज्यते देवमानुषैः ॥ पश्चात्पुण्यफलं देवि परलोक इहापि वा ॥१॥ एकः शिल्पकरो देवि वसते हस्तिनापुरे । हेमदास इति ख्यातो भार्याद्वयसमन्वितः ॥ प्रत्यहं शिल्पकार्यं च करोति व्ययकारणात् ॥ २ ॥

---

इन दोनों मंत्रोंका दो लाख जप करावे ॥ १७ ॥ त्रिकोण कुंडमें हवन करावै जपका दशांश हवन होना चाहिये, हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै ॥ १८ ॥ फिर अड़तालीस तोले सुवर्णकी विधानपूर्वक वैश्यकी मूर्ति बनावै ॥ १९ ॥ उसका पूर्वोक्त मंत्रोसे पूजन करके ब्राह्मणको दे ऐसा करनेसे अवश्य पुत्र होता है अन्यथा नहीं होता ॥ २० ॥ और समस्त रोग निःसन्देह नष्ट हो जाते हैं ॥ २१ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पुष्यनक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

शिवजी बोले-हे देवि ! अब मै विशेषतासे कहता हूँ तुम सुनो, हे देवि ! इस लोक और परलोकमें देवता और मनुष्य पहले पापोंको भोगते हैं पीछे पुण्योको भोगते है ॥ १ ॥ हे देवि ! हस्तिनापुरमें एक हेमदास नामक शिल्प-

काशीतः पश्चिमे देवि स्वकर्मनिरतः सदा । अश्वत्थानां च वृक्षाणां छेदनानि चकार सः ॥ ३ ॥ एवं बहुगते काले शिल्पकारो मृतः प्रिये । नरके तस्य पतनं षष्टिवर्षसहस्रकम् ॥ ४ ॥ पत्नीभ्यां सह भो देवि यातो योनिं बिडालकीम् । बिडालयोनिं वै भुक्त्वा सरटस्तु ततोऽभवत् ॥ ५ ॥ पुनश्चाभून्नरो देवि मध्यदेशे सुपूजिते । पूर्वजन्मनि वृक्षाणां छेदनं प्रत्यहं कृतम् ॥ ६ ॥ तेन पापेन भो देवि पुत्रो नैव प्रजायते । कन्यकाश्चैव संजाताः स्त्रियो रोगः सुदारुणः ॥ ७ ॥ शरीरे महती पीडा रात्रौ निद्रा न लभ्यते । कन्यकायाश्च वैधव्यं वृक्षच्छेदनतः प्रिये ॥ ८॥ तस्य शान्तिं प्रवक्ष्यामि ततः पापनिवर्तनम् । चतुर्थांशं तु वै दानं ब्राह्मणाय प्रदापयेत् ॥९॥ दशायुतं जपं कुर्याद्गायत्रीमूलमंत्रतः । हेम्नः पञ्चपलस्यैव वृक्षं च कारयेत्ततः॥ १०॥

---

कार दो स्त्रियोसे युक्त रहता था और प्रतिदिन शिल्पकारीसे खर्च चलाता था ॥ २ ॥ हे देवि ! यह हेमदास अपने कर्ममें तत्पर काशीपुरसे पश्चिम दिशामें पीपलके वृक्षको काटता हुआ ॥ ३ ॥ हे प्रिये ! इस भाँति बहुत कालके उपरान्त इस हेमदासकी मृत्यु होगई तब इसने साठ हजार वर्षतक नरकमें बास किया ॥ ४ ॥ हे देवि ! फिर अपनी स्त्रीसहित यह बिल्लीकी योनिको प्राप्त हुआ बिल्लीकी योनि भोगकर सरटकी योनि प्राप्त हुई ॥ ५ ॥ हे देवि ! फिर मनुष्य योनिको इसने अब मध्यदेशमें पाया है, सुन्दर पूजने योग्य पीपलके वृक्षोंको जो इसने पूर्वजन्ममें काटा है ॥ ६ ॥ हे देवि ! उस पापसे इसके पुत्र नहीं होता है कन्या होती हैं और स्त्रीके दारुण रोग रहता है ॥ ७ ॥ हे प्रिये ! और इसके शरीरमें भी महापीडा रहती है उससे रात्रिको निद्रा नहीं आती है, वृक्ष काटनेके कारण इसकी कन्या विधवा हो जाती हैं ॥ ८ ॥ पूर्वजन्मके पाप नष्ट होनेके लिये अब उसकी शांतिको कहता हूँ यह प्रथम अपने धनका चतुर्थ भाग करके ब्राह्मणको दे ॥ ९ ॥ फिर गायत्रीके मूलमंत्रका एक लाख

पूजयित्वा यथान्यायं वृक्षं विप्राय दापयेत् । पंच धेनूस्तथा दद्याद्वृषभं स्वर्णभूषितम् ॥ ११ ॥ कूष्माण्डं नारिकेरं च पंचरत्नसमन्वितम् । गंगामध्ये तु दातव्यं श्वेतवस्त्रेण वेष्टितम् ॥ १२ ॥ एवं कृते न संदेहः पुत्रो वै जायते शिवे । सर्वव्याधिः क्षयं याति कन्यका च सुखायते ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां पुष्यनक्षत्रद्वितीयचरणप्रायश्चित्त-कथनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## अथ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

श्रीशिव उवाच ॥ मध्यदेशे वरारोहे लोहकारश्च तस्थिवान् । हेमकारेति विख्यातो विष्णुव्रतरतः सदा ॥ १ ॥ पत्नी तस्य प्रभा नाम पतिशुश्रूषणे रता । धनधान्यसमायुक्तो महालोभेन संयुतः ॥ २ ॥ पुरे विख्यातयवनस्तत्र नित्यं स तिष्ठति । गौरेका लोहकारेण बाल्यतः पालिता शिवे ॥ ३ ॥

---

जप करावे और वीस तोले सोनेका वृक्ष बनवावे ॥ १० ॥ उस वृक्षका विधानसे पूजन करके ब्राह्मणको दे और पांच गौओंका दान करे, एकको स्वर्णसे भूषित करके दान करै ॥ ११ ॥ कूष्मांड अथवा नारियल पंचरत्नोंके साथ श्वेत वस्त्रमें लपेटकर गंगाजीमें खडे होकर दान करै ॥ १२ ॥ हे शिवे ! ऐसा करनेसे निःसन्देह पुत्र उत्पन्न होता है और समस्त व्याधियें नष्ट हो जाती हैं एवं कन्या भी सुख पाती है अर्थात् विधवा नहीं होती हैं ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पुष्यनक्षत्रद्वितीयचरण-प्रायश्चित्तकथनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

शिवजी बोले-हे वरारोहे ! मध्यदेशमे एक लुहार रहता था वह विष्णुका भक्त था और हेमकार उसका नाम था ॥ १ ॥ प्रभानामकी उसकी स्त्री पतिव्रता थी, यह लुहार धनधान्यसे युक्त महालोभी था ॥ २ ॥ हे शिवे ! उसी

एकस्मिन्दिवसे देवि पङ्के मग्ना च गौर्वरा । तच्छ्रुत्वा लोह-कारस्तु न गतस्तत्र वै शिवे ॥ ४ ॥ मृता रात्रौ तदा देवि पङ्के वैतरणी च सा । बहुकालेन भो देवि मरणं तस्य वै गृहे ॥५॥ तस्य पत्नी सती जाता सत्यलोकं गतौ च तौ । दशलक्षमितं वर्षं सत्यलोके च तास्थिवान् ॥ ६ ॥ पुनः पुण्यक्षये जाते मर्त्यलोके तदाऽभवत् । मानुषः शुभजन्मा च धनधान्यसम-न्वितः ॥ ७ ॥ पत्न्या सह वरारोहे ब्राह्मणानां च सेवकः ॥ पूर्वजन्मनि देवेशि पङ्के मग्ना च यत्र गौः ॥ ८ ॥ न गतस्तत्र भो देवि तस्मात्पुत्रो न जायते । कन्या जाता पुरा देवि तस्या मृत्युश्च जायते ॥ ९ ॥ तदर्थं वाटिकां कूपं पथि मध्ये च कार-येत् । कुर्याच्चैव तुलादानं पात्राणि विविधानि च ॥ १० ॥ गोयुग्मं घृतकुम्भं च ब्राह्मणाय प्रदापयेत् । गायत्रीमन्त्रजाप्यं च लक्षमेकं तु कारयेत् ॥ ११ ॥

---

नगरमे एक प्रसिद्ध यवन रहता था, इस लुहारने बाल्यावस्थासे एक गौ पाली थी ॥ ३ ॥ हे देवि ! वह श्रेष्ठ गौ कीचडमे जा धँसी यह सुनकर लुहार उस गौको निकालनेको नही गया ॥ ४ ॥ हे देवि ! रात्रिमे वह गौ कीचडमें ही मरगई और बहुत दिनोंके पीछे वह लुहार भी अपने घरमें मर गया ॥ ५ ॥ तब उसकी स्त्री पतिके साथ सती होगई इस कारण दोनो स्त्री पुरुष सत्यलोकमें गये और दशलाख वर्षतक सत्यलोकमें निवास किया ॥ ६ ॥ फिर पुण्यक्षय होनेपर मृत्युलोकके बीच धनधान्यसे युक्त उत्तम कुलमे मनुष्य हुआ ॥ ७ ॥ हे वरारोहे ! हे देवेशि ! यह स्त्रीके साथ ब्राह्मणोंका सेवक हुआ पूर्वजन्ममे जहां कीचमे गौ जा धँसी थी ॥ ८ ॥ हे देवि ! वहां न जानेसे इसको पुत्र नही हुआ, हे देवि! कन्या उत्पन्न होकर मरगई ॥ ९ ॥ इस कारण उस पापको दूर करनेके लिये यह मार्गमे बावडी और कुआ बनवावै और तुलादान तथा अनेक प्रकारके पात्रोंको दान करै ॥ १० ॥ दो गौ और घृतका कलश ब्राह्मणको देवै, फिर गायत्री

होमं कुर्यात्ततो देवि तिलधान्यादितण्डुलैः । ब्राह्मणान्भोजयेद्देवि शतसंख्यान्वरानने ॥ १२ ॥ एवं कृते वरारोहे पुत्रो भवति नान्यथा । वन्ध्यात्वं नाशमायाति व्याधिनाशो भवेद्ध्रुवम् १३

इति श्रीकर्मविपाकसंहितायां पुष्यनक्षत्रतृतीयचरणप्रायश्चित्त-कथनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## अथ पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

शिव उवाच ॥ अयोध्यानगराद्देवि पूर्वे क्रोशचतुर्दशे । तत्राप्येकोऽवसच्छाककारो वैडम्बराभिधः ॥ १ ॥ चित्रा तस्याभवत्पत्नी पतिसेवापरायणा । शाककारो महासाधुर्विष्णुभक्तिरतः सदा ॥ २ ॥ गुरुसेवारतो नित्यं प्रत्यहं शाकविक्रयी । एका मार्जारिका श्वेता पालिता तेन वै शिवे ॥ ३ ॥

---

मन्त्रका एक लाख जप करावै ॥ ११ ॥ हे देवि ! तिल, जव, चावलोंसे हवन करावै, हे देवि ! हे वरानने !! और सौ ब्राह्मणोंको भोजन करावै ॥ १२ ॥ हे वरारोहे ! ऐसा करनेसे अवश्य पुत्र उत्पन्न होता है नहीं तो नहीं होता, स्त्रीका वंध्यात्व दूर होकर सम्पूर्ण व्याधियें शीघ्र नष्ट होजातीं है ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पुष्यनक्षत्रतृतीय-चरणप्रायश्चित्तकथनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

शिवजी बोले-हे देवि ! अयोध्यासे चौदहकोश पूर्वदिशामें एक ग्रामके बीच वैडम्बरनामक एक शाककार अर्थात् माली रहता था ॥ १ ॥ पतिकी सेवा करनेवाली चित्रानामकी उसकी स्त्री थी । शाककार महासाधु और विष्णुभक्त था ॥ २ ॥ हे शिवे ! यह शाककार प्रतिदिन अपने गुरुकी सेवा करता था और सदा शाक बेंचता था, इसने एक सफेद बिल्ली पाली थी ॥ ३ ॥

सगर्भा तत्र सा जाता वधं तस्याः स चाकरोत् । चत्वारो बालकास्तस्या मृताः कुक्षौ तदानघे ॥ ४ ॥ ततो बहुतिथे काले शूद्रस्य मरणं शिवे । यातो वै तमसातीरे तीर्थे मृत्युर्मम प्रिये ॥ ५ ॥ विष्णुभक्तिरतो यस्मात्तीर्थे मृत्युफलादपि । गतोऽसौ परलोकं तु भुक्त्वा स्वर्गे तु वैभवम् ॥ ६ ॥ षष्टिवर्षसहस्राणि पुनः पुण्यक्षयो यदा । तदा वृषभयोनिश्च मर्त्यलोकेऽभवत्पुनः ॥ ७ ॥ मानुषत्वं ततो यातो धनधान्यसमन्वितः । सुन्दरो विष्णुभक्तत्वात्पुत्रेण रहितः शिवे ॥ ८ ॥ गर्भाणां पतनं जातं यतो मार्जारिका हता । सगर्भा च तदा देवि ततो गर्भो विनश्यति ॥ ९ ॥ तस्य शान्तिं प्रवक्ष्यामि शृणु त्वं गिरिजे वरे । गृहवित्तार्धभागं वै ब्राह्मणाय प्रदापयेत् ॥ १० ॥ तदा पापं क्षयं याति नात्र कार्या विचारणा । शिवार्चनं प्रकुर्याद्वै रौप्यमार्जारिकां तथा ॥ ११ ॥ कृत्वा शतपलानां वै सगर्भां विमलां शुभाम्। पूजयित्वा च भो देवि ततो दद्याद्द्विजन्मने॥ १२॥

---

हे अनघे ! जब वह बिल्ली गर्भवती हुई तब शाककारके हाथसे वह मरगई उसके पेटमें चार बच्चे भी मरगये ॥ ४ ॥ हे शिवे ! बहुत दिनोंके पीछे वह शूद्र तमसा नदीके किनारे मेरे तीर्थमें मरगया ॥ ५ ॥ विष्णुभक्त होकर मेरे तीर्थपर मरनेके कारण वह स्वर्गलोकमें जाकर सुन्दर सुखोंको भोगने लगा॥६॥ साठ हजार वर्षतक स्वर्गके सुख भोगनेपर जब पुण्यका क्षय हुआ तब मृत्युलोकमें बैलकी योनिको प्राप्त हुआ ॥ ७ ॥ हे शिवे ! फिर मनुष्य हुआ और धनधान्यसे युक्त विष्णुकी भक्तिसे सुन्दर रूपवान् तो हुआ परंतु पुत्ररहित हुआ ॥ ८ ॥ हे देवि ! इसकी स्त्रीके गर्भ गिरजाते है कारण इसने पूर्वजन्ममें गर्भवती बिल्ली मारी थी ॥ ९ ॥ हे गिरिजे ! अब उसकी शान्तिको कहताहूँ सुनो, यह अपने घरका आधा भाग धन ब्राह्मणको देदे ॥ १० ॥ तब निःसन्देह पाप नष्ट हो जायँगे और शिवका पूजन करे । हे देवि ! फिर चार सौ तोले

लक्षजाप्यं ततो देवि त्र्यम्बकेण विधानतः ।
ततो भवति वै शुद्धः पूर्वपापान्न संशयः ॥ १३ ॥
पुत्रो भवति वै देवि रोगाणां संक्षयस्तथा ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायां पुष्यनक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥

---

## अथ षट्त्रिंशोऽध्यायः ॥ ३६ ॥

आश्लेषानक्षत्रफलम् ।

श्रीशिव उवाच ॥ अथातः संप्रवक्ष्यामि शृणु देवि सुशोभने । जातस्य सार्पनक्षत्रे प्रथमे चरणे शुभे ॥ १ ॥ पुरी काशी समाख्याता त्रैलोक्ये देवि पूजिता । तस्यास्तु पश्चिमे भागे क्रोशे पंचदशे मिते ॥२॥ माण्डव्यस्य पुरं शुभ्रं वसन्ति बहवो जनाः । तन्मध्ये शूद्र एको हि प्राकरोल्लवणं सदा ॥ ३ ॥ डिण्डिभेति समाख्यातो गौरी तस्य वराङ्गना । प्रचुरं संचितं तेन न दानं क्रियते क्वचित् ॥ ४ ॥

---

चांदीकी बिल्ली गर्भयुक्त बनवावै और उसका पूजन करके ब्राह्मणको दे॥११॥१२॥ हे देवि! एक लाख त्र्यंबक ( महामृत्युंजय ) मंत्रका जप करावै तब यह पूर्व पापोंसे निःसन्देह छूटजाता है ॥ १३ ॥ हे देवि ! फिर पुत्र उत्पन्न होता है और समस्त रोग नष्ट होजाते हैं॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पुष्यनक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥

---

शिवजी बोले-हे देवि ! हे सुशोभने ! अब आश्लेषानक्षत्रके प्रथम चरणमें उत्पन्न होनेवाले मनुष्यके कर्मफलको कहता हूं तिसको सुनो ॥ १ ॥ हे देवि ! त्रिलोकीमें प्रसिद्ध काशीसे पश्चिम दिशामें पन्द्रह कोशपर ॥ २ ॥ मांडव्यका नगर है, उसमें बहुतसे मनुष्योंका बास है, वहीपर एक लवणकार शूद्र रहता था ॥ ३ ॥ उसका डिंडिभ नामथा और उसकी स्त्रीका गौरी नाम था । इसने

एकदा दैवयोगेन ब्राह्मणानां निमन्त्रणम् । भोजनं प्रददौ प्रीत्या दक्षिणां चापि दत्तवान् ॥ ५ ॥ गामेकां कपिलां दत्त्वा भूषितां च पुरोधसे । ब्राह्मणो जल्पते कश्चिच्छूद्रं प्रति तदा प्रिये ॥ ६ ॥ अहं ग्रामस्य वै पूज्यो मदीयां गां कथं प्रभो । पुरोधसे दत्तवांस्त्वं प्राणं ते च ददाम्यहम् ॥ ७ ॥ इति श्रुत्वा वचस्तस्य स शूद्रो ब्राह्मणं प्रति । क्रोधेन महता देवि ब्रूत उत्तरमुक्तवान् ॥ ८ ॥ तस्य क्रोधेन विप्रस्य क्रोधतश्च वरानने । मरणं तस्य वै जातं तस्योपरि विषेण वै ॥ ९ ॥ ततो बहुतिथे काले लवणकारस्य भार्यया । मरणं तस्य वै जातं कुम्भीपाके तदा खलु ॥ १० ॥ निक्षिप्य यमदूतेन तत्रैव च यमाज्ञया । पंचलक्षं ततो वर्षं कष्टं दत्तं मुहुर्मुहुः ॥ ११ ॥

---

बहुतसा धन संचय किया परंतु दान कुछ भी नहीं किया ॥ ४ ॥ एक समय इसने दैवयोगसे ब्राह्मणोंको बुलाकर भोजन कराया और प्रसन्नतासे उनको दक्षिणा भी दी ॥ ५ ॥ एक कपिला गौ आभूषणोंसे भूषित करके अपने पुरोहितको दी, हे प्रिये ! तब एक ब्राह्मणने शूद्रसे कहा ॥ ६ ॥ कि, मैं इस ग्रामका पूज्य हूं इस कारण तुमने मुझे छोडकर अपने पुरोहितको गौ कैसे दी ? अब इस अपमानसे मै तुम्हारे ऊपर अपने प्राण छोड दूंगा ॥ ७ ॥ हे देवि ! ब्राह्मणका ऐसा वचन सुन क्रोधमें भरकर वह शूद्र ब्राह्मणसे बोला ॥ ८ ॥ हे वरानने ! उस शूद्रने क्रोधके साथ ब्राह्मणको कटु वचन कहा तब वह क्रोधित होकर विष खायकर मरगया ॥९॥ बहुत दिनोंके पीछे वह लवणकार शूद्र अपनी स्त्रीसहित मरगया और कुंभीपाक नरकमें प्राप्त हुआ ॥१०॥ यमराजकी आज्ञासे यमदूतोंने कुंभीपाक नरकमें डालकर पांच लाख वर्षतक निरन्तर कष्ट दिया॥११॥

तत्र जाता महापीडा नरकान्निःसृतस्ततः। सर्पस्य योनिं यातो वै गृध्रयोनिस्ततोऽभवत् ॥ १२ ॥ मानुषत्वं ततो लब्धं मध्यदेशे वरानने। पूर्वपापाच्च भो देवि पुत्रो नैव प्रजायते ॥ १३ ॥ शरीरे रोग उत्पन्नो ब्रह्मदोषाद्वरानने। प्रायश्चित्तं प्रवक्ष्यामि पूर्वकिल्बिषशान्तये ॥ १४ ॥ गायत्रीसूर्यमन्त्राभ्यां पञ्चलक्षजपं शिवे। विधिवत्कारयामास तदा वै वरवर्णिनि ॥ १५ ॥ होमं वै कारयामास कुण्डे चाष्टदले तथा। दशांशं तर्पणं तस्य मार्जनं तद्दशांशतः ॥ १६ ॥ प्रतिमां कारयामास सुवर्णस्य महेश्वरि। षट्पलस्य प्रयत्नेन पूजयित्वा यथाविधि ॥ १७ ॥ मन्त्रेणानेन विधिना गन्धधूपादिभिस्तथा। दुर्गे देवि नमस्तुभ्यं सर्वसिद्धिप्रदेश्वरि ॥ १८ ॥ इमां पूजां गृहीत्वा तु मम कार्यं प्रसाधय। ॐ ह्रीं माहेश्वर्यै नमः ॥ ॐ दुं दुर्गायै नमः ॥

---

वहां बडे २ कष्ट भोगकर जब निकला तब सर्पका शरीर मिला फिर गिद्ध पक्षी हुआ ॥१२॥ हे वरानने! अब मध्यदेशमें मनुष्य हुआ है परन्तु हे देवि! उस पूर्व पापसे पुत्र उत्पन्न नहीं होता है ॥ १३ ॥ हे वरानने! उस ब्राह्मणके पापसे इसके शरीरमें रोग उत्पन्न हुआ है। अब इसका प्रायश्चित्त कहता हूँ जिससे इसका पहला पाप दूर हो ॥ १४ ॥ हे शिवे! हे सुन्दरवर्णवाली! गायत्रीमंत्र और सूर्यमंत्रका पांचलाख विधिपूर्वक जप करावै ॥ १५ ॥ और अष्टकोणके कुंडमें हवन करावै, हवनका दशांश तर्पण, तर्पणका दशांश मार्जन करावै ॥१६॥ हे महेश्वरि! चौबीस तोले सोनेकी ब्राह्मणमूर्त्ति बनवावै और विधिपूर्वक यत्नके साथ उसका पूजन करै ॥१७॥ आगे कहेहुये मंत्रोंसे विधिपूर्वक गन्ध धूप दीप आदिसे पूजा करे हे देवि! हे दुर्गे! हे सर्वसिद्धिप्रदेश्वरि! तुमको नमस्कार है ॥ १८ ॥ मेरी इस पूजाको ग्रहण करके मेरे कार्यको सिद्ध करो ॥ मंत्र-१ ॐ ह्रीं माहेश्वर्यै नमः। २ ॐ दुं दुर्गायै नमः।

ॐ सर्वकामप्रदे तुभ्यं नमः ॥ ॐ ईश्वर्यै नमः ॥ ॐ त्र्यम्बकाय नमः ॥ ॐ विष्णवे नमः ॥ ॐ सर्वेश्वराय नमः ॥ ॐ भैरवाय नमः ॥ ॐ मार्तण्डाय नमः ॥ ॐ पवनसुताय नमः ॥ एतैश्च दशभिर्मन्त्रैः प्रतिमां पूजयेत्प्रिये । ब्राह्मणाय ततो दद्याद्भक्तियुक्तेन चेतसा ॥ १९ ॥ पंचपात्रं ततो दद्यात्तदुद्देशेन पार्वति । तिलदानं ततो दद्याद्वस्त्रदानं यथाविधि ॥ २० ॥ कूष्माण्डं नारिकेरं च पंचरत्नसमन्वितम् । गङ्गामध्ये प्रदातव्यं पूर्वपापप्रशान्तये । रोगात्प्रमुच्यते देवि वन्ध्यापि पुत्रमाप्नुयात् ॥ २१ ॥

इति श्रीकर्मविपाकसंहितायामाश्लेषानक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## अथ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

शिव उवाच ॥ अलर्कस्य पुरे देवि शूद्र एकोऽवसत्पुरा ।
शूद्राचाररतो नित्यं विक्रयं कुरुते सदा ॥ १ ॥

---

३ ॐ सर्वकामप्रदे तुभ्यं नमः । ४ ॐ ईश्वर्यै नमः । ५ ॐ त्र्यम्बकाय नमः । ६ ॐ विष्णवे नमः । ७ ॐ सर्वेश्वराय नमः । ८ ॐ भैरवाय नमः । ९ ॐ मार्त्तण्डाय नमः । १० ॐ पवनसुताय नमः । हे प्रिये ! इन दश मंत्रोंसे प्रतिमाका पूजन करै पीछे भक्तिपूर्वक दान करके ब्राह्मणको दे ॥ १९ ॥ हे पार्वति ! पापशान्तिके लिये पांचपात्रोंको दान करै एवं तिल और वस्त्रदान करके ब्राह्मणको देय ॥ २० ॥ हे देवि ! पेठेको अथवा नारियलको पंचरत्नोंके साथ पाप दूर होनेके लिये गंगाजीके बीचमें स्थित होकर दान करे तो संपूर्ण रोग दूर होजाते है और वन्ध्या स्त्रीके भी पुत्र उत्पन्न होता है ॥ २१ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामाश्लेषानक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

शिवजी बोले–हे देवि ! पूर्वसमय अलर्कग्राममें एक शूद्र वसता था, वह

गोमहिष्यादिव्यापारैर्व्ययं कुर्याद्दिने दिने । गोधनानि बहून्यासं-स्तेषां रक्षा न जायते ॥ २ ॥ विख्यातो दुर्लभ इति महाज्ञानी सदाऽवसत् । एकदा तस्य गोवृन्दं वने तिष्ठति भोऽनघे ॥ ३ ॥ महावृष्टिस्तत्र जाता गावश्च पीडिता भृशम् । तन्मध्ये बहवो गावो वर्षणेन मृताः पुरा ॥ ४ ॥ रक्षां शूद्रो न कुरुते तृणै-राच्छादनादिभिः । एवं बहुगते काले शूद्रस्य मरणं तदा ॥५॥ नरके पातयामास यमदूतो यमाज्ञया । बहुवर्षसहस्राणि भुक्त्वा नरकजं फलम् ॥ ६ ॥ नरकान्निर्गतो देवि गजयोनिमवाप्तवान् । गजयोनिं ततो भुक्त्वा मानुषश्चाभवत्ततः ॥ ७ ॥ स्वकर्मणः परित्यागं कृतवान् यद् वरानने । ततः कर्मफलाद्देवि नैव पुत्रः प्रजायते ॥ ८ ॥ गोसहस्रं तु यत्पूर्वं मृतं वृष्टिजलेन वै । तेन पापेन भो देवि तस्य व्याधिरभून्महान् ॥ ९ ॥

---

शूद्र नित्य अपने कर्ममें लीन रहता क्रयविक्रयके कार्यको करता था ॥ १ ॥ प्रतिदिन गौ और भैंसका व्यवहार करके अपना निर्वाह करता था. इसके गोधन बहुत था परन्तु उनकी रक्षा नहीं होती थी ॥ २ ॥ हे अनघे ! उसका दुर्लभ नाम था वह महाअज्ञानीके भावसे सदा रहता था, एक समय उसकी गौएँ वनमें चरनेके लिये गईं ॥ ३ ॥ वनमें वर्षा बहुत होनेके कारण गौओंको बडी पीडा हुई और उनमेंसे अनेक गौएँ मरगईं ॥ ४ ॥ तृण फूस आदिकी छायासे उस शूद्रने गौओंकी रक्षा नहीं करी, बहुत समयके उपरान्त उस शूद्रकी मृत्यु हुई ॥ ५ ॥ तब यमराजकी आज्ञासे यमदूतोंने उसे नरकमें गेर दिया, वहाँ हजारोंवर्षतक नरककी पीडा भोगी ॥ ६ ॥ हे देवि ! जब नरकसे निकला तब हाथी हुआ उस हाथीकी योनिको भोगकर मनुष्य हुआ है ॥७॥ हे देवि ! हे वरानने ! उस शूद्रने पूर्वजन्ममें गौओंकी रक्षा नहीं की थी इस पापके कर्मसे यह पुत्रहीन है ॥ ८ ॥ हे देवि ! पूर्वजन्ममें जो हजारों गौएँ वर्षाके कारण मरगई थीं उसी पापसे यह अनेक रोगोंसे दुःखी रहता है ॥९॥

कृतं दानं पुरा देवि सर्वपर्वणि चाञ्जसा । तेन पुण्येन भो देवि धनधान्यगजादिकम् ॥ १० ॥ तस्य शान्तिं प्रवक्ष्यामि शृणु देवि सुशोभने । ब्राह्मणाय दशांशं च दानं दद्यात् सुरप्रिये ॥ ११ ॥ गायत्रीलक्षजाप्येन जपं कुर्यात्प्रसन्नधीः । दशांशं हवनं देवि मार्जनं तर्पणं तथा ॥ १२ ॥ दशवर्णां ततो दद्याद्ब्राह्मणाय वरानने । एवं कृते न संदेहो वरः पुत्रः प्रजायते । रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां सार्पनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अथाष्टात्रिंशोऽध्यायः ॥ ३८ ॥

शिव उवाच ॥ गंगाया उत्तरे कूले मालाकारोऽवसत्पुरा ।
डेलचन्द्रेति विख्यातो महाज्ञानी गुणाकरः ॥ १ ॥

---

हे देवि ! पूर्वजन्ममें इसने पर्वोंके समय दान किया था उस पुण्यफलसे यहाँपर इसे धन, अन्न, हाथी आदि मिले है ॥ १० ॥ हे देवि ! हे सुशोभने ! हे सुरप्रिये ! अब उस पापकी शान्ति कहता हूं तुम सुनो—प्रथम अपने घरका दशवां भाग धन ब्राह्मणको दान करके दे ॥ ११ ॥ हे देवि ! और प्रसन्नतासे एक लाख गायत्रीका जप करावै, जपका दशांश हवन हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै ॥ १२ ॥ हे वरानने ! पुनः ब्राह्मणको दक्षिणा दे, ऐसा करनेसे निःसन्देह पुत्र उत्पन्न होता है और समस्त रोगभी नष्ट होजाते हैं इसमें किसी प्रकारके विचारकी आवश्यकता नहीं है ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां सार्पनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

शिवजी बोले—हे शिवे ! गंगाजीके उत्तर किनारेपर महाज्ञानी और गुणी

स्वकर्मनिरतो नित्यं द्विजसेवासु तत्परः। तस्य पत्नी विशालाक्षी नाम्ना चन्द्रावती शुभा ॥ २ ॥ गुरुदास इति ख्यातो वर्णधर्मसुनिष्ठितः। वैश्य एकः समाख्यातो धनधान्यसमन्वितः ॥ ३ ॥ तयोः प्रीतिरभूद्देवि सुदृढा वैश्यशूद्रयोः। वैश्येन तस्मै भो देवि स्वर्णं दत्तं तदा बहु ॥ ४ ॥ लक्षत्रयं स्थितं स्वर्णं तस्मै वैश्येन चार्पितम्। मालाकारेण तत्सर्वं भूमौ स्थाप्य तदा प्रिये ॥ ५ ॥ स्वयं जगाम वैश्येन सार्द्धं वेण्यां तदा प्रिये। माघे नियमतः स्नानं कृतं ताभ्यां यथाविधि ॥ ६ ॥ शूद्रस्तु गृहमागच्छद्वैश्यः काश्यां समागतः। तत्र काश्यां विशालाक्षि मरणं तस्य चाभवत् ॥ ७ ॥ अविमुक्ते महातीर्थे देवदानवपूजिते। मम पार्श्वे समायातो धर्मक्षेत्रप्रभावतः ॥ ८ ॥ मालाकारस्तु तत्स्वर्णं भुक्तवान्दारसंयुतः। बहुवर्षगते काले मरणं तस्य चाभवत् ॥ ९ ॥

---

डेलचन्द्र नामक माली बसता था ॥ १ ॥ वह सदा अपने कर्मको करता हुआ ब्राह्मणोंकी सेवा करता था, उसकी स्त्री बडे नेत्रोंवाली सुलक्षणा चन्द्रावती नामवाली थी ॥ २ ॥ और यहींपर धनधान्यसे अपनेधर्ममें तत्पर एक गुरुदासनामक वैश्य रहता था ॥ ३ ॥ हे देवि ! पूर्वोक्त डेलचन्द्र मालीकी और गुरुदास वैश्यकी परस्परमें बडी प्रीति होगई हे देवि ! तब गुरुदासने डेलचन्द्रको बहुतसा सुवर्ण दिया ॥ ४ ॥ हे प्रिये ! तीन लाख रुपयेका सोना वैश्यने दिया सो मालीने लेकर सब पृथ्वीमें गाड दिया ॥ ५ ॥ हे प्रिये ! वह माली वैश्यके साथ माघ महीनेमें प्रयागराजमें स्नान करनेको गया वहाँ इन दोनोंने विधिपूर्वक त्रिवेणीमें स्नान किया ॥ ६ ॥ वहांसे माली तो अपने घर आया और वैश्य काशीजीको चलागया, हे विशालाक्षि ! काशीजीमें जाकर वह वैश्य मृत्युको प्राप्त हुआ ॥ ७ ॥ मुक्तिदायक, देव और दैत्योंसे पूजित महातीर्थस्वरूप काशी धर्मक्षेत्र होनेके कारण वहाँ मरकर वह मेरे पास आया ॥ ८ ॥ उधर वह माली अपनी स्त्रीके साथ उस सुव-

तदा गन्धर्वनगरे बहुवर्षसहस्रकम् । पत्न्या सह वरारोहे भुक्तं वै स्वर्गजं फलम् ॥ १० ॥ ततो बहुगते काले मानुषत्वमवाप्तवान् । धनाढ्यो गुणवान् भोक्ता देवब्राह्मणतत्परः । तस्य पत्नी विशालाक्षी पूर्वजन्मप्रसंगतः ॥ ११ ॥ पुनर्विवाहिता देवि पतिसेवासु तत्परा । पुष्पं च जायते देवि मासि मासि निरन्तरम् ॥ १२ ॥ पुत्रो न जायते देवि कन्यका खलु जायते । यतो वैश्यस्य वै स्वर्णं न दत्तं पूर्वजन्मनि ॥ तत्कर्मणः फलाद्देवि पुत्रो नैव प्रजायते ॥ १३ ॥ तस्य शांतिं प्रवक्ष्यामि शृणु देवि यथार्थतः । गृहद्रव्यषडंशेन पुण्यकार्यं च कारयेत् ॥ १४ ॥ स्वर्णैर्दशपलैश्चैव वैश्यं कृत्वा प्रयत्नतः । पूजयित्वा विधानेन ब्राह्मणाय प्रदापयेत् ॥ १५ ॥ षडङ्गजातवेदोभ्यां जपं वै पाठयेत्ततः । जीर्णोद्धारं ततो देवि वापिकाकूपयोश्चरेत् ॥ १६ ॥

---

र्णको भोगने लगा, फिर बहुत दिनोंके बाद माली मर गया ॥ ९ ॥ हे वरारोहे ! तब उस मालीने गन्धर्वनगरमें जाय अपनी स्त्रीके साथ स्वर्गीयफलको अनेक वर्षोंतक भोगा, फिर पुण्य क्षय होनेपर मृत्युलोकमें मनुष्य हुआ है ॥ १० ॥ यहाँपर यह धनी, गुणी, भोगी देवता और ब्राह्मणोंका भक्त है, पूर्वजन्मके प्रसंगसे इसकी वही बडे नेत्रोंवाली स्त्री मिली है ॥ ११ ॥ हे देवि ! विवाह होनेके उपरान्त वह पतिसेवा करने लगी, प्रतिमास इसको रजोधर्म निरन्तर होता है ॥ १२ ॥ परंतु हे देवि ! पुत्र उत्पन्न नहीं होता केवल कन्या होती है, हे देवि ! इसने पूर्वजन्ममें वैश्यका सुवर्ण नहीं दिया था इसी कारणसे इसको पुत्र नहीं होता है ॥ १३ ॥ हे देवि ! अब उसके पापकी शान्ति कहता हूं तुम सुनो—प्रथम यह अपने घरका छठा भाग पुण्य कार्यमें लगावै ॥ १४ ॥ और चालीस तोले सुवर्णकी वैश्यकी मूर्त्ति बनवावै उसका पूर्णविधिसे पूजन करके ब्राह्मणको देदे ॥ १५ ॥ षडंगका पाठ और जातवेदसे, इस मंत्रका जप अपनी शक्तिके अनुसार करावे,

एवं कृते न संदेहः पुत्रो भवति नान्यथा ।
रोगस्तस्य निवर्तेत धनं च बहु जायते ॥ १७ ॥

इति श्रीकर्मविपाकसंहितायाम् आश्लेषानक्षत्रतृतीयचरणप्रायश्चित्तकथनं नामाष्टात्रिंशोऽध्यायः ॥ ३८ ॥

## अथैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

श्रीशिव उवाच ॥ अयोध्यानगरी श्रेष्ठा सर्वदेवसुपूजिता ।
यस्यां प्रवेशमात्रेण सर्वपापैः प्रमुच्यते ॥ १ ॥ तस्यास्तु पश्चिमे
देवि योजनद्वयदूरतः । पुरं लक्ष्मण नामैकं वसन्ति बहवो
जनाः ॥ २ ॥ तन्मध्ये शूद्र एको हि कैवर्तो धनधान्यवान् ।
डालेति नाम्ना विख्यातस्तस्य पत्नी च केशवी ॥ ३ ॥ तेन
व्यापारतो देवि धनं बहु च संचितम् । मात्स्यं प्रभुज्यते नित्यं
मांसं च बहुधा प्रिये ॥ ४ ॥ निर्दयः सर्वजन्तूनां कच्छपानां
विशेषतः । एवं बहुगते काले तस्य मृत्युरभूत्किल ॥ ५ ॥

---

हे देवि ! फिर पुराने टूटे फूटे कुएँ और बावडीको सुधार देवे ॥ १६ ॥ ऐसा करनेसे अवश्य पुत्र होता है अन्यथा नहीं होता और समस्त रोग नष्ट होजाते हैं, धनकी वृद्धि होती है ॥ १७ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायाम् आश्लेषानक्षत्रतृतीयचरणप्रायश्चित्तकथनं नामाष्टात्रिंशोऽध्यायः ॥ ३८ ॥

हे प्रिये ! सम्पूर्ण देवताओंसे पूजित श्रेष्ठ अयोध्यानगरीमें प्रवेश करतेही सब पाप नष्ट हो जाते है ॥ १ ॥ हे देवि ! अयोध्यासे पश्चिम चार कोशपर लक्ष्मणपुर है वहां बहुत मनुष्योंका वास है ॥ २ ॥ लक्ष्मणपुरमें धनधान्यसे युक्त डालनामक मल्लाह रहता था और केशवी उसकी स्त्री थी ॥ ३ ॥ हे देवि ! हे प्रिये ! उसने व्यापारमें बहुतसा धन संचय किया और वह प्रतिदिन मछली खाता था ॥ ४ ॥ वह सब जन्तुओंमें दयाहीन था पर

यमदूतैर्महाघोरे निक्षिप्तश्च यमाज्ञया । षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ ६ ॥ नरकान्निःसृतो देवि दर्दुरत्वं तथा गतः । ऋक्षत्वं च ततो देवि मानुषत्वं ततोऽलभत् ॥ ७ ॥ पाण्डुरोगेण संयुक्तो वंशो नैव तु जीवति । संजाताः कन्यका बह्व्यो विधवा व्यभिचारिकाः ॥ ८ ॥ अपत्यानां निरोधश्च युवत्वसमये सति । अस्य पुण्यं प्रवक्ष्यामि यथा पापात्प्रमुच्यते ॥ ९ ॥ षडंशं ब्राह्मणे दानं श्रीविष्णोः पूजनं तथा । विष्णोरराटमंत्रेण लक्ष-जाप्यं च कारयेत् ॥ १० ॥ एवं कृते न संदेहो वंशो भवति नान्यथा । रोगाश्च विलयं यान्ति नात्र कार्या विचारणा ॥ ११ ॥

इति श्रीकर्मविपाकसंहितायाम् आश्लेषानक्षत्रचतुर्थचरणप्रायश्चित्त-कथनं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

विशेष करके कछुओंका शत्रु था, इस भांति बहुत समयके पीछे उसकी मृत्यु होगई ॥ ५ ॥ तब यमराजकी आज्ञासे यमदूतोंने इसको घोर नरकमें डाल दिया वहां साठ हजार वर्षतक नरककी पीडा भोगी ॥ ६ ॥ हे देवि ! जब यह नरकसे निकला तब मेंढक हुआ, फिर रीछकी योनि भोग अब मनुष्य हुआ है ॥ ७ ॥ यहां इसको पांडुरोग हुआ और इसके पुत्र नहीं जीते है कन्या तो बहुतसी हुई परन्तु वेभी पापकर्मसे विधवा और व्याभि-चारिणी होगई हैं ॥ ८ ॥ युवावस्थामे ही इसके सन्तान होना बंद होगया है, अब उस पुण्यको कहता हूँ जिसको करके यह पापोसे छूट सकता है ॥ ९ ॥ प्रथम तो यह अपने घरका छठा भाग धन ब्राह्मणको देदे विष्णुभगवान्‌का पूजन और "विष्णोरराट" इस मंत्रका एक लाख जप करावे ॥ १० ॥ ऐसा करनेसे अवश्य पुत्र होता है अन्य प्रकारसे नहीं होता और सम्पूर्ण रोग नष्ट होजाते हैं इसमें किसी प्रकारका विचार नहीं करना चाहिये ॥ ११ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायाम् आश्लेषानक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

# अथ चत्वारिंशोऽध्यायः ॥ ४० ॥

## मघानक्षत्रफलम् ।

शिव उवाच ॥ पुरा देवि शुभं ख्यातं पुरं मङ्गलनामकम् । तत्र वैश्यो वसत्येको धनधान्यसमन्वितः ॥ १ ॥ तस्य नाम समाख्यातं मङ्गलं देवि वै शुभम् । तस्य पत्नी विशालाक्षी सुन्दरी सुखदायिनी ॥ २ ॥ विष्णुभक्तिरतो नित्यं गुरुब्राह्मण-सेवकः । आचारे निरतः शान्तः क्रयविक्रयतत्परः ॥ ३ ॥ एकदा तु गृहे विप्रो मित्रं तस्य समागतम् । आदरं बहुधा कृत्वा भोजयामास शाश्वतः ॥ ४ ॥ स्वर्णदानं ततो लक्षमुद्रा-दानं ततः प्रिये । दत्तं वैश्येन भो देवि ब्राह्मणाय स्वशान्तये ॥५॥ ब्राह्मणेन हि तत्सर्वं स्थापितं तस्य वै गृहे । ततोऽपि तीर्थयात्रायां वाराणस्यां वरानने ॥ ६ ॥ तस्य मृत्युरभूद्देवि काश्यां चैव स्वकर्मतः । बहुकाले गते देवि वैश्यो दारिद्र्यपीडितः ॥ ७ ॥

---

शिवजी बोले—हे देवि ! पूर्वकालमें सुंदर मंगलनामक नगरमें धनधान्यसे युक्त एक वैश्य रहता था ॥ १ ॥ हे देवि ! उस वैश्यका नाम मंगल था और उसकी स्त्री बडे नेत्रोंवाली, परमसुंदरी और पतिको सुख देनेवाली थी ॥ २ ॥ मंगल वैश्य प्रतिदिन विष्णुकी भक्तिमें लीन रहता, गुरु और ब्राह्मणोंकी सेवा करता, आचारमें नियम रखता, शांत स्वभावसे रहता और क्रयविक्रयमें तत्पर रहता था ॥ ३ ॥ हे देवि ! एक समय इसके ( मंगलके ) घर इसका मित्र कोई ब्राह्मण आया तब इसने बडे आदरके साथ उसको भोजन कराया ॥ ४ ॥ हे देवि ! हे प्रिये ! अपनी शान्तिके निमित्त मंगलने सुवर्ण और एक लाख मुद्रा दान करके ब्राह्मणको दी ॥ ५ ॥ हे वरानने ! ब्राह्मणने वह सब धन उसीके घरमें धर दिया और आप तीर्थयात्राके लिये काशीमे गया ॥ ६ ॥ हे देवि ! काशीमें जाकर कर्मवश वह ब्राह्मण मरगया इधर बहुत समयके

पुत्रदारैश्च संयुक्तस्तस्य द्रव्यं तदा प्रिये । भुक्तं सर्वं ततो देवि स्वदत्तं चैव पुण्यदम् ॥ ८ ॥ वृद्धत्वे च पुनर्जाते तस्य मृत्यु-रभूत्किल । अयोध्यायां महातीर्थे स्वर्गवासस्ततोऽभवत् ॥ ९ ॥ बहुवर्षसहस्राणि विष्णुलोके वरानने । भुक्त्वा बहुविधं पुण्यं क्षये सति तदाऽनघे ॥ १० ॥ मृत्युलोकेऽभवज्जन्म धनधान्य-समन्वितः । विष्णुपूजारतो नित्यं ब्राह्मणेषु च भक्तिमान् ॥ ११ ॥ मित्रद्रव्यं स्वयं दत्तं भुक्तं तेन ततः प्रिये । पुत्रोत्पत्तिः प्रथमत-स्तस्य वै मरणं भवेत् ॥ १२ ॥ पुनः पुत्रो न जायेत काक-वन्ध्या ततः प्रिया । शरीरे कफवातादिरोगाश्च विविधास्तथा ॥ १३ ॥ प्रौढत्वं च तदा तस्य जायते नात्र संशयः । तत्पाप-शमनार्थं च पुण्यं शृणु वरानने ॥ १४ ॥ षडंशं च ततो दानं ब्राह्मणाय वरानने । गायत्रीमंत्रजाप्यं च लक्षमेकं प्रयत्नतः । हवनं विधिवत्कुर्यात्तर्पणं मार्जनं तथा ॥ १५ ॥

---

पीछे वह मंगल वैश्य दरिद्रतासे दुःखी हुआ ॥ ७ ॥ हे प्रिये ! उस समय वैश्यने जो धन ब्राह्मणको दिया था उसमेसे सकुटुम्ब खाने लगा ॥ ८ ॥ वृद्धा-वस्थामें यह वैश्य महातीर्थ अयोध्याजीमें मरगया इस कारण स्वर्गको प्राप्त हुआ ॥ ९ ॥ हे वरानने ! हे अनघे ! हजारों वर्षतक विष्णुलोकमे इसने अनेक प्रकारके पुण्यफलोंको भोगा और जब पुण्य क्षीण हुआ तब ॥ १० ॥ मृत्युलोकमें आकर मनुष्य हुआ है, यहां धनधान्यसे युक्त विष्णुभगवान्की पूजामें रत और ब्राह्मणोंकी भक्ति करनेवाला है ॥ ११ ॥ हे प्रिये ! अपना दान कियाहुआ मित्रका धन इसने भोगा था इस कारण इसके पुत्र उत्पन्न होकर मरगया ॥ १२ ॥ फिर पुत्र उत्पन्न नही हुआ अतएव इसकी स्त्री काकवन्ध्या हुई है और इसके शरीरमें कफ वात आदिके अनेक रोग होते हैं॥ १३ ॥ अब इसकी वृद्धावस्था होचली है हे वरानने ! अब उस पुण्यको सुनो जिसके करनेसे इसके पाप निःसन्देह दूर हो जाते है ॥ १४ ॥ हे वरानने ! प्रथम तो यह अपने घरका छठा

गामेकां कपिलां दद्यात्स्वर्णशृङ्गीं सहाम्बराम् । दद्यात्प्रयत्नतो देवि ब्राह्मणाय महात्मने ॥ १६ ॥ तिलधेनुं ततो दद्यात्पात्रं वस्त्रं तथा प्रिये । श्रवणं हरिवंशस्य दम्पतिभ्यां च भक्तितः ॥ १७ ॥ एवं कृते ततो देवि पुनः पुत्रः प्रजायते । रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा ॥ १८ ॥

इति श्रीकर्मविपाकसंहितायां मघानक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## अथैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

श्रीशिव उवाच ॥ अयोध्यानगराद्देवि योजनोपरि वल्लभे ।
दक्षिणे नन्दिनीग्रामे वसन्ति बहवो जनाः ॥ १ ॥
द्विजस्तत्र वसत्येको मद्यवेश्यारतः सदा ।
परस्त्रीलम्पटो नित्यं मद्यमांसरतस्तथा ॥ २ ॥

---

भाग ब्राह्मणको दान करे फिर गायत्रीमंत्रका एक लाख जप करावे और विधिपूर्वक हवन, तर्पण एवं मार्जन करावे ॥ १५ ॥ हे देवि ! सोनेसे सींग मढाय सुन्दर वस्त्र उढाय एक कपिला गौका दान करके महात्मा ब्राह्मणको देवे ॥ १६ ॥ हे प्रिये ! फिर तिलधेनु पात्र और वस्त्र दान करै स्त्रीपुरुष हरिवंशपुराणकी कथा सुनै ॥ १७ ॥ हे देवि ! ऐसा करनेसे फिर पुत्र उत्पन्न होता है और समस्त रोग नष्ट होजाते है इसमें कुछ विचार नही करना चाहिये ॥ १८ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मघानक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

शिवजी बोले-हे देवि ! अयोध्यानगरीसे चार कोश दक्षिणमें एक नान्दिनी ग्राम है वहां बहुतसे मनुष्य बसते हैं ॥ १ ॥ तहां एक ब्राह्मण मद्य पीनेवाला

नामतो मित्रशर्मेति तस्य पत्नी तु कर्कशा । प्रत्यहं द्यूत-
कार्येण व्ययं कुर्याद्दिनेदिने ॥ ३ ॥ एवं बहुतिथे काले तस्य
मृत्युरभूत्पुरा । पश्चान्मृता तु तत्पत्नी कर्कशा दुःखदायिनी
॥४॥ यमस्य किङ्करैरेव निक्षिप्तो नरकार्णवे । सप्ततिर्वै सहस्राणि
वर्षाणि सुरवल्लभे ॥ ५ ॥ भुक्तं शोकार्णवं घोरं दम्पतिभ्यां तदा
शिवे । ततः पापक्षये देवि श्वानयोनिरभूत्पुरा ॥६॥ श्वानयोनिं
ततो भुक्त्वा सूकरो निर्जने वने । मानुषस्य पुनर्योनिं मध्यदेशे
ततोऽलभत् । नन्दिग्रामफलाद्देवि धनधान्यसमन्वितः ॥ ७ ॥
परस्त्रीलम्पटाद्देवि पादपीडा प्रजायते । मद्यपानफलाद्देवि गर्भ-
पातः पुनः पुनः ॥ ८ ॥ बह्व्यः कन्याः प्रजाताश्च स्त्रीसौख्यं
नैव विन्दति । पुत्रस्य मरणं देवि जातं वेश्यासु संगमात् ॥ ९ ॥

---

वेश्यागामी परस्त्रीलोभी, मद्यमांस खानेवाला रहता था ॥ २ ॥ मित्रशर्मा इसका नाम था और कर्कशा इसकी स्त्रीका नाम था, मित्रशर्मा जुयेमें धन खर्चता था ॥ ३ ॥ इस प्रकार बहुत समयके पीछे पहले तो ब्राह्मणकी मृत्यु हुई फिर कर्कशा स्त्रीकी भी मृत्यु होगई ॥ ४ ॥ हे सुरवल्लभे ! फिर इस ब्राह्मणको यमराजके सेवकोंने नरकरूपी समुद्रमें सत्तर हजार वर्षतक डाल दिया ॥ ५ ॥ हे शिवे ! उस नरकमें स्त्रीपुरुषने घोर दुःख भोगे फिर पापके क्षय होनेपर इसको कुत्तेकी योनि मिली ॥ ६ ॥ कुत्तेकी योनि भोगकर निर्जन वनमें सूकरकी योनि भोगी अब मध्यदेशमें मनुष्य हुआ है हे देवि ! नन्दिग्राममें मरनेके फलसे धनधान्यसे युक्त है ॥ ७ ॥ हे देवि ! हे शिवे ! पराई स्त्रियोंमें रत रहनेके कारण इसके पैरोंमें पीडा रहती है और मद्य पीनेसे इसकी स्त्रीके गर्भ बारंबार गिरजाते है ॥ ८ ॥ बहुतसी कन्या उत्पन्न होनेसे इसकी स्त्री दुःखी रहती है, वेश्याप्रसंग करनेसे इसके पुत्रकी मृत्यु हुई है ॥९॥

पूर्वजन्मकृतं पापं पुण्यं च गिरिजे वरे । मानुषेणैव भुज्येते मृत्युलोके सुरेश्वरि ॥ १० ॥ अस्य शान्तिं प्रवक्ष्यामि यथोक्तां शृणु भामिनि । गृहवित्ताष्टमं भागं ब्राह्मणाय समर्पयेत् ॥ ११ ॥ वापीकूपतडागेषु जीर्णोद्धारः प्रयत्नतः ॥ १२ ॥ माघकार्त्तिक-वैशाखश्रावणेषु विशेषतः । प्रत्यब्दं भोजयेद्विप्राञ्छ्रोत्रियान्वेद-पारगान् ॥ १३ ॥ गायत्रीजातवेदोभ्यां द्विलक्षं जपमाचरेत् । जपतो हवनं तद्वत्तर्पणं मार्जनं तथा ॥ १४ ॥ महाभारत-माख्यानं श्रुत्वा पापं व्यपोहति । दशवर्णा प्रदातव्या पूर्वपाप-विशुद्धये ॥ १५ ॥ एवं कृते वरारोहे सर्वरोगः प्रणश्यति । पुत्रो भवति भो देवि वन्ध्यात्वं च प्रणश्यति ॥ १६ ॥ काक-वन्ध्या च या नारी पुनः पुत्रमवाप्नुयात् । कन्यका नैव जायन्ते धनवृद्धिर्भवेत्किल ॥ १७ ॥

---

हे गिरिजे ! हे वरे ! हे सुरेश्वरि ! पूर्वजन्ममें कियेहुए पाप और पुण्योंको मनुष्य मृत्युलोकमें आकर भोगता है ॥१०॥ हे भामिनी ! अब इसकी शान्ति-को कहता हूँ तुम सुनो–प्रथम तो यह अपने घरके धनका आठवाँ भाग ब्राह्म-णको दान करके देदे ॥ ११ ॥ फिर पुराने टूटे फूटे कूए और बावडीको यत्नके साथ सुधरा दे ॥ १२ ॥ माघ, कार्तिक, वैशाख और श्रावणके मही-नेमें विशेष करके प्रतिवर्षमें श्रोत्रिय वेदपाठी ब्राह्मणोंको भोजन करावै ॥१३॥ और 'गायत्री' 'जातवेदसे' इन दोनों मंत्रोंका दो लाख जप करावै, जपका दशांश हवन, तर्पण, मार्जन पूर्णविधिसे करावै ॥ १४ ॥ पाप दूर होनेके लिये महाभारतकी कथा सुनै और दशवर्णवाली गौको सम्पूर्ण पापोंकी शुद्धिके लिये दान करै ॥ १५ ॥ हे वरारोहे ! हे देवि ! ऐसा करनेसे सम्पूर्ण रोग नष्ट होजाते है और वन्ध्यात्व दोष दूर होकर पुत्र उत्पन्न होता है ॥ १६ ॥ काक-वन्ध्या स्त्री भी पुत्रको प्राप्त करती है फिर कन्या उत्पन्न नहीं होती और धनकी

पूर्वजन्मकृतं पापं क्षयं याति न चान्यथा ।
इह लोके सुखी भूयात्पुनः पापं न बाधते ॥ १८ ॥

इति श्रीकर्मविपाकसंहितायां मघानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## अथ द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

श्रीशिव उवाच ॥ अयोध्यायां विशालाक्षि कुलालो वसति प्रिये । मन्थराग्राममध्ये वै स्वकर्मनिरतः सदा ॥ १ ॥ पात्रं वै मृन्मयं देवि प्रकरोति सदा प्रिये । तस्य मित्रं समायातो ब्राह्मणो वेदपारगः ॥ २ ॥ तस्य स्त्री च महादुष्टा ब्राह्मणी व्यभिचारिणी । कुलालतोऽभवत्प्रीतिर्मैथुनं प्रकरोति सा ॥ ३ ॥ ब्राह्मण्यां गमनं नित्यं बहुवर्षं निरन्तरम् । एवं बहुगते काले समतीते सुरेश्वरि ४

---

वृद्धि होती है ॥ १७ ॥ पूर्वजन्ममें किये हुए पाप नष्ट होजाते हैं अन्य प्रकारसे नहीं होते, इस लोकमें सुखी रहता ह फिर उसे पाप नही सताते ॥१८॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मघानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकचत्वारिंशोऽध्यायः॥ ४१ ॥

शिवजी बोले—हे विशालाक्षि ! हे प्रिये ! अयोध्याके समीप मन्थराग्राममे अपने कामको निरन्तर करनेवाला एक कुम्हार रहता था ॥ १ ॥ हे देवि ! हे प्रिये ! यह कुम्हार सदा मिट्टीके वर्तन बनाकर बेंचता था, एक दिन इसका मित्र वेदपाठी ब्राह्मण इसके घर आया ॥ २ ॥ इस आये हुए ब्राह्मणकी स्त्री महादुष्टा और व्यभिचारिणी थी, उसने कुम्हारके साथ प्रीति कर ली और उसके साथ मैथुन कराने लगी ॥ ३ ॥ इस प्रकार कुम्हारने बहुत वर्षोंतक ब्राह्मणीके साथ निरन्तर विषय किया, हे सुरेश्वरि ! जब बहुत

कुलालस्य ततो मृत्युः प्रौढे जाते सुरेश्वरि । पश्चात्तस्य मृता पत्नी या पुरा व्यभिचारिणी ॥ ५ ॥ यमदूतैर्महाघोरे कर्दमे नरके प्रिये । यमाज्ञया च निक्षिप्तौ शुभे वर्षशतंत्रयम् ॥ ६ ॥ अनुगामिनी समायाता शतवर्षत्रये सति । नरकाब्धेः समुद्धृत्य स्वपत्नी च ततः प्रिये ॥ ७ ॥ मृत्युलोके ततो जातौ धनधान्ययुतौ तदा ॥ ८ ॥ पुत्रकन्याविहीनश्च मृतवत्सत्वमाप्तवान् । ब्राह्मणीगमनाद्देवि बहुरोगश्च जायते ॥ ९ ॥ अतः शान्तिं प्रवक्ष्यामि शृणु त्वं गिरिजे शुभे । सर्वस्वदानं कर्त्तव्यं रुद्रमन्त्रजपस्तथा ॥ १० ॥ पूजिताः पार्थिवाश्चैव वाटिकारोपणं तथा । श्रवणं हरिवंशस्य भूमिदानं तथैव च ॥ ११ ॥ गायत्रीमूलमन्त्रेण लक्षजाप्यं तथा प्रिये । होमं च कारयेद्देवि तिलधान्यादितण्डुलैः ॥ १२

---

समय बीत गया तब ॥ ४ ॥ हे सुरेश्वरि ! प्रौढावस्था होनेपर उस कुम्हारकी मृत्यु होगई, पीछे यह व्यभिचारिणी स्त्री भी मरगई ॥ ५ ॥ हे प्रिये ! हे शुभे ! यमराजके दूतोंने यमराजकी आज्ञासे महाघोर कर्दम नरकमें इसे तीन[2] सौ वर्षोंके लिये डालदिया ॥ ६ ॥ हे प्रिये ! फिर इसकी स्त्रीभी वहीं गई दोनोने तीन सौ वर्षतक नरककी पीडा भोगी, जब नरकसे निकले तब ॥ ७ ॥ धनधान्यसे युक्त होकर मृत्युलोकमें मनुष्य हुआ है ॥ ८ ॥ पूर्वजन्ममें ब्राह्मणीके साथ विषय करनेसे सन्तान उत्पन्न होकर मरगई, अब यह पुत्रकन्याओंसे रहित है ॥ ९ ॥ हे गिरिजे ! हे शुभे ! अब इसकी शान्ति कहता हूँ तुम सुनो, प्रथम तो यह अपना सर्वस्व दान करै फिर रुद्रमंत्रका जप करावै ॥१०॥ फिर पार्थिव पूजन करावै और बगीचा लगावै, हरिवंशपुराणका पाठ सुनै, भूमिदान करै ॥ ११ ॥ हे प्रिये ! हे देवि ! गायत्रीमंत्रका एक लाख

---

१ वर्षलक्षत्रय शुभे इति ग्रन्थान्तरे पाठः । २ किसी २ पुस्तकमें तीन लाख वर्षतक डाला यह लिखा है ।

कुण्डे वै कारयेदाशु चतुष्कोणे सुरेश्वरि। दशांशहवनं देवि विधिवत्कारयेद्बुधः ॥ १३ ॥ दशवर्णां ततो दद्यात्स्वर्णनिष्क-चतुष्टयम्। ब्राह्मणान्भोजयेत्षष्टिं पायसान्नैः सशर्करैः ॥ १४ ॥ भूम्या दानं ततो दद्यात्तिलान्दद्यात्प्रयत्नतः। एवं कृते न संदेहो वंशो भवति नान्यथा ॥ १५ ॥ सर्वे रोगाः क्षयं यान्ति न च कन्या प्रसूयते। काकवन्ध्या लभेत्पुत्रं मृतवत्सा च पुत्रिणी १६

इति श्रीकर्मविपाकसंहितायां मघानक्षत्रतृतीयचरणप्रायश्चित्त-कथनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## अथ त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

शिव उवाच ॥ काञ्चीपुर्यां महादेवि वैश्य एकोऽवसत्पुरा।
मकरन्द इति ख्यातस्तस्य स्त्री पालिका शुभा ॥ १ ॥
अश्वादिविक्रयो देवि गजपक्ष्यादिकस्तथा।
प्रत्यहं क्रियते देवि बहु द्रव्यं च संचितम् ॥ २ ॥

---

जप करावै और तिल धान चावलोंसे हवन करावै ॥ १२ ॥ हे सुरेश्वरि ! हे देवि ! चौकोनी कुंड बनवाय उसमें हवन करावै और विधिके अनुसार दशांश हवन, तर्पण, मार्जन करावै ॥ १३ ॥ दशवर्णवाली गौ और सोलह मासे सुवर्णका दान करै, शर्करायुक्त खीरसे साठ ब्राह्मणोको भोजन करावै ॥ १४ ॥ फिर यत्नके साथ भूमि और तिलका दान करै, ऐसा करनेसे निःसन्देह वंश चलता है अन्यथा नही ॥ १५ ॥ समस्त रोग नष्ट होजाते हैं कन्या उत्पन्न नहीं होती और काकवंध्या, मृतवत्साभी पुत्रको प्राप्त करती है ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मघानक्षत्रतृतीयचरण-प्रायश्चित्तकथनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

शिवजी बोले—हे महादेवि ! पूर्वकालमें कांचीपुरीमें मकरंद नामक वैश्य रहता था, पालिका इसकी स्त्री थी ॥ १ ॥ हे देवि ! घोडा, हाथी और पक्षी

न देवं मन्यते देवि पितॄंश्चैव न मन्यते। गते बहुदिने देवि पित्रोश्च मरणं ह्यभूत् ॥ ३ ॥ तयोः श्राद्धं न च कृतं कृपणत्वात्ततः प्रिये। ततो बहुदिनं जातं वृद्धे सति वरानने ॥ ४ ॥ मरणं तस्य वै जातं वैश्यस्य कृपणस्य च। यमाज्ञया तु दूतेन कुम्भीपाके सुदारुणे ॥ ५ ॥ निक्षिप्तः शृंखलैर्बद्धा युगपञ्चदशं तथा। भुक्त्वा नरकजं दुःखं महाकृमिसमाकुलम् ॥ ६ ॥ नरकान्निःसृतो देवि महिषत्वं ततोऽलभत्। पुनर्वै व्याघ्रयोनिश्च मूषयोनिस्ततोऽभवत् ॥ ७ ॥ काकयोनिं ततो भुक्त्वा गजयोनिस्ततोऽभवत्। शुभे देशे विशालाक्षि धनधान्यसमन्वितः ॥ ८ ॥ व्याधिग्रस्तोऽभवद्देवि पुत्रकन्याविवर्जितः। काकवन्ध्याऽभवन्नारी मृतवत्सा च पुत्रिणी ॥ ९ ॥ पूर्वजन्मकृतं पापं यतः शान्तिमवाप्नुयात्। तत्सर्वं शृणु मे देवि विस्तरेण समन्वितम् ॥ १० ॥

---

आदिके क्रयविक्रय करनेसे इस वैश्यने बहुतसा धन संचित किया था ॥ २ ॥ हे देवि ! यह वैश्य देवता और पितरोंको नहीं मानता था, हे देवि ! ऐसे बहुत दिनोंके पीछे इसके माता पिताकी मृत्यु होगई ॥ ३ ॥ हे प्रिये ! हे वरानने ! तब इसने कृपणतावश उनका श्राद्ध नहीं किया, चिरकालके पीछे जब यह वृद्ध हुआ ॥ ४ ॥ तब इस कृपण वैश्यकी भी मृत्यु हुई, उस समय यमराजकी आज्ञासे यमदूतोंने इसको सांकलोंसे बांधकर दारुण कुंभीपाक नरकमें डाल दिया, वहाँ पंद्रह युगोंतक महाकृमियोंसे व्याप्त नरकके दुःखको भोगा ॥ ५ ॥ ६ ॥ हे देवि ! फिर उस नरकमेंसे निकलकर महिषकी योनिको प्राप्त हुआ, महिषकी योनि भोगकर व्याघ्रयोनिको प्राप्त हुआ और व्याघ्रकी योनि भोगकर मूषकयोनिको प्राप्त हुआ ॥ ७ ॥ फिर काकयोनिको प्राप्त हो हाथीकी योनिको प्राप्त हुआ, अब हे विशालाक्षि ! सुन्दर देशमें धनधान्यसे युक्त होकर मनुष्य हुआ है ॥ ८ ॥ हे देवि ! पूर्वकर्मोंके वश यह व्याधियोंसे ग्रसित पुत्र और कन्याओंसे रहित है, इसकी स्त्री काकवन्ध्या, मृतवत्सा और अपुत्रिणी दोषोंसे युक्त है ॥९॥ हे देवि ! पूर्वजन्मके कियेहुए पापोंकी शांतिका

प्रयागे नियतः स्नानं प्रतिमाघं यदा चरेत् । गायत्रीजातवेदोभ्यां दशायुतजपं तथा ॥ ११ ॥ भूमिदानं च वै कृत्वा ततः पुत्रः प्रजायते । वन्ध्यात्वं शममायाति काकवन्ध्या तु शाम्यति ॥ १२ ॥ मृतवत्सा लभेत्पुत्रं चिरञ्जीविनमुत्तमम् । सर्वे रोगाः क्षयं यान्ति नात्र कार्या विचारणा ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां मघानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## अथ चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

पूर्वाफाल्गुनीनक्षत्रफलम् ।

शिव उवाच ॥ सौराष्ट्रविषये देवि शोभनं नाम वै पुरम् ।
तत्र क्षत्री वसत्येको धनधान्यसमन्वितः ॥ १ ॥
मोहनेति[1] च विख्यातस्तस्य पत्नी सती शुभा ।
वैश्यवृत्तिरतो नित्यं व्यापारं कुरुते सदा ॥ २ ॥

---

उपाय विस्तारके साथ कहता हूँ तिसको सुनो ॥ १० ॥ प्रथम यह माघके महीनेमें प्रयागराजमें त्रिवेणीजीमें स्नान करै और गायत्री तथा जातवेदसे इन मंत्रोंका एक एक लाख जप करावै ॥ ११ ॥ फिर पृथ्वीदान करै ऐसा करनेसे पुत्र उत्पन्न होता है और वन्ध्यात्व तथा काकवन्ध्यात्व दोष दूर होकर मृतवत्सा स्त्रीभी चिरंजीवी पुत्रको प्राप्त करती है, संपूर्ण रोग नष्ट होजाते हैं इसमें विचार करनेकी आवश्यकता नहीं है ॥ १२ ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मघानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

शिवजी बोले–हे देवि ! सौराष्ट्रदेशमें शोभन गांवके बीच धनधान्यसे युक्त मोहन नामक क्षत्रिय रहता था, सुलक्षणोंसे युक्त सती स्वरूपिणी

---

१ गोविन्द इति नामा वै इत्यपि पाठः ।

व्यापारार्थं ततो देवि वृषभा बहु पालिताः । द्वौ वृषौ योजितौ देवि कूपे वै पतितौ प्रिये ॥ ३ ॥ मृतौ तौ रात्रिसमये जगाम स तदा न च । पापं च स न जानाति धनगर्वाद्वरानने ॥ ४ ॥ यत्किञ्चित्क्रियते कर्म शुभं वापि सुरेश्वरि । तमोगुणं ततो देवि मोहनो नाम क्षत्रियः ॥ ५ ॥ ततो बहुगते काले मरणं तस्य चाभवत् । पश्चान्मृता तस्य पत्नी महालुब्धा वरानने ॥ ६ ॥ निक्षिप्तो नरके घोरे यमदूतैर्यमाज्ञया । षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ ७ ॥ पुनः सरटयोनिश्च वृषयोनिस्ततोऽभवत् । मानुषत्वं ततो देवि मध्यदेशे वरानने ॥ ८ ॥ वृषयोश्च पुरा मृत्योर्न कृतं पापमोचनम् । तस्माद्व्याधिः समुत्पन्नः पूर्वकर्मप्रपञ्चतः ॥ ९ ॥ मुखरा याऽभवत्पत्नी पुरा च प्रबला प्रिये । पुनर्विवाहिता देवि तद्रूपा मुखरा तथा ॥ १० ॥

---

इसकी स्त्री थी, यह ( मोहन ) वैश्यवृत्तिमें लीन होकर सदा व्यापार करता था ॥ १ ॥ २ ॥ हे देवि ! हे प्रिये ! इसने व्यापारके निमित्त बहुतसे बैलोंको पाला था उनमेंसे दो परस्परमें बंधेहुए बैल कुँएम गिरगये ॥ ३ ॥ हे वरानने ! फिर वह दोनों बैल रात्रिमें मरगये और यह मोहन वहां नहीं गया, न इसने धनके गर्वसे कुछ पापही माना ॥ ४ ॥ हे सुरेश्वरि ! यह मोहन सम्पूर्ण कर्म तमोगुणसे युक्त होकर करता था ॥ ५ ॥ इस भांति बहुत समय बीतनेपर प्रथम इसकी मृत्यु हुई पीछेसे महालोभिनी स्त्रीभी मरगई ॥ ६ ॥ तब यमराजकी आज्ञासे यमदूतोंने साठ हजार वर्षतक नरककी पीडा भोगनेके लिये उसको घोर नरकमें डाल दिया ॥ ७ ॥ हे देवि ! हे वरानने ! उस नरकसे निकलकर सरटयोनिको प्राप्त हुआ, सरटयोनिको भोगकर बैलकी योनिको प्राप्त हुआ, अब बैलकी योनि भोग मध्यदेशमे मनुष्यकी योनिको प्राप्त हुआहै ॥८॥ पूर्वजन्ममें दो बैलोंके मरनेका प्रायश्चित्त न करनेसे इसको यहां व्याधि उत्पन्न हुई है ॥ ९ ॥ हे देवि ! हे प्रिये ! पूर्व जन्मकी वाचाल और प्रबल

तत्पापशमनार्थं च षडंशं दानमाचरेत् । गायत्रीमूलमंत्रेण पंचलक्षजपं यदा ॥ ११ ॥ ततः पापं क्षयं याति शीघ्रं पुत्रो भवेत्प्रिये । अपुत्रा मृतवत्सा च काकवन्ध्या च या शिवे ॥ १२ ॥ पुत्रिण्यश्चैव ताः सर्वा नात्र कार्या विचारणा । रोगाः सर्वे विनश्यंति शीघ्रमेव न संशयः ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाफाल्गुनीनक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

## अथ पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

शिव उवाच ॥ कर्णाटदेशे भो देवि काष्ठकारोऽवसत्पुरा ।
छिनत्ति सर्वकाष्ठानि व्ययं कुर्याद्दिनेदिने ॥ १ ॥
एका च गोत्रजा कन्या तस्यां वै मैथुनं कृतम् ।
ततो बहुगते काले तस्य मृत्युरभूत्पुरा ॥ २ ॥
पश्चात्तस्य मृता नारी कुलटा व्यभिचारिणी ।
यमदूतैर्महाघोरैर्निक्षिप्तो नरकार्णवे ॥ ३ ॥

---

स्त्रीही इस जन्ममें इसको मिली है ॥ १० ॥ उस पापके दूर होनेके लिये यह अपने घरका छठा भाग दान करै और गायत्रीके मूलमन्त्रका पांच लाख जप करावै ॥ ११ ॥ हे प्रिये ! हे शिवे ! तो समस्त पाप दूर होकर पुत्र होताहै और जो अपुत्रा, मृतवत्सा एवं काकवन्ध्या स्त्री है वह सब निःसन्देह इस उपायसे पुत्रवाली होजाती है तथा शीघ्रही सम्पूर्ण रोग नष्ट होजाते हैं इसमें कुछ संशय नहीं है ॥ १२ ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाफाल्गुनीनक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

हे देवि ! पहले कर्णाटदेशमें एक बढई रहता था, यह नित्य काष्ठको चीरकर बेंचता और अपने घरका काम किया करता था ॥ १ ॥ इस बढईने अपने गोत्रकी कन्यासे मैथुन किया और चिरकालके उपरान्त मृत्युको प्राप्त हुआ ॥ २ ॥ पीछे कुलटा और व्यभिचारिणी इसकी स्त्रीभी

यमाज्ञया महादेवि भुक्त्वा नरकयातनाम् । षष्टिवर्षसहस्राणि नरके पच्यते च सः ॥ ४ ॥ कुक्कुटत्वं ततो जातं चक्रवाकस्ततोऽभवत् । मानुषत्वं ततो जातं देशे पूज्यतमे तथा ॥ ५ ॥ शूद्रसेवारतो नित्यं शूद्रस्नेहेन यन्त्रितः । पितुर्मातुर्भवेद्वैरं महिष्याः क्रयविक्रयी ॥ ६ ॥ पूर्वजन्मनि भो देवि कृतं वृक्षस्य भेदनम् । तस्माद्रोगः समुत्पन्नः कटिशूलं निरन्तरम् ॥ ७ ॥ गोत्रकन्याभिगमनं यत्कृतं पूर्वजन्मनि । तेन पापेन भो देवि पुत्रस्य मरणं भवेत् ॥८॥ गर्भस्रावी ततो भार्या काकवन्ध्यात्वमाप्नुयात् । बह्व्यः कन्यास्ततो जाताः कष्टं प्राप्नोत्यहर्निशम् ॥ ९ ॥ अतः शांतिं प्रवक्ष्यामि पूर्वपापविशुद्धये । गृहवित्ताष्टमं भागं ब्राह्मणाय समर्पयेत् ॥ १० ॥ गायत्रीलक्षजाप्येन गोदानेन विशेषतः । वाटिकारोपणेनापि गृहदानेन वै शिवे ॥ ११ ॥

---

मरगई, तब यमदूतोंने इसे नरकरूपी समुद्रमें डाल दिया ॥३॥ हे महादेवि ! यमराजकी आज्ञासे साठ हजार वर्षोंतक इसने नरकमें पीडा भोगी ॥ ४ ॥ फिर मुरगेकी योनि मिली, मुरगेकी योनि भोगनेपर चकवा हुआ चकवेकी योनि भोगकर अब अतिपूज्य देशमे मनुष्य हुआ है ॥ ५ ॥ यह स्नेहसे शूद्रकी सेवा, माता पितासे शत्रुता और भैंसोंका क्रयविक्रय किया करता था ॥ ६ ॥ हे देवि ! पूर्वजन्ममें इसने जो वृक्षोंको काटा है इस कारण इसकी देहमें रोग होते हैं और सदा कमरमें दर्द रहताहै ॥ ७ ॥ हे देवि ! पूर्वजन्ममें गोत्रकी कन्याके साथ मैथुन करनेसे इसके पुत्रकी मृत्यु हुई है ॥ ८ ॥ इसी कारण इसकी स्त्रीके गर्भ गिरजाते हैं, काकवन्ध्यात्व दोष लगा है अनेक कन्या उत्पन्न होगई हैं और रातदिन कष्ट रहता है ॥ ९ ॥ अब इसके पूर्वजन्मके पापोंकी शुद्धिके लिये शांतिको कहताहूँ-प्रथम यह अपने घरका आठवां भाग ब्राह्मणको दान करदे ॥ १० ॥ हे शिवे ! फिर गायत्रीमन्त्रका एक लाख जप करावै

रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा । पूर्वजन्मकृतं पापं क्षयं याति न संशयः ॥ १२ ॥ जायन्ते बहवः पुत्राः शूराः कीर्तिविवर्धनाः । कन्यका नैव जायन्ते वन्ध्यात्वमुपशाम्यति ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाफाल्गुनीनक्षत्रद्वितीयचरण-
प्रायश्चित्तकथनं नाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## अथ षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

शिव उवाच ॥ सिंहले वै महाद्वीपे तत्र सिंहपुरे शिवे । कायस्थो वैष्णवोऽप्येकष्टीकारामेति नामतः ॥ १ ॥ तस्य भार्या विशालाक्षी सूर्यानाम्नी शुभा सती । आतिथ्यकरणे सक्ता देवतातिथिपूजका ॥ २ ॥ कार्त्तिके माघवैशाखे दीपदानं करोति सा । कदाचिद्दैवयोगेन तीर्थयात्रार्थमागतः ॥ ३ ॥

---

गोदान करै, मार्गमे बाग लगावे और घरका दान करै ॥ ११ ॥ इस भांति करनेसे सम्पूर्ण रोग नष्ट होजाते हैं इसमें कुछभी विचारकी आवश्यकता नहीं और पूर्वजन्ममें किये हुए समस्त पाप नष्ट हो जाते हैं इसमे कुछ संशय नहीं है ॥ १२ ॥ और कीर्तिको बढानेवाले बहुतसे शूरवीर पुत्र उत्पन्न होतेहैं फिर कन्या उत्पन्न नही होती, स्त्री काकवन्ध्यात्व दोषसे छूट जाती है ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाफाल्गुनीनक्षत्रद्वितीय-
चरणप्रायश्चित्तकथनं नाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

शिवजी बोले—हे शिवे । सिंहलनामक महाद्वीपमें सिंहपुर गांवमें एक वैष्णव टीकारामनामक कायस्थ रहता था ॥ १ ॥ सूर्यानामवाली विशालनयना सुन्दरी और पतिव्रता उसकी स्त्री थी, यह नित्य देवता और अभ्यागतोंका पूजन किया करती थी ॥ २ ॥ और कार्तिक, माघ तथा वैशाखके महीनेमें दीपदान

स्वर्णकारो महादेवि बहुस्वर्णेन संयुतः। आगतः सिंहनगरे तत्र वासमकारयत् ॥ ४ ॥ प्रीतिः परस्परं जाता कायस्थस्वर्णकारयोः। स्वर्णकारस्य कन्यैका सुंदरी कमलानना ॥ ५ ॥ कायस्थस्याभवद्भार्या दैवयोगात्तदा शिवे। स्वर्णकारस्य यत्सर्वं स्थितं तेन हृतं धनम् ॥ ६ ॥ द्रव्यक्षयमथो ज्ञात्वा स्वर्णकारो मृतः पुरा ॥७॥ पुत्रदारादिकं त्यक्त्वा कायस्थश्च तदा शिवे। तया सार्धं रमत्येको नित्यंनित्यं वरानने ॥ ८ ॥ एवं बहुगते काले कायस्थोऽपि मृतः प्रिये। कुम्भीपाकेऽभवद्वासो वर्षलक्षत्रयं तथा ॥९॥ पुनः कर्मवशाद्देवि मृगयोनिस्ततोऽभवत्। मानुषस्य वरारोहे पुनर्जातो महीतले। धनधान्यसमायुक्तो वंशो नैव प्रजायते ॥ १० ॥ बहुरोगसमायुक्तो ज्वरार्तैर्वै मृतेः समः। पुत्राणां मरणं देवि शीतलाद्यैरुपद्रवैः ॥ ११ ॥

---

करती थी, हे महादेवि! किसी समय दैवयोगसे तीर्थयात्राके लिये आकर बहुतसे सुवर्णसे युक्त एक सुनार सिंहनगरमें वसने लगा ॥ ३ ॥ ४ ॥ यहां टीकाराम कायस्थसे और उस सुनारसे परस्परमें प्रीति होगई. इस सुनारके कमलके समान मुखवाली एक कन्या थी ॥ ५ ॥ हे शिवे! यह सुनारकी कन्या दैवयोगसे टीकाराम कायस्थकी स्त्री होगई और अपने बापका जितना धन था वह सब हर लिया ॥ ६ ॥ अपने धनके हरजानेसे वह सुनार मर गया ॥ ७ ॥ हे शिवे! हे वरानने! यह टीकाराम कायस्थ अपनी स्त्री और पुत्र आदिको छोडकर उस सुनारकी लडकीके साथ प्रतिदिन रमण करने-लगा ॥ ८ ॥ हे प्रिये! ऐसे बहुत समय बीतजानेपर वह कायस्थ मरगया और तीन लाख वर्षतक कुम्भीपाक नरकमें वास किया ॥ ९ ॥ हे देवि! फिर मृगकी योनिको प्राप्त हुआ मृगयोनिको भोगकर हे वरारोहे! पृथ्वीपर धनधान्यसे युक्त होकर मनुष्य हुआ है यहांपर इसका वंश नही चलता है॥१०॥ हे देवि! अनेक रोगोसे युक्त और मृत्युके समान ज्वरसे व्याकुल रहता है,

पूर्वजन्मनि भो देवि परस्त्रीगमनं कृतम् । त्यक्ता विवाहिता नारी पुत्रकन्यासमन्विता ॥ १२ ॥ तत्पापेन च भो देवि पुत्रादीनां विनाशनम् । गर्भनाशो भवेद्देवि वन्ध्यात्वं जायते शिवे । काकवन्ध्या भवेन्नारी सुखं नैव प्रजायते ॥ १३ ॥ स्वल्पभोगी कृशाङ्गश्च कथाश्रवणतत्परः । विद्यादानविहीनश्च स्वकुले बहुनिष्ठुरः ॥ १४ ॥ अस्य शान्तिं प्रवक्ष्यामि कृतं यत्पूर्वजन्मनि । तत्सर्वं शृणु मे देवि यतः शुद्धिमवाप्नुयात् ॥ १५ ॥ गायत्रीमूलमंत्रेण लक्षं जाप्यं वरानने । हवनं तद्दशांशेन तर्पणं मार्जनं ततः ॥ १६ ॥ श्रवणं हरिवंशस्य कुर्यात् त्र्यावृत्तिसंख्यया । दशवर्णाप्रदानं च स्वर्णदानं विशेषतः ॥ १७ ॥ निष्कत्रयं प्रदद्याच्च ततः पापक्षयो भवेत् । भोजयेद्ब्राह्मणान्षष्टिं तथा दद्याच्च दक्षिणाम् ॥ १८ ॥

---

इसके पुत्र शीतलादिके उपद्रवोंसे मरजाते हैं ॥ ११ ॥ हे देवि ! पूर्वजन्ममें इसने परस्त्रीमे गमन किया, अपनी विवाहिता स्त्रीको पुत्रकन्याओंके साथ छोड दिया था ॥ १२ ॥ उस पापसे हे देवि ! इसके पुत्र मरजाते हैं, हे देवि ! हे शिवे ! इसकी स्त्रीके गर्भ गिरजाते हैं और वंध्यात्व दोष लगा है, वह काकवंध्या होगई है उसको सुख नहीं प्राप्त होता है ॥ १३ ॥ यह पुरुष अल्पमैथुन करनेवाला, दुबले शरीरवाला, कथा सुननेमे तत्पर रहनेवाला विद्यादानको न करनेवाला और अपने कुलमें कठोर स्वभाववाला है ॥ १४ ॥ हे देवि ! अब इसके पूर्वजन्ममें किये हुए पापोंकी शांतिको कहताहूँ सो शुद्धिके उपायको तुम सुनो ॥ १५ ॥ हे वरानने ! गायत्रीके मूल मंत्रका एक लाख जप करावै और विधिपूर्वक दशांश हवन, दशांश तर्पण, तद्दशांश मार्जन करावै ॥ १६ ॥ तीन वार हरिवंशपुराणकी कथा सुनै दशवर्णवाली गौका दान करै और विशेष करके सुवर्णका दान करै ॥ १७ ॥ तीन मोहरोंका दान करै फिर साठ ब्राह्मणोंको भोजन कराकर दक्षिणा दे

एवं कृते विधानेन पुत्रो भवति नान्यथा । रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा ॥१९॥ एवं यदा न कुर्यात्तु तदा रोगः पुनः पुनः । जायते नात्र संदेहः पूर्वजन्मफलात्किल २०

इति श्रीकर्मविपाकसंहितायां पूर्वाफाल्गुनीनक्षत्रतृतीयचरण-प्रायश्चित्तकथनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## अथ सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

शिव उवाच ॥ नर्मदादक्षिणे कूले ब्राह्मणो वसति प्रिये । ब्रह्मकर्मकरो नित्यं सदा वेदपरायणः ॥ १ ॥ शंकरस्य पुरे देवि प्रत्यहं वेदपाठनम् । अर्भकान्ब्रह्मजातीयान्पाठयामास वै सदा ॥ २ ॥ तस्य भार्याद्वयं चासीदेका प्रीतिमती सदा । विरोधिनी ततो ह्येका ज्येष्ठां भार्यां ततोऽत्यजत् ॥ ३ ॥ एवं बहुगते काले ब्राह्मणश्च सदाशिवे । ततो मृत्युवशं यातस्तस्य भार्या गरीयसी ॥ ४ ॥

---

तो सम्पूर्ण पाप दूर होजाते है ॥ १८ ॥ ऐसा करनेसे पुत्र होता है अन्यथा नही और समस्त रोग नष्ट होजाते हैं इसमें कुछ विचार नहीं करै ॥ १९ ॥ और जो ऐसा नहीं करते उनको निःसन्देह बारंबार पूर्व जन्मके अनेक रोग होते हैं ॥ २० ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाफाल्गुनीनक्षत्रतृतीय-चरणप्रायश्चित्तकथनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

श्रीशिवजी बोले-हे प्रिये ! नर्मदानदीके दक्षिणकिनारे नित्य ब्रह्मकर्मको करनेवाला वेदपाठी एक ब्राह्मण बसता था ॥१॥ हे देवि ! यह प्रतिदिन शिवपुरीमें पाठ करता और बालकोंको पढाया करता था ॥ २ ॥ इस ब्राह्मणके दो स्त्रियें थीं, यह छोटी स्त्रीसे प्रेम करता था और बडीको इसने छोड दिया था ॥ ३ ॥ हे सदाशिवे ! इस भाँतिसे बहुत समयके पीछे ब्राह्मणकी मृत्यु

चितां कृत्वा प्रयत्नेन भर्तुः खलु वरानने । भर्त्रा सह च भो देवि सती जाता च तत्क्षणात् ॥ ५ ॥ सत्यलोकस्त्वभूत्तस्य जायया सहितस्य वै । बहुवर्षसहस्राणि सत्यलोकेऽवसत्तदा ॥६॥ ततः पुण्यक्षये जाते मर्त्यलोकेऽभवत्पुनः । मानुषत्वं शुभे जन्म कुले महति पूजिते ॥ ७ ॥ धनधान्यसमायुक्तो वंशहीनो विचक्षणः । पूर्वजन्मनि भो देवि भार्यात्यागः कृतो यतः ॥ ८ ॥ तेन दोषेण भो देवि ततः पुत्रो न जीवति । दिनेदिने कुक्षिपीडा तस्य कन्या प्रजायते ॥ ९ ॥ पुण्यं शृणु महादेवि यतः पुत्रः प्रजायते । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ १० ॥ वापीकूपतडागांश्च पथि मध्ये च कारयेत् ॥ ११ ॥ गायत्रीजातवेदोभ्यां जपं कुर्याद्विचक्षणः । होमं च तद्दशांशेन तिलतण्डुलपायसैः ॥ १२ ॥ दशवर्णा प्रदातव्या विप्राणां भोजनं शतम् । एवं कृते न संदेहो वंशलाभो भवेदनु ॥ १३ ॥

---

हुई तब इसकी बडी स्त्री ॥ ४ ॥ हे देवि ! चिता बनाकर इसके साथ उसी समय सती होगई ॥ ५ ॥ फिर यह दोनों स्त्रीपुरुष सत्यलोकमें जाकर हजारों वर्षतक बसते हुए ॥६॥ पुण्यक्षय होनेपर मृत्युलोकमें आकर सुन्दर श्रेष्ठकुलमें मनुष्ययोनिमें जन्म लिया ॥ ७ ॥ हे देवि ! यहाँ धनधान्यसे युक्त और वंश करके हीनहै पूर्वजन्ममें इसने जो अपनी स्त्रीको छोड दिया था ॥८॥ हे देवि ! उस पापसे पुत्र नहीं जीते हैं और प्रतिदिन कोखमें पीडा रहती है एवं कन्या उत्पन्न होती हैं ॥ ९॥ हे देवि ! अब उस पुण्यको सुनो जिसके करनेसे इसके पुत्र हो, प्रथम तो यह अपने घरका छठा भाग पुण्य काममें लगावै॥१०॥ मार्गमें बावडी, कुआँ और तालाब बनवावै ॥ ११ ॥ ‘ गायत्री ’ और जातवेदसे ’ इस मंत्रोंका जप करावे तिल, चावल और खीरसे दशांश हवन मार्जनादि करावै ॥ १२ ॥ दशवर्णवाली गौका दान करै और सौ ब्राह्मणोंको भोजन करावै, ऐसे करनेसे निश्चय वंशलाभ (पुत्र प्राप्त) होताहै॥१३॥

व्याधिश्चैव प्रमुच्येत सत्यं सत्यं वरानने ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाफाल्गुनीनक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अथाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

### उत्तराफाल्गुनीनक्षत्रफलम् ।

शिव उवाच ॥ अयोध्यानगरे देवि वैश्योऽवात्सीत्सुरेश्वरि । स्वकर्मनिरतो दान्तो विष्णुभक्तिपरायणः ॥ १ ॥ धनधान्यसमायुक्तो विप्रसेवासु तत्परः । पत्नी तस्य वरारोहे सुन्दरी च पतिव्रता ॥ २ ॥ कश्चिन्मित्रं प्रियस्तस्य ब्राह्मणो वेदपारगः । प्रत्यहं निकटे तस्य बहु स्वर्णमुपार्जितम् ॥ ३ ॥ ब्राह्मणोऽप्यात्मनः स्वर्णं ददौ वैश्याय वै शिवे । तीर्थयात्राप्रसंगेन वाराणस्यां गतः स वै ॥ ४ ॥ गत्वा काश्यां वरारोहे शरीरं ब्राह्मणोऽत्यजत् । वैश्येन सर्वं तद्द्रव्यं भुक्तं बहुदिनोपरि ॥ ५ ॥

---

और हे वरानने ! सम्पूर्ण व्याधियोंसे मुक्त हो जाता है इसमें कुछ संशय नहीं है ॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाफाल्गुनीनक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

हे देवि ! हे सुरेश्वरि ! अयोध्यापुरीमें एक वैश्य रहता था वह अपने कर्ममें लीन, इन्द्रियोंको जीतनेवाला और विष्णुका भक्त ॥ १ ॥ धनधान्यसे युक्त ब्राह्मणसेवी था, हे वरारोहे ! उसकी स्त्री सुन्दरी पतिव्रता थी ॥ २ ॥ इस वैश्यका एक वेदपाठी ब्राह्मण मित्र था उसके समीपमें रहकर इस वैश्यने बहुतसा धन इकट्ठा किया ॥ ३ ॥ हे शिवे ! इस वैश्यका मित्र ब्राह्मणभी अपना धन वैश्यको देकर तीर्थयात्राके लिये काशीको गया ॥ ४ ॥ हे वरारोहे ! वहां काशीजीमें जाकर इस ब्राह्मणकी मृत्यु होगई, तब इस

शरीरं चात्यजद्देवि पुण्यतीर्थे स्त्रिया सह । अयोध्यायां विशालाक्षि स्वर्गवासं तथाऽक्षयम् ॥ ६ ॥ दशपञ्चयुगं भुक्त्वा फलं चैव मनोहरम् । ततः पुण्यक्षये जाते मृत्युलोके सुरेश्वरि ॥७॥ कुले महति वै पूज्ये नरजन्म ततोऽभवत् । धनधान्यसमायुक्तो विष्णुपूजासु तत्परः ॥ ८ ॥ ब्राह्मणस्यैव स्वर्णं हि न दत्तं वै गृहीतवान् । तस्मात्खलु वरारोहे पुत्रस्तस्य न जायते ॥ ९ ॥ शरीरे च महाकष्टं मध्ये मध्ये प्रजायते । तस्य चोत्तरफल्गुन्याः प्रथमे चरणे शुभे । जन्म चैवाप्यभूद्देवि पुत्रकन्याविवर्जितः ॥ १० ॥ अस्य पापस्य वै शान्तिं पुण्यं शृणु वरानने ॥११॥ हरिवंशश्रवणं कुर्याद्वारमेकं च तत्परः । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ १२ ॥ गायत्रीमूलमन्त्रेण दशायुतजपं तथा । होमं च तद्दशांशेन तर्पणं मार्जनं तथा ॥ १३ ॥

---

वैश्यने उस ब्राह्मणके धनको बहुत समयतक भोगा ॥ ५ ॥ हे देवि ! हे विशालाक्षि ! पीछे अयोध्याजीमें इस वैश्यकी स्त्रीसहित मृत्यु होगई, तब इसको अक्षय स्वर्गवास हुआ ॥ ६ ॥ हे सुरेश्वरि ! वहां पन्द्रह युगतक स्वर्गके मनोहर फलको भोगा, पुण्यके क्षीण होनेपर मृत्युलोकमें ॥ ७ ॥ बडे पूजनीय कुलके बीच धनधान्यसे युक्त विष्णुभक्त होकर जन्म लिया ॥ ८ ॥ हे वरारोहे ! इसने पूर्वजन्ममें जो ब्राह्मणका सुवर्ण ( धन ) लेकर नहीं दिया था उस पापसे इसके पुत्र नहीं हुआ है ॥ ९ ॥ शरीरमें बीच २ में बहुत कष्ट होजाता है, हे शुभे ! हे देवि ! उत्तराफाल्गुनीनक्षत्रके प्रथम चरणमें जन्म होनेसे यह पुत्र और कन्याओंसे रहित है ॥ १० ॥ हे वरानने ! अब इसके उस पुण्यको सुनो जिसके करनेसे इसके पापोंकी शांति होती है॥११॥ प्रथम तो यह भक्तिपूर्वक हरिवंशपुराणकी एक बार कथा सुनै और अपने घरका छठा भाग दान करदे ॥ १२ ॥ गायत्रीके मूलमंत्रका एक लाख जप करावै फिर दशांश हवन, मार्जन और तर्पण करै ॥ १३ ॥

दशवर्णा प्रदातव्या स्वर्णयुक्ता सदंबरा । भूमिदानं ततो देवि विप्राय विदुषे प्रिये ॥ १४ ॥ व्रतं सूर्यस्य वै कुर्यात्पत्न्या सह वरानने ॥ १५ ॥ कूष्माण्डं नारिकेरं च पञ्चरत्नसमन्वितम् । गङ्गामध्ये प्रदातव्यं सुवर्णं दक्षिणां ततः ॥ १६ ॥ शय्यादानं प्रयत्नेन प्रकुर्यान्नियतेन्द्रियः । एवं कृते न सन्देहः सर्वरोगो विनश्यति ॥ १७ ॥ अपुत्रो लभते पुत्रं काकवन्ध्या सुतं लभेत् । मृतवत्सा सुतं सूते चिरजीविनमुत्तमम् ॥ १८ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराफाल्गुनीनक्षत्रप्रथमचरणप्रायश्चित्तकथनं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## अथैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

शिव उवाच ॥ पुरुषोत्तमपुरे रम्ये स्वर्णकारोऽवसत्पुरा ।
स्वकर्मनिरतो नित्यं हेमकृत्यविचक्षणः ॥ १ ॥

---

हे देवि ! हे प्रिये ! दशवर्णवाली गौका सुवर्ण और वस्त्रके साथ दान करै और पृथ्वीदान करके विद्वान् ब्राह्मणको दे ॥ १४ ॥ हे वरानने ! स्त्रीके साथ सूर्यनारायणका व्रत रविवारको करै ॥ १५ ॥ कूष्मांड और नारियलको पंचरत्नोंके साथ गंगाजीमें खडे होकर दान करै और सुवर्णकी दक्षिणा देवै ॥१६॥ मन और इन्द्रियोंको एकाग्र करके सावधानीसे शय्यादान करै ऐसा करनेसे सब रोग नष्ट हो जाते है ॥ १७ ॥ पुत्रहीन पुत्रको पाता, काकवंध्या पुत्रको पाती एवं मृतवत्सा स्त्री चिरंजीवी उत्तम पुत्रको प्राप्त करती है ॥ १८ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराफाल्गुनीनक्षत्रप्रथमचरणप्रायश्चित्तकथनं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

शिवजी बोले-पूर्वकालमे रमणीक पुरुषोत्तमपुरके बीच एक सुनार रहता था,

ब्राह्मणस्तस्य वै मित्रं धनाढ्यो वेदवर्जितः । तेन विप्रेण भो
देवि स्वर्णं दत्तं शतं पलम् ॥ २ ॥ स्वर्णकाराय मित्राय माल्याय
च विचक्षणे । ब्राह्मणाय न दत्तं हि माल्यं दिव्यं वरेऽनघे ॥ ३ ॥
ब्राह्मणस्याभवन्मृत्युः किञ्चित्काले गते सति । स्वर्णं तत्स्वे-
च्छया भुक्तं पुत्रदारयुतेन च ॥ ४ ॥ ततो बहुगते काले स्वर्ण-
कारस्य वै शिवे । मरणं वै तदा जातं पुत्रदारयुतस्य च ॥ ५ ॥
महाकटाहनरके दूतैः क्षिप्तो यमाज्ञया । युगमेकं वरारोहे भुक्तं
नरकजं फलम् ॥ ६ ॥ नरकान्निर्गतो देवि व्याघ्रयोनिस्ततो-
ऽभवत् । व्याघ्रयोनिं ततो भुक्त्वा शृगालस्तु ततोऽभवत् ॥ ७ ॥
ततः काकस्य वै योनिं भुक्त्वा नरकमाप्तवान् । देशे पुण्यतरे
देवि मानुषत्वं सुरेश्वरि ॥ ८ ॥ पूर्वजन्मनि यत्स्वर्णं ब्राह्मणस्य
हृतं प्रिये । तेन पापेन भो देवि पुत्रो नैव प्रजायते ॥ ९ ॥

---

यह सुवर्णके आभूषण बहुत अच्छे बनाता था ॥ १ ॥ हे देवि ! धनवान् और वेदसे हीन एक ब्राह्मण इस सुनारका मित्र था, उस ब्राह्मणने चार सौ तोले सुवर्ण माला बनानेके लिये अपने मित्र इस सुनारको दिया, हे वरे ! हे अनघे ! उस सोनेकी सुंदर माला बनाकर इस सुनारने ब्राह्मणको नहीं दी ॥ २ ॥ ३ ॥ कुछ समयके उपरान्त वह ब्राह्मण मरगया, तब इस सुनारने अपनी इच्छानुसार उस ब्राह्मणके सुवर्णको स्त्री पुत्रादिकोके सहित भोगा ॥ ४ ॥ हे शिवे ! तिसके पीछे बहुत समय बीतजानेपर सुनार स्त्रीपुत्रादिके सहित मृत्युको प्राप्त हुआ ॥ ५ ॥ हे वरारोहे ! तब महाकटाह नरकमें यमराजकी आज्ञासे यमदूतोंने इसे डाल दिया, वहां एकयुगतक इसने नरकयंत्रणा भोगी ॥ ६ ॥ हे देवि ! जब नरकसे निकला तब व्याघ्र हुआ व्याघ्रकी योनि भोगकर शृगाल हुआ ॥ ७ ॥ फिर कौएकी योनि पाकर नरकमें गया, हे देवि ! हे सुरेश्वरि ! तिस पीछे बडे पवित्र देशमें मनुष्य हुआ ॥ ८ ॥ हे प्रिये ! हे देवि ! पूर्वजन्ममें इसने जो ब्राह्मणका सुवर्ण हरलिया था उस पापसे इसके

गर्भस्रावी भवेन्नारी काकवन्ध्या च जायते। अस्य पापस्य वै शान्तिं शृणु देवि सुशोभने ॥ १० ॥ षडंशं च ततो दानं ब्राह्मणाय समर्पयेत्। दशायुतजपं कुर्याद्गायत्र्या नियमेन च ॥११॥ हरिवंशश्रवणं देवि संकल्प्य श्रद्धया युतम्। होमं वै कारयेद्देवि स्वर्णदानं शतं पलम् ॥ १२ ॥ गोदानं विधिवत्कुर्याच्छिवपूजनमेव च। एवं कृते न संदेहः शीघ्रं पुत्रमवाप्स्यति ॥१३॥ मृतवत्सा लभेत् पुत्रं चिरजीविनमुत्तमम्। काकवन्ध्या प्रसूयेत सत्यमेव न संशयः। रोगात्प्रमुच्यते शीघ्रं ज्वरः सर्वः क्षयं व्रजेत्॥

इति श्रीकर्मविपाकसंहितायामुत्तराफाल्गुनीनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम एकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

---

## अथ पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

श्रीशिव उवाच ॥ पुरे वै पट्टने देवि तैलकारोऽवसत्पुरा।
महाधनाढ्यो वै देवि कोटिद्रव्येण संयुतः ॥ १ ॥

---

पुत्र नहीं होता है ॥ ९ ॥ हे सुशोभने ! इसकी स्त्रीके गर्भस्राव हो जाते हैं और काकवन्ध्यापनका दोष लगा है, अब इसकी शान्तिको सुनो ॥ १० ॥ प्रथम तो यह अपने घरका छठा भाग ब्राह्मणको दान करै फिर नियमपूर्वक गायत्रीका एक लाख जप करावै ॥ ११ ॥ हे देवि ! फिर श्रद्धाके साथ संकल्प करके हरिवंशपुराणकी कथा सुनै, हे देवि ! होम करावै और चार सौ तोले सुवर्णका दान करै ॥ १२ ॥ विधिपूर्वक गोदान करके शिवजीका पूजन करै तो निःसन्देह पुत्र प्राप्त होता है ॥ १३ ॥ और मृतवत्सा स्त्री शीघ्र पुत्रको प्राप्त करती है, काकवंध्या स्त्रीभी पुत्रको प्राप्त कर काकवंध्यात्वदोषसे छूट जाती है मनुष्य संपूर्ण रोगोंसे शीघ्र मुक्त हो जाता है और सर्व ज्वर नष्ट हो जाते हैं१४॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराफाल्गुनीनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

---

शिवजी बोले—पहले पट्टनपुरमें महाधनी करोडपति एक तेली वसता था ॥१॥

तस्य च स्त्रीद्वयं चासीज्ज्येष्ठायै वै विषं ददौ । कनिष्ठा च गृहे तस्य गृहिणी धर्मचारिणी ॥ २ ॥ एवं बहुगते काले तैलकारस्य वै शिवे । मरणं तस्य वै जातं यमदूतैर्यमाज्ञया ॥ ३ ॥ महाकटाहे नरके निक्षिप्तश्च सुदारुणे । तत्रापि बहुधा पीडा नानानरकयातना ॥४॥ त्रिंशत्सहस्रं वै वर्षं तीव्रदुःखमजायत । भुक्तं नरकजं दुःखं योनिं सर्पस्य वै शिवे ॥ ५ ॥ गृध्रत्वं कुक्कुटत्वं वै द्वे योनी च तदा गतः । मानुषस्य च वै योनौ जातः खलु वरानने ॥ ६ ॥ धनधान्यसमायुक्तो गुणज्ञो ज्ञानवानपि ॥ ७ ॥ ततो वै तस्य मरणं गंगायां देवि जायते । तत्फलेन महादेवि मानुषो धनवानभूत् ॥८॥ तैलकारश्च यत्पूर्वं ज्येष्ठायै च विषं ददौ । तत्पापेनैव भो देवि पुत्रो नैव प्रजायते । बहुरोगेण संयुक्तो भार्या कष्टयुता सदा ॥९॥ अथ शान्तिं प्रवक्ष्यामि शृणु देवि सविस्तराम् । गृहवित्ताष्टमं भागं पुण्यकार्ये च कारयेत् १०॥

---

इस तेलीकी दो स्त्रियें थी, उनमें बडी स्त्रीको तेलीने विष देकर मारडाला और छोटी स्त्रीको अपनी गृहिणी बनाया ॥ २ ॥ हे शिवे ! ऐसे बहुत काल बीतनेपर उस तेलीकी मृत्यु हो गई, तब यमराजकी आज्ञासे यमदूतोने ॥३॥ दारुण महाकटाह नरकमें डाल दिया, वहाँ तीस हजार वर्षतक नरककी अनेक भाँतिसे यंत्रणा और बडे दुःख भोगे हे शिवे ! इन नरकके दुःखोंको भोगकर इसे सर्पकी योनि मिली ॥ ४ ॥ ५ ॥ हे वरानने ! गिद्ध और मुरगेकी योनि मिली फिर मनुष्ययोनिको प्राप्त हुआ है ॥ ६ ॥ यहाँ यह धनधान्यसे युक्त, गुणवान् और ज्ञानवान् हुआ ॥ ७ ॥ तिस पीछे गंगाजीमें इसकी मृत्यु हो गई हे महादेवि ! तिसके फलसे यह धनवान् हुआ ॥ ८ ॥ हे देवि ! पूर्वकालमें इसने जो अपनी स्त्रीको विष दिया था तिस पापसे इसके पुत्र नहीं होता है, अनेक रोगोंसे युक्त रहता है और इसकी स्त्री सदा कष्टोंसे व्याकुल रहती है ॥ ९ ॥ हे देवि ! अब

गायत्रीमूलमंत्रेण लक्षजाप्यं च कारयेत् । हवनं तद्दशांशेन मार्जनं तर्पणं तथा ॥ ११ ॥ त्र्यम्बकेति च मन्त्रेण दशायुतजपं पुनः । दशवर्णादानमथ कूष्मांडं रत्नसंयुतम् । काश्यां वै ग्रहणे दद्यात्पत्न्या सार्धं वरानने ॥ १२ ॥ कार्त्तिके माधवे माघे प्रातः स्नानं समाचरेत् । तिलधेनुं ततो दत्त्वा सद्यः पापात्प्रमुच्यते ॥ १३ ॥ एवं कृते न संदेहो वंशलाभो भवेद् ध्रुवम् । कन्यकाजननी चापि सापि पुत्रवती भवेत् ॥ १४ ॥ मृतवत्सा लभेत्पुत्रं चिरंजीविनमुत्तमम् । रोगात्प्रमुच्यते शीघ्रं ज्वरो नैव प्रजायते ॥ १५ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराफाल्गुनीनक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम पंचाशत्तमोऽध्यायः ॥ ५० ॥

---

इसकी शान्तिको विस्तारसे कहता हूँ उसको सुनो, प्रथम यह अपने घरका आठवां भाग पुण्यकाममें लगावै ॥१०॥ फिर गायत्रीका एक लाख जप करावै दशांश हवन, मार्जन और तर्पण करावे ॥ ११ ॥ पीछे त्र्यंबक मंत्रका एक लाख जप करावै, दशवर्णवाली गौका दान करै और हे वरानने ! काशीजीमें ग्रहणके समय कुम्हडेको रत्नके साथ सस्त्रीक दान करे ॥ १२ ॥ कार्त्तिक, वैशाख और माघके महीनेमें प्रातःकाल स्नान करके तिल और गौका दान करै तो शीघ्र पापसे छूट जाता है ॥ १३ ॥ ऐसा करनेसे निःसन्देह शीघ्र पुत्र होता है और कन्याओंको उत्पन्न करनेवाली स्त्री भी पुत्रवती होती है॥१४॥ मृतवत्सा स्त्री भी उत्तम चिरंजीव पुत्रको प्राप्त करती है और मनुष्य रोगसे मुक्त हो जाता है फिर उसको ज्वरकी बाधा नहीं होती है ॥ १५ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराफाल्गुनीनक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम पंचाशत्तमोऽध्यायः ॥ ५० ॥

---

## अथैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

शिव उवाच ॥ गयापुर्यां पुरा देवि ब्राह्मणो वसति प्रिये । वेद-कर्मपरिभ्रष्टो मद्यपानरतः सदा ॥ १ ॥ स्तेयवेश्यासु संसर्गी स प्रतिग्रहवानपि । वयः सर्वं गतं देवि वृद्धे जाते मृतः स वै ॥ २ ॥ यमदूतो महाघोरे कटाहनरकेऽक्षिपत् । लक्षत्रयमितं देवि भुक्तं नरकजं फलम् ॥ ३ ॥ चाणूरस्य कुले जन्म ततः प्रेतो ह्यभूत् पुरा । बिडालत्वं ततो यातः फल्गुतीर्थे मृतः स वै ॥ ४ ॥ पुनर्मानुषयोनिश्च मध्यदेशे सुरेश्वरि । कन्यकाजननी भार्या शरीरे सततं ज्वरः ॥ ५ ॥ चित्तोद्विग्नः सदा देवि बहुदुःखेन पीडितः । अस्य शांतिं शृणुष्वादौ यतः पापक्षयो भवेत् ॥ ६ ॥ केशवस्यार्चनं चादौ साधूनां सेवनं यदा । ब्राह्मणे दृढभक्तिश्च दाने वै भोजने तथा ॥ ७ ॥

---

शिवजी बोले—हे देवि ! हे प्रिये ! एक ब्राह्मण पहले गयाजीमें वेदकर्मसे भ्रष्ट सदा मद्यपान करनेवाला वसता था ॥ १ ॥ हे देवि ! यह चोर, वेश्यागामी और दान लिया करता था, इस भाँति सब आयु बीतनेपर वृद्ध होकर मरगया ॥ २ ॥ हे देवि ! तब यमदूतोने घोरकटाह नरकमें डाल दिया, वह तीन लाख वर्षतक नरककी पीडा भोगी ॥ ३ ॥ फिर चाणूर नामक कुलमें जन्म हुआ, पुनः प्रेतयोनि मिली पीछे बिल्लीकी योनि पाकर फल्गुतीर्थमें मरगया ॥ ४ ॥ हे सुरेश्वरि ! फिर मध्यदेशमें मनुष्यकी योनि मिली यहां इसकी स्त्रीके कन्या उत्पन्न हुई और सदा शरीरमें ज्वर रहता है ॥ ५ ॥ हे देवि ! इसका चित्त सदा उद्विग्न और दुःखोसे पीडित रहना है, अब इसकी शांतिको सुनो जिससे इसके पाप नष्ट होते हैं ॥ ६ ॥ यह प्रथम तो विष्णुभगवान्‌का पूजन करै, साधुओंकी सेवा करै, ब्राह्मणोंको दान देनेमें और भोजन

गां सवत्सां ततो दद्याद्विप्राय प्रतिवत्सरम् । श्राव्यं च विष्णु-माहात्म्यं हरिवंशश्रवणं तथा ॥८॥ एवं कृते न संदेहो बहुपुत्रः प्रजायते । रोगाः सर्वे क्षयं यान्ति काकवन्ध्या च पुत्रिणी ॥ ९ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराफाल्गुनीनक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥

---

## अथ द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

हस्तनक्षत्रफलम् ।

शिव उवाच ॥ स्वर्णकारोऽवसद्देवि पुरे भोजकटे शुभे । स्त्री च तस्य महादुष्टा परपुंसि रता सदा ॥ १ ॥ तद्गृहे वैश्य एकोऽपि ह्यागतो धनसंयुतः । स्वर्णकारस्य वैश्यस्य दृढा प्रीति-रभूत्तयोः ॥ २ ॥ व्यापारार्थं गृहीतं तु वैश्यात्स्वर्णं तदा प्रिये । पलं शतमितं देवि विक्रयं चाकरोत्किल ॥ ३ ॥

---

करानेमें दृढभक्ति रक्खै ॥ ७ ॥ प्रतिवर्ष बछडे सहित गौ दान करके ब्राह्मणको दे और विष्णुके माहात्म्यको तथा हरिवंशपुराणकी कथाको सुनै ॥ ८ ॥ ऐसा करनेसे निःसन्देह अनेक पुत्रोंको प्राप्त होता है, काकवन्ध्या स्त्री पुत्रको प्राप्त करती है और समस्त रोग नष्ट हो जाते हैं ॥ ९ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराफाल्गुनीनक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥

---

शिवजी बोले—हे देवि ! सुन्दर भोजकटनामक नगरमे एक सुनार रहता था उसकी स्त्री सदा परपुरुषगामिनी दुष्टा थी ॥ १ ॥ सुनारके घर एक दिन धन लेकर एक वैश्य आया तब सुनारके साथ उस वैश्यकी प्रीति हो गई॥२॥ हे प्रिये ! हे देवि ! व्यापार करनेके लिये सुनारने वैश्यसे चार सौ तोले

स्वर्णकारस्य या पत्नी सुंदरी कुलटा परा । प्रीत्या तदाऽभजत् पत्नी वैश्याय धनिकाय वै ॥ ४ ॥ एवं बहुगते काले वैश्यस्य मरणं भवेत् । पश्चान्मृतस्तदा सोऽपि स्वर्णकारो वरानने ॥५॥ उभौ च नरके यातौ बहुकालं तु दोषतः । युगमेकमितं देवि भुक्त्वा नरकयातनाम् ॥ ६ ॥ नरकान्निःसृतौ तौ तु श्वानयोनिं तदा गतौ । पुनर्वृषभयोनिं च नरयोनिं ततो गतौ ॥ ७ ॥ महाधनसमायुक्तौ देशे पुण्यतमे शुभे । पूर्वजन्मप्रसंगेन स वैश्योऽपुत्रतां गतः ॥ ८ ॥ भार्या तस्य तु भो देवि या पुरा व्यभिचारिणी । पुत्रोत्पत्तिस्तदा तस्या मरणं शीघ्रमाप्तवान् । शरीरे महती पीडा सततं चिन्तया युतः ॥ ९ ॥ अस्य शान्तिं प्रवक्ष्यामि यथोक्तं शृणु वल्लभे । गृहवित्ताष्टमं भागं पुण्यकार्ये च कारयेत् ॥ १० ॥ जातवेदेति मन्त्रेण पंचायुतजपं तथा । दशांशं हवनं कुर्यात्तर्पणं मार्जनं तथा ॥ ११ ॥

---

सुवर्ण लिया और अपनी विक्री करने लगा ॥ ३ ॥ इधर सुनारकी सुन्दरी जो कुलटा स्त्री वह प्रीतिपूर्वक वैश्यके साथ रमण करने लगी ॥ ४ ॥ इस प्रकार बहुत काल बीतजानेपर वह वैश्य मर गया, हे वरानने ! पीछे सुनार भी मरगया ॥ ५ ॥ हे देवि ! तब दोनोने ( वैश्य और सुनारने ) नरकमें जाकर एक युगतक नरककी पीडा भोगी ॥ ६ ॥ फिर नरकसे निकलकर दोनोने कुत्तेकी योनि भोगी, तिस पीछे बैलकी योनिको भोगकर मनुष्ययोनिको प्राप्त हुए ॥ ७ ॥ सो वह सुनार पवित्र देशमें महाधनसे युक्त है और वैश्यके पूर्वजन्मके प्रसंगसे पुत्रहीन है ॥ ८ ॥ हे देवि ! इसकी स्त्री जो पूर्वजन्ममें व्यभिचारिणी थी उसके अब पुत्रकी उत्पत्ति तो होती है परन्तु वह पुत्र शीघ्र मर जाताहै तिससे इसके शरीरमे बडी पीडा और चिन्ता रहती है ॥ ९ ॥ हे वल्लभे ! अब विधिपूर्वक इसकी शान्तिको कहता हूँ उसको सुनो-प्रथम तो यह अपने घरका आठवां भाग पुण्यकार्यमें लगावै ॥ १० ॥ पीछे 'जातवेदसे०' इस मंत्रका पचास हजार जप करावे

पापशान्त्यै च भो देवि भोजयेद्ब्राह्मणाञ्छतम् । गोदानं च विशेषेण शय्यादानं तथा प्रिये ॥ १२ ॥ प्रतिमां कारयेद्देवि सुवर्णस्य तदा शुभे । एकादशपलैनैव रचितां वस्त्रभूषिताम् ॥ १३॥ पूजयेद्विधिवद्देवि मन्त्रेणानेन वै शिवे ॥ १४ ॥ श्रीविष्णो पुंडरीकाक्ष भुवनानां च पालक । चन्दनैः प्रतिमां देव पूजयामि गृहाण भोः ॥ १५ ॥ ॐ शंखाय नमः ॥ ॐ चक्राय नमः ॥ ॐ गदायै नमः ॥ ॐ शार्ङ्गाय नमः ॥ ॐ गरुडाय नमः ॥ ॐ नन्दाय नमः ॥ ॐ सुनन्दाय नमः ॥ ॐ जयाय नमः ॥ ॐ विजयाय नमः ॥ ॐ किरीटिन्महादेव शंखचक्रगदाधर ॥ पापं मया कृतं पूर्वं तत्क्षमस्व दयानिधे ॥ १६ ॥ ततः प्रदक्षिणां कुर्यात्पत्न्या सह वरानने । प्रतिमां पूजितां चैव ब्राह्मणाय समर्पयेत् ॥ १७ ॥

---

और दशांश विधिपूर्वक हवन मार्जनादि करावै ॥ ११ ॥ हे देवि ! हे प्रिये ! पापसे मुक्त होनेके लिये यह सौ ब्राह्मणोंको भोजन करावै, गोदान करै, विशेषकर शय्यादान करै ॥ १२ ॥ हे देवि ! फिर चवालीस तोले सोनेकी भगवान्की मूर्ति बनवाकर वस्त्रसे भूषित करै ॥ १३ ॥ हे देवि ! फिर इन ( आगे कहे ) मंत्रोंसे विधानके साथ पूजन करे ॥ १४ ॥ हे श्रीविष्णो ! हे पुंडरीकाक्ष ! हे भुवनोंके पालक ! हे देव ! चन्दनादिसे मै आपकी मूर्तिका पूजन करता हूँ तिसको ग्रहण करो ॥ १५ ॥ ॐ शंखाय नमः, ॐ चक्राय नमः, ॐ गदायै नमः, ॐ शार्ङ्गाय नमः, ॐ गरुडाय नमः, ॐ नन्दाय नमः, ॐ सुनन्दाय नमः, ॐ जयाय नमः, ॐ विजयाय नमः, हे किरीटिन् ! हे महादेव ! हे शंखचक्रगदाधर ! हे दयानिधे ! मेरे पूर्वजन्मके किये हुए पापोंको क्षमा करो ॥ १६ ॥ हे वरानने ! फिर स्त्रीसमेत मूर्तिकी परिक्रमा करै और पूजन कीहुई प्रतिमाको ब्राह्मणको समर्पण करै ॥ १७ ॥

एवं कृते तदा देवि पुत्रो भवति नान्यथा ।
रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा ॥ १८॥

इति श्रीकर्मविपाकसंहितायां हस्तनक्षत्रप्रथमचरणप्रायश्चित्त-
कथनं नाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥

---

अथ त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

शिव उवाच ॥ वङ्गदेशे महादेवि केशवं नाम वै पुरम् । खङ्गनामेति विख्यातो नापितो वसति प्रिये ॥ १ ॥ महाधन-समायुक्तो भाग्यवान्देवपूजकः । तस्य पत्नी विशालाक्षी लीलानाम्नीति विश्रुता ॥ २ ॥ तस्यां पुत्रद्वयं जातं नापितस्य तदा प्रिये । एको द्यूतरतः पुत्रो द्वितीयश्चोरसंमतः ॥ ३ ॥ परस्त्रीलम्पटो देवि नापितस्य च वै सुतः । ज्येष्ठपुत्रस्य या भार्या पुंश्चली चातिसुन्दरी ॥ ४ ॥ नापितं प्राभजत्सा तु श्वशुरं खङ्ग-नामकम् । एवं बहुगते काले तस्य मृत्युरभूत्तदा ॥ ५ ॥

---

हे देवि ! ऐसा करनेसे पुत्र होता है अन्य प्रकारसे नहीं होता, और समस्तरोग नष्ट हो जाते है इसमे कुछ विचार न करै ॥ १८ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां हस्तनक्षत्रप्रथमचरणप्राय-
श्चित्तकथनं नाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥

---

शिवजी बोले-हे महादेवि ! हे प्रिये ! बंगालेमें केशवनामक पुरके बीच एक खङ्गनामसे विख्यात नाई रहता था ॥ १ ॥ यह महाधनी, भाग्यवान् और देवताकी पूजा करता था और इसकी स्त्री विशालाक्षी लीलानामसे प्रसिद्ध थी ॥२॥ हे प्रिये ! उस नाईके दो पुत्र हुए उनमेसे एक तो ज्वारी और दूसरा चोर परस्त्रीगामी हुआ, हे देवि ! इस नाईके बडे बेटेकी बहू व्यभि-चारिणी और बडी सुंदरी थी ॥ ३ ॥ ४ ॥ सो वह अपने श्वशुर खङ्ग नामक नाईके साथ रमण करनेलगी, ऐसे बहुत समयके पीछे नाईकी मृत्यु होगई ॥५॥

तदा पत्नी सती जाता नापितस्य चिताग्निना । सत्यलोकमभूद्देवि भार्यया सहितस्य वै ॥ ६ ॥ युगमेकायुतं देवि सत्यलोकेऽवसत्तदा । ततः पुण्यक्षये जाते पुनर्मानुष्यमाप्तवान् ॥ ७ ॥ धनधान्यसमायुक्तो ह्यपुत्रश्च सुशोभने । पञ्च कन्याः प्रजायन्ते व्याधिस्तस्य प्रजायते ॥८॥ अस्य शान्तिं प्रवक्ष्यामि पूर्वपापक्षयो यतः । गृहवित्ताष्टमं भागं ब्राह्मणाय समर्पयेत् ॥ ९ ॥ गायत्रीमूलमंत्रेण लक्षजाप्यं च कारयेत् । हवनं तद्दशांशेन तर्पणं मार्जनं तथा ॥ १० ॥ मार्गे वै वापिकां कूपं तडागं चैव कारयेत् । तुलसीसेवनं नित्यमेकादश्या व्रतं ततः ॥ ११ ॥ वृंताकं मूलिका चैव न भोक्तव्यं कदाचन । दानं च दशवर्णाया हरिवंशश्रुतिस्तथा ॥ १२ ॥ एवं कृते न सन्देहः पुत्रो भवति तस्य वै । कन्यका नैव जायन्ते वन्ध्यात्वं च प्रशाम्यति । रोगाः सर्वे क्षयं यान्ति काकवंध्या लभेत्सुतम् ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां हस्तनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

तब उसकी स्त्री नाईके साथ चिताकी अग्निमे सती हो गई हे देवि ! सतीके प्रभावसे इस नाईको स्त्रीके साथ सत्यलोकमे वासस्थान मिला ॥६॥ हे देवि ! दश हजार युगतक यह दोनों सत्यलोकमे रहे. फिर पुण्य क्षीण होनेपर यह मनुष्य योनिको प्राप्त हुए ॥ ७ ॥ हे सुशोभने ! यहां धनधान्यसे युक्त और पुत्रसे रहित है इसके पांच कन्या उत्पन्न हुई और यह व्याधियोंसे युक्त रहता है ॥ ८ ॥ अब इसकी शान्तिको कहता हूँ जिससे इसके पूर्वजन्मके पाप नष्ट हो जायँ, प्रथम तो यह अपने घरका आठवां भाग ब्राह्मणको समर्पण करै ॥ ९ ॥ फिर गायत्रीके मूलमंत्रका एक लाख जप करावे और विधिपूर्वक दशांश हवन मार्जनादि करावे ॥ १० ॥ और मार्गमें बावडी, कुवा, तलाव बनवावै, प्रतिदिन तुलसीका पूजन करे एकादशीका व्रत रहै ॥ ११ ॥ बैंगन और मूलीको न खाय फिर दशवर्णवाली गौका दान करै और हरिवंशपुराणकी कथाको सुनै ॥ १२ ॥ ऐसा करनेसे निःसन्देह पुत्र होता है,

## अथ चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

शिव उवाच ॥ कौशिकीदक्षिणे कूले कारुको वसति प्रिये । विष्णुभक्तिरतो नित्यं कृषिकर्मसु तत्परः ॥ १ ॥ धनं तु संचितं देवि कार्पण्यात् पुण्यवर्जितः । एकस्मिन्समये रात्रौ क्षेत्रे व्याघ्रेण वै हतः ॥ २ ॥ यमदूतैर्महाघोरे रौरवे नरके गतः । षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ ३ ॥ ततः कर्मवशाद्देवि बिडालत्वं स्म जायते । ततः कुक्कुटयोनिर्वै शृगालत्वं ततोऽभवत् ॥ ४ ॥ पुनर्मानुषयोनिश्च मध्यदेशे वरानने । पुत्रकन्याविहीनश्च अर्शोरोगेण पीडितः ॥ ५ ॥ अस्य शान्तिं प्रवक्ष्यामि पूर्वपापविशुद्धये । सूर्यमाराधयेन्नित्यं व्रतं सूर्यस्य वासरे ॥ ६ ॥

---

फिर कन्या उत्पन्न नहीं होती स्त्रीका वंध्यात्वदोष जाता रहता है और संपूर्ण रोग नष्ट होजाते है काकवंध्याभी पुत्रको प्राप्त करती है ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां हस्तनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

श्रीशिवजी बोले हे-प्रिये ! कौशिकीनदीके दक्षिणतटपर एक चटाई बनानेवाला रहता था वह विष्णुभगवान्में प्रीति रखता और खेती करता था ॥१॥ इसने धन तो बहुत संचय किया परन्तु कृपणताके कारण उसमेंसे कुछभी पुण्य नही किया. एक समय रात्रिके बीच उसको खेतमें व्याघ्रने मारडाला ॥ २ ॥ तब यमदूतोंने महाघोर रौरवनरकमें उसे डाल दिया वहां साठ हजार वर्षतक नरककी पीडा भोगी ॥ ३ ॥ हे देवि ! फिर कर्मवश बिलाव हुआ मुर्गा हुआ और सियार हुआ ॥ ४ ॥ हे वरानने ! फिर मध्यदेशमें अब मनुष्य हुआ है, यहां पापकर्मवश पुत्र कन्याओसे रहित और अर्श ( बवासीरके ) रोगसे दुःखी है ॥ ५ ॥ अब इसके पूर्वजन्मोंके पापोंकी शांतिको कहता हूँ-प्रथम यह प्रातिदिन सूर्यनारायणकी आराधना करे और

गायत्रीमूलमंत्रेण दशायुतजपं ततः । प्रयागे नियतः स्नानं माघवैशाखकार्त्तिके ॥ ७ ॥ भूमिदानं ततो देवि वित्तशाठ्यं न कारयेत् । ततो गोमिथुनं दानं सर्वालङ्कारभूषितम् ॥ ८ ॥ कूष्माण्डं नारिकेरं च पञ्चरत्नसमन्वितम् । गङ्गामध्ये प्रदातव्यं तुलसीपत्रसंयुतम् ॥९॥ माल्यं च कारयेद्देवि हेम्नो दशपलस्य वै। विधिपूर्वं विशेषेण विविधं गन्धचर्चितम् ॥ १०॥ आचार्याय ततो दद्यात् सर्वपापं विनाशयेत् । पुत्रश्च जायते देवि कन्यका नैव जायते ॥११॥ सर्वे रोगाः क्षयं यान्ति वंध्यात्वं च प्रणश्यति । काकवन्ध्या लभेत्पुत्रं मृतवत्सा च पुत्रिणी । अधनो धनमाप्नोति नात्र कार्या विचारणा ॥ १२ ॥

इति श्रीकर्मविपाकसंहितायां हस्तनक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

प्रत्येक रविवारको सूर्यनारायणका व्रत रहे ॥ ६ ॥ गायत्रीके मूलमंत्रका एक लाख जप करावै, प्रयागराजमें नियमके साथ माघ, वैशाख और कार्तिकके महीनेमे स्नान करे ॥ ७ ॥ और अपनी शक्तिके अनुसार भूमिदान करे, फिर सम्पूर्ण आभरणोसे भूषित करके गौ और बैलके जोडे दान करें ॥ ८ ॥ पंचरत्न और तुलसीदलके साथ कुम्हडे और नारियलको गंगाजीके बीचमें खडे होकर दान करै ॥ ९ ॥ हे देवि ! फिर चालीस तोले सुवर्णमाला बनवाकर उसको अनेक प्रकार गंध आदिकोंसे चर्चित कर ॥१०॥ संपूर्ण पापोकी शुद्धिके निमित्त अपने आचार्यको देवे तो पुत्र उत्पन्न होता है और कन्या उत्पन्न नहीं होती है ॥ ११ ॥ और समस्त रोग नष्ट होजाते हैं, स्त्रीका वंध्यात्व दोष छूट जाता है, काकवन्ध्या एवं मृतवत्सा भी पुत्रको प्राप्त करती है, निर्धनीको धन मिलता है इसमें कुछ विचार नहीं करना चाहिये ॥ १२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां हस्तनक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

## अथ पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

श्रीशिव उवाच ॥ हस्तिनानगरे देवि कायस्थो वसति प्रिये । केवलेति समाख्यातस्तस्य स्त्री कमला शुभे ॥ १ ॥ महाधनसमायुक्तो मद्यपानरतः सदा । वेश्यासुरतसंतृप्तो ब्राह्मणस्य विदूषकः ॥ २ ॥ एकस्मिन्समये देवि कश्चिद्विप्रः समागतः । गङ्गाजलसमायुक्तो याचितं तेन भोजनम् ॥ ३ ॥ तच्छ्रुत्वा देहजक्रोधाद्ब्राह्मणं दुर्वचोऽवदत् । संध्यासमयमासाद्य विषं पीत्वा द्विजो मृतः ॥ ४ ॥ ततो बहुगते काले मरणं तस्य चाभवत् । तस्य पत्नी सती जाता तद्दिने च वरानने ॥ ५ ॥ बहून्यब्दसहस्राणि सत्यलोकेऽवसत्तदा । सौख्यानि विविधान्यत्र प्रभुक्तानि वरानने ॥ ६ ॥ ततः पुण्यक्षये जाते मानुषत्वं पुनर्भवेत् । धनधान्यसमायुक्तो विप्रवंशे प्रजायते ॥ ७ ॥

---

शिवजी बोले—हे देवि ! हे प्रिये ! हे शुभे ! हास्तिनापुरमें केवलनामक एक कायस्थ रहता था और कमला उसकी स्त्री थी ॥ १ ॥ यह कायस्थ महाधनी, सदा मद्यपानमें लीन रहता वेश्यागामी और ब्राह्मणोंकी निन्दा किया करता था ॥ २ ॥ हे देवि ! एक दिन कोई ब्राह्मण गंगाजल लिये हुए इसके घर आया और भोजन मांगा ॥ ३ ॥ इस वचनको सुनकर कायस्थने ब्राह्मणसे दुर्वचन कहे तब ब्राह्मणने महादुःख माना और सायंकालको विष खाकर मरगया ॥ ४ ॥ हे वरानने ! फिर कुछ कालके उपरान्त उस कायस्थकी मृत्यु हुई तब उसी समय उसकी स्त्री सती होगई ॥ ५ ॥ हे वरानने ! हजारो वर्षतक सतीके प्रभावसे सत्यलोकमें वास कर नाना भांतिके सुखोको भोगा ॥ ६ ॥ फिर पुण्य क्षीण होनेपर मनुप्य हुआ और धनधान्यसे युक्त होकर ब्राह्मणके वंशमें जन्म

जाताश्च बहवः पुत्रा गौराङ्गाः प्रियदर्शनाः। गुणज्ञा रूपसम्पन्ना ज्ञानिनः प्रीतिवर्द्धनाः ॥ ८ ॥ द्वौ पुत्रौ शीलसम्पन्नौ चोद्वाहेन समायुतौ। पितुः कर्मवशाद्देवि ब्रह्महत्या पुरा यतः ॥ ९ ॥ राजरोगसमायुक्तौ जायागर्भो विनश्यति। अस्य शांतिं प्रवक्ष्यामि शृणु देवि पतिव्रते ॥ १० ॥ विष्णोरराटमंत्रेण लक्षजाप्यं च कारयेत्। दशांशं हवनं कुर्यात् तर्पणं मार्जनं तथा ॥ ११ ॥ वित्तस्य च षडंशं च ब्राह्मणे दानमाचरेत्। वापीकूपतडागानि पथि मध्ये च कारयेत् ॥ १२ ॥ गामेकां कपिलां दद्यात्सवत्सां वस्त्रभूषिताम् ॥ १३ ॥ सुवर्णस्य कृतं विप्रं पलपञ्चदशस्य तु। दद्याद्विप्राय विदुषे सर्वप्राणिरताय वै। श्रवणं हरिवंशस्य विधिपूर्वं च कारयेत् ॥ १४ ॥ पुत्रश्च जायते देवि गर्भपातश्च शाम्यति। काकवन्ध्या लभेत्पुत्रं निश्चयं नात्र संशयः ॥ १५ ॥

---

लिया ॥ ७ ॥ वहां इसके गोरे अंगवाले, देखनेमे प्रिय, गुणवान्, रूपवान्, ज्ञानी और प्रीति बढानेवाले बहुतसे पुत्र हुए ॥ ८ ॥ उनमेंसे दो पुत्र जो शीलवान् और विवाहे जा चुके थे वह पिताके कर्मोंसे ब्रह्महत्याके वश ॥९॥ राजरोगसे युक्त होगये और उनकी स्त्रीका गर्भ नष्ट हो गया. हे देवि! हे पतिव्रते! अब उनके पापोंकी शांतिको कहताहूँ तुम सुनो ॥१०॥ "विष्णोरराट" इस मंत्रका एक लाख जप करावे फिर विधिपूर्वक दशांश हवन, मार्जन, तर्पण करावै ॥ ११ ॥ अपने धनका छठा भाग ब्राह्मणको दान करके दे और मार्गमे बावडी, कुआ, तालाव वनवावे ॥ १२ ॥ और बछडेवाली एक कपिला गौको वस्त्र उढाय दान करे ॥ १३ ॥ साठ तोले सोनेकी ब्राह्मणकी मूर्ति बनवाकर संपूर्ण प्राणियोंके हितैषी विद्वान् ब्राह्मणका देवै फिर विधिपूर्वक हरिवंशपुराणकी कथा सुने ॥ १४ ॥ हे देवि! ऐसा करनेसे पुत्र होता है और स्त्रीके गर्भ नष्ट नही होते काकवंध्याभी निश्चय पुत्रको प्राप्त करती है

पुत्राणां मरणं देवि पूर्वपापप्रसङ्गतः ।
प्रायश्चित्तं विना देवि कुतः शान्तिमवाप्नुयात् ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां हस्तनक्षत्रचतुर्थचरणप्रायश्चित्त-
कथनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

## अथ षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

चित्रानक्षत्रफलम् ।

श्रीशिव उवाच ॥ गयापुर्यां महादेवि क्षत्री ह्येकोऽवसत् पुरा । कुकर्मणि रतो नित्यं धनाढ्यः कृपणः शठः ॥ १ ॥ स्त्र्यभवच्चञ्चला तस्य द्वौ पुत्रौ च वरानने । कन्या चैका विशालाक्षि जाता तस्यां वरानने ॥ उद्वाहिता तदा देवि कन्यका व्यभिचारिणी ॥ २ ॥ महिषीपुत्रघातं च प्रत्यब्दं चैव कारयेत् । अनेनैव प्रकारेण वयः सर्वं क्षयं गतम् ॥ ३ ॥ ततः सर्पेण वै दष्टस्तस्य मृत्युरभूत्तदा । यमदूतैर्महाघोरे निक्षिप्तो नरकार्णवे ॥ ४ ॥

---

इसमें कुछ संशय नहीं ॥ १५ ॥ हे देवि ! पूर्व पापोंके दोषसे पुत्रोंकी मृत्यु होती है सो हे देवि ! विना प्रायश्चित्तके किये कैसे शांति होसकती है ? ॥१६॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां हस्तनक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥

---

शिवजी बोले-हे महादेवि ! पूर्वसमय गयाजीमे एक क्षत्रिय वसता था वह सदा कुकर्म करता, धनी, कृपण और शठ था ॥ १ ॥ हे वरानने ! उसकी स्त्री बडी चंचला थी और उसके दो पुत्र थे हे विशालाक्षि ! हे वरानने ! उसके दोनों पुत्रोंके सिवाय एक कन्याभी उत्पन्न हुई और जब इस कन्याका विवाह हुआ तबसे यह व्यभिचारिणी होगई ॥ २ ॥ यह क्षत्रिय प्रतिवर्ष एक भैंसके कटरेको मरवादेता था इसी प्रकार इसकी सब आयु बीत गई ॥ ३ ॥ एक दिन कालरूपी सर्पके डसनेसे इसकी मृत्यु होगई तब यमदूतोंने महाघोर

त्रिसप्ततिसहस्राणि वर्षाणि च वरानने । भुक्त्वा कष्टं विशालाक्षि गर्भत्वं च ततो गतः ॥ ५ ॥ मध्यदेशे विशालाक्षि नरजन्मा च क्षत्रियः । पुत्रो न जायते देवि पूर्वजन्मविदोषतः ॥ ६ ॥ कन्यका रजसा युक्ता विधवा जायते प्रिये । महिषीपुत्रघाती च रोगोत्पत्तिश्च जायते ॥ ७॥ अस्य पापस्य शांत्यर्थं पुण्यं शृणु वरानने । स्ववित्तस्याष्टमं भागं ब्राह्मणाय ददेत्ततः ॥ ८ ॥ एकां कृष्णां च गां देवि स्वर्णशृङ्गीं सवत्सकाम् । सर्वलक्षणसम्पन्नां वस्त्रमुक्तादिभूषिताम् ॥ ९ ॥ ब्राह्मणाय तदा दद्याच्छय्यादानं विशेषतः ॥ १० ॥ गायत्रीजातवेदोभ्यामयुतं जपमाचरेत् । हवनं तद्दशांशेन तर्पणं मार्जनं ततः ॥ ११ ॥ पथिमध्ये वरारोहे पंचवृक्षस्य वाटिकाम् । कारयेद्वैभवेनैव विष्णुवृक्षादिभिर्वृताम् ॥ १२ ॥ भोजयेद्देवि षट्षष्टिं ब्राह्मणान् वेदपारगान् । निष्कत्रयसुवर्णस्य प्रतिमां वस्त्रभूषिताम् ॥ १३॥

---

नरकरूपी समुद्रमें डालदिया ॥ ४ ॥ हे वरानने ! हे विशालाक्षि ! वहां तिहत्तर हजार वर्षतक नरकके कष्ट भोगकर गर्भको प्राप्त हुआ ॥ ५ ॥ हे विशालाक्षि ! हे देवि ! अब मध्यदेशमें क्षत्रियके कुलमें जन्म लिया है पूर्वजन्मोंके पापसे इसको पुत्र नहीं होता है ॥ ६ ॥ हे प्रिये ! कन्या उत्पन्न होकर रजोधर्मके समय विधवा हो जाती हैं, पूर्व जन्ममें भैसके कटरेको मारनेसे इसको अनेक रोग होते है ॥ ७ ॥ हे वरानने ! अब इसकी पापशान्तिके अर्थ पुण्यको सुनो प्रथम तो यह अपने घरका आठवां भाग ब्राह्मणको देदे॥८॥ हे देवि ! फिर एक बछडासहित काली गौके सोनेसे सीग मढाय, सम्पूर्ण लक्षणोंसे युक्त करके वस्त्र और मोतियोंसे भूषित कर ब्राह्मणको दान करै और विशेषकर शय्यादान करै ॥ ९ ॥ १० ॥ गायत्री और जातवेदसे इन मंत्रोंका दश हजार जप करावे फिर दशांश हवन, मार्जन, तर्पण विधिपूर्वक करावे ॥ ११ ॥ हे वरारोहे ! मार्गमें पाँच वृक्षोकी वाटिका बनावे और उस बगीचेको पीपल आदि विष्णुवृक्षोसे युक्त करे ॥ १२ ॥ हे देवि ! छयासठ वेद-

ब्राह्मणाय ततो दद्याद्विष्णुपादेन संयुताम् । एवं कृते विशा-
लाक्षि पूर्वजन्मकृतं च यत् ॥ १४ ॥ पापं प्रणाशयेद्देवि नात्र
कार्या विचारणा । काकवन्ध्या च या नारी लभते पुत्रमुत्तमम्
॥ १५ ॥ पुत्रश्च जायते देवि सुरूपेण समन्वितः । रोगाः
सर्वे क्षयं यान्ति नात्र कार्या विचारणा । मृतवत्सा लभेत्पुत्रं
चिरंजीविनमुत्तमम् ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां चित्रानक्षत्रप्रथमचरणप्रायश्चित्त-कथनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## अथ सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

शिव उवाच ॥ पुण्येन लभते पुत्रं पुण्येन लभते श्रियम् ।
पुण्येन रोगनाशः स्यात्सर्वशास्त्रेषु संमतम् ॥ १ ॥
मध्यदेशे वरारोहे ब्राह्मणो न्यवसत्प्रिये ।
सरय्वा दक्षिणे कूले शोभने कालिकापुरे ॥ २ ॥

---

पाठी ब्राह्मणोंको भोजन करावै, फिर तीन तोले सुवर्णकी ब्राह्मणकी मूर्त्ति बनवाकर वस्त्रोंसे भूषित करे ॥ १३ ॥ और विष्णुपादसे युक्त कर ब्राह्मणको दान करे ऐसा करनेसे हे विशालाक्षि ! पूर्वजन्ममें किये जो ॥ १४ ॥ पाप हैं वे नष्ट होजाते हैं, हे देवि ! इसमें कुछ विचार नहीं करै और काकवंध्या नारी भी उत्तम पुत्रको प्राप्त करती है ॥ १५ ॥ हे देवि ! फिर सुन्दर रूपवान् पुत्र होता है और सम्पूर्ण रोग नष्ट होजाते हैं इसमें कुछ विचार न करै, मृतवत्सा नारीभी उत्तम और चिरंजीवी पुत्रको प्राप्त करती है ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां चित्रानक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

शिवजी बोले—हे देवि ! पुण्य करनेसे पुत्र होता है, पुण्य करनेसे लक्ष्मी प्राप्त होती है और पुण्य करनेसे रोग नष्ट होते हैं यही सब शास्त्रोंका मत है ॥ १ ॥ हे वरारोहे ! हे प्रिये ! मध्यदेशमें सरयू नदीके दक्षिण तटपर सुन्दर कालिका-

शुभे कालीपुरे तत्र द्विजस्तिष्ठति वै शठः। स्नेही वेश्यापरस्त्रीणां रतिसंसर्गतत्परः ॥ ३ ॥ मद्यपानं विना देवि निद्रा तस्य न जायते। तस्य स्त्री सुमनानाम्नी पतिसेवापरायणा ॥ ४ ॥ प्रत्यहं पूजयेद्देवि स्वपतिं पापकारिणम्। ततो बहुगते काले मरणं व्याघ्रतोऽभवत् ॥ ५ ॥ तस्य पत्नी सती जाता सुप्त्वाऽग्नौ च तदाहिता। सत्यलोके ततो देवि कल्पमेकं प्रभुज्यते। पत्या सह वरारोहे ततः पुण्यक्षये सति ॥ ६ ॥ मृत्युलोकेऽभवज्जन्म कुले महति पूजिते। धनधान्यसमायुक्तो बाल्यतो रोगवानपि ॥ ७ ॥ पुण्यसम्बन्धयोगेन पूर्वस्त्री या च संस्थिता। पुनर्विवाहिता देवि पुत्रकन्याविवर्जिता ॥ ८ ॥ अस्य पापस्य शान्त्यर्थं पुण्यं शृणु वरानने। गृहवित्तषडंशस्य पुण्यकार्यं च कारयेत् ॥ ९ ॥

---

नामक पुरमें एक ब्राह्मण रहता था ॥ २ ॥ वहां कालीपुरमें यह शठ ब्राह्मण वेश्याओंसे स्नेह और पराई स्त्रियोंसे प्रीति रखता था ॥ ३ ॥ हे देवि! विना मद्यपान किये इसको रात्रिमें नींद नहीं आती थी, और पतिकी सेवा करनेवाली सुमनानामवाली उसकी स्त्री थी ॥ ४ ॥ हे देवि! प्रतिदिन यह स्त्री पाप करनेवाले अपने पतिकी पूजा करती थी, इस भांति बहुत समय बीतनेपर इस ब्राह्मणकी व्याघ्रसे मृत्यु होगई ॥ ५ ॥ हे देवि! हे वरारोहे! तब उसकी स्त्री पतिकी चितामें चढकर अग्निमें जलकर सती होगई फिर सत्यलोकमें जाकर एक कल्पतक अपने पतिके साथ वहाँ वास किया, जब पुण्य क्षय हुआ तब ॥ ६ ॥ मृत्युलोकमें बडे पूजनीय कुलके बीच धनधान्यसे युक्त होकर मनुष्ययोनिमें जन्म लिया और पापकर्मसे बालकपनसे महा रोगी हुआ ॥ ७ ॥ पुण्यके संबंधसे पूर्वजन्मकी स्त्रीही अब इसको विवाही गई हे देवि! वह पुत्रकन्याओंसे रहित है ॥ ८ ॥ हे वरानने! अब इसके पापकी शान्तिके अर्थ पुण्यको सुनो-प्रथम तो यह अपने घरका छठा भाग पुण्य-

गायत्रीमूलमंत्रेण त्रिलक्षं जपमाचरेत्। हवनं तद्दशांशेन तर्पणं मार्जनं तथा ॥ १० ॥ दानं तु दशवर्णाया भूमिदानं विशेषतः गोविन्देति ततो नाम जपेन्नित्यं वरानने ॥ ११ ॥ प्रातःस्नानं सदा कुर्यान्माघवैशाखकार्त्तिके। कृष्णस्य शतकं देवि भूर्जपत्रेण पुस्तकम् ॥१२॥ समन्ताद्व्याप्य तस्याग्रे स्थापयेत्स्वगृहं प्रति। हरिवंशश्रवणं देवि एकादश्यां व्रतं चरेत् ॥ १३ ॥ एवं कृते वरारोहे सर्वरोगक्षयो भवेत्। पुत्रश्च जायते देवि नात्र कार्या विचारणा ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायां चित्रानक्षत्रद्वितीयचरणप्रायश्चित्त-कथनं नाम सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अथाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

श्रीशिव उवाच ॥ अयोध्यापुरतो देवि योजनत्रयदक्षिणे।
सुधर्मपुरमाख्यातं वसन्ति बहवो जनाः ॥ १ ॥

---

काममें लगावै ॥९॥ फिर गायत्रीमूलमन्त्रका एक लाख जप करावै और दशांश हवन मार्जन एवं तर्पण करावै ॥ १० ॥ और दशवर्णवाली गौका दान करै विशेषकर भूमिदान करै हे वरानने! गोविन्दके नामका नित्य जप करे ॥११॥ माघ, वैशाख और कार्तिकके महीनेमें सदा प्रातःकाल स्नान करै और कृष्ण-शतककी पुस्तकको हे देवि! भोजपत्रपर लिखाकर ॥ १२ ॥ अपने घरमें स्थापित करै उसके आगे हे देवि! हरिवंशपुराणकी कथा सुनै और एकाद-शीका व्रत रहे ॥ १३ ॥ हे वरारोहे! हे देवि! ऐसा करनेसे सम्पूर्ण रोग नष्ट होजाते है, पुत्र उत्पन्न होता है इसमें कुछ विचारकी बात नही है ॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां चित्रानक्षत्रद्वितीयचरण-प्रायश्चित्तकथनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

शिवजी बोले-हे देवि! अयोध्यापुरीसे दक्षिणमें तीन योजनपर सुधर्मपुरके

तत्र वैश्यो वसत्येकः स्वकर्मनिरतः सदा । धनाढ्यो रूपसम्पन्नो द्विजसेवासु तत्परः । रतिदासेति विख्यातो विक्रयं कुरुते सदा ॥ २ ॥ दलाक्षीति समाख्याता तस्य पत्नी च स्वैरिणी । पतिं न पूजयेद्देवि रूपगर्ववशात्तथा ॥ ३ ॥ गावो महिष्यो बह्वयश्च सन्ति विक्रयकारणात् ॥ ४ ॥ महिषीपुत्रघातश्च प्रत्यहं खलु जायते । छागस्य विक्रयो नित्यं छागानां वध एव च ॥ ५ ॥ गोप एको महाप्राज्ञो धनार्थी स्वर्णसंयुतः । तत्र यातो महादेवि वैश्यमित्रं हि बाल्यतः ॥ ६ ॥ तस्य गेहे स्थितो गोपो धनधान्यसमन्वितः । वैश्यपत्नी तदा देवि गोपं प्रति सदाऽभजत् ॥ ७ ॥ एवं बहुगते काले तस्य गोपस्य वै मृतिः । वैश्यगेहे महादेवि धनं गोपस्य यत्खलु ॥ ८ ॥ वैश्येनैव तु तत्सर्वं धनं तस्य व्ययं गतम् । ततः सर्वं वयो यातं वैश्यमृत्युरभूत्तदा ॥ ९ ॥

---

बीच बहुतसे मनुष्य बसते थे ॥ १॥ वहींपर अपने कर्ममें लीन, धनी, रूपवान्, ब्राह्मणोंका सेवक, क्रयविक्रयको करनेवाला रतिदासनामक एक वैश्य बसता था ॥ २ ॥ हे देवि ! दलाक्षीनामसे प्रसिद्ध उसकी व्यभिचारिणी स्त्री थी और वह अपने रूपके गर्वसे पतिका पूजन नहीं करती थी ॥ ३ ॥ इसके गौ बिकनेके कारण बहुतसी गौ और भैंसें थीं ॥ ४ ॥ भैंसोंके कटरे और बकरे प्रतिदिन मारकर बिकते थे ॥ ५ ॥ हे महादेवि ! एक दिन इस वैश्यको बालपनका मित्र कोई बुद्धिमान् गोप धनके ( गौ भैंसोंके ) अर्थ बहुतसा सुवर्ण लेकर आया ॥ ६ ॥ हे देवि ! इस वैश्यके घर धनधान्यसे युक्त वह गोप ठहरा, तब वैश्यकी स्त्री इस गोपके साथ रमण करने लगी ॥ ७॥ हे महादेवि ! ऐसे बहुत समय बीतजानेपर वह गोप मर गया और वैश्यके घर जो उस गोपका धन रहा ॥ ८ ॥ उस धनको वैश्यने भोगा। जब सम्पूर्ण धन चुक गया

गङ्गायां च विशालाक्षि पत्नी तस्य तथा मृता । वैश्यस्याभूत्तथा स्वर्गो वर्षषष्टिसहस्रकम् ॥ १० ॥ वैश्यपत्नी ततो देवि कर्दमे नरके गता । षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ ११ ॥ नरकान्निःसृता सा तु सर्पयोनिं तथा गता । सर्पयोनिं ततो भुक्त्वा गङ्गायां मरणं खलु ॥ १२ ॥ शूद्रं प्रति सदा स्नेहस्ततः शूद्रा तदाऽभवत् । वैश्यः स्वर्गफलं भुक्त्वा मानुषत्वं ततोऽगमत् ॥ १३ ॥ धनधान्यसमायुक्तो रूपवानतिथिप्रियः । गुणी ज्ञानी बहुधनी पुत्रकन्याविवर्जितः ॥ १४ ॥ वैश्यस्य शूद्रजातित्वं पूर्वस्नेहफलं यतः । पत्नी सा च समायाता पूर्वसम्बन्धकारणात् ॥ १५ ॥ यतो द्रव्यं समाभुक्तं सर्वं शूद्रस्य वै शिवे । ततश्चैव समुत्पन्नाः कन्या बह्व्यः सुरेश्वरि ॥ १६ ॥ महिषीपुत्रघाताच्च वायुरोगादयस्तथा ॥ १७ ॥

---

तब वैश्यकी मृत्यु होगई ॥ ९ ॥ हे विशालाक्षि ! तिस पीछे गंगाजीमें उसकी स्त्रीकी मृत्यु हुई, वैश्यने जाकर स्वर्गमें साठ हजार वर्षतक वास किया॥१० ॥ हे देवि ! इधर वैश्यकी स्त्री कर्दम नरकमें गई और साठ हजार वर्षतक उस नरककी पीडाको भोगा ॥ ११ ॥ जब नरकसे निकली तब सर्पिणी हुई सर्पकी योनिको भोगकर गंगाजीमें मरगई ॥ १२ ॥ ( गंगाजीमे मरनेसे मनुष्ययोनि मिली ) शूद्रसे पूर्वजन्ममें स्नेह होनेके कारण शूद्रा हुई, इधर वैश्य भी स्वर्गके फलको भोगकर मनुष्य हुआ ॥ १३ ॥ और यह धनधान्यसे युक्त, स्वरूपवान्, अतिथिप्रिय, गुणी, ज्ञानी, महाधनी और पुत्रकन्याओंसे रहित है ॥ १४ ॥ पूर्वजन्ममें गोपके साथ स्नेह करनेसे इसका जन्म शूद्रकुलमें हुआ और पूर्वजन्मके संबंधसे वही शूद्रा इसकी स्त्री हुई ॥ १५ ॥ हे शिवे ! हे सुरेश्वरि ! पूर्वजन्ममें इसने शूद्रका सम्पूर्ण धन भोगा इस कारण इसके अनेक कन्या उत्पन्न हुईं ॥ १६ ॥ भैंसके कटरोंके मारनेके कारण इसको

स्वपतेर्वञ्चनं कृत्वा परपुंसि रता यतः। तस्मात् पुत्रस्य मरणं गर्भपातः पुनः पुनः॥ १८॥ अस्य शान्तिमहं वक्ष्ये शृणु देवि वरेऽनघे। गृहवित्तषडंशेन पुण्यं कार्यं च यत्नतः॥ १९॥ वापीकूपतडागादि पथिमध्ये च कारयेत्। शिवस्य पूजनं चैव शिवभक्तिमहर्निशम्॥२०॥ नमः शिवाय मन्त्रं च पंचलक्षं च जापयेत्। जपं करोति वै प्राज्ञो ह्यथवा कारयेत्ततः॥२१॥ पार्थिवं लक्षसंख्याकं पूजयेच्च यथाविधि। नमः शिवाय मन्त्रस्तु सर्वपापप्रणाशनः। देहान्ते मुक्तिदश्चैव मर्त्यलोके च कामदः॥ २२॥ हवनं कारयेद्देवि कुण्डे चैव प्रपूजयेत्। चतुरस्रे विशालाक्षि तिलधान्यादितण्डुलैः॥ २३॥ ताम्रवर्णां ततो देवि गां दद्याद्विदुषे प्रिये। निष्कमात्रं ततः स्वर्णं ब्राह्मणाय प्रदापयेत्॥ २४॥ एवं कृते न संदेहो व्याधिनाशो भवेद् ध्रुवम्। पुत्रश्च जायते देवि पुनर्गर्भो न नश्यति॥ २५॥

---

वातका रोग हुआ है॥ १७॥ और अपने पतिको छोड अन्यपुरुषसे जो पूर्वजन्ममें रमण किया था तिस कारण इसकी स्त्रीके पुत्र मर जाते हैं और वारंवार गर्भ गिरजाते हैं॥ १८॥ हे वरारोहे! हे अनघे! अब इसकी शान्तिको कहताहूं सो सुनो-प्रथम तो यह अपने घरका छठा भाग पुण्यकार्यमें यत्नसे लगावे॥ १९॥ फिर मार्गमें बावडी कुआ और तालाव बनवावै, शिवजीकी भक्तिके साथ रातदिन पूजा करै॥ २०॥ 'ॐ नमः शिवाय' इस मंत्रका पांच लाख जप बुद्धिमान् मनुष्य स्वयं करै या किसी विद्वान्से करावै॥ २१॥ एक लाख पार्थिवका विधानके साथ पूजन करै 'ॐ नमः शिवाय' यह मंत्र सम्पूर्ण पापनाशक मृत्युलोकवासी मनुष्योंकी कामनाओंको पूर्ण करनेवाला और अंतसमय मुक्तिको देनेवाला है॥ २२॥ हे देवि! हे विशालाक्षि! फिर चौकोर कुंडमे तिल, धान और चावलोद्वारा हवन करै॥ २३॥ हे देवि! हे प्रिये! लालवर्णवाली गौको दान करके विद्वान् ब्राह्मणको दे फिर एक तोला सुवर्ण दान करके विद्वान् ब्राह्मणको दे॥ २४॥ ऐसा करनेसे निःसन्देह सम्पूर्ण व्याधि नष्ट होजाती हैं और

काकवन्ध्या पुनः पुत्रं प्रसूयेत न संशयः ॥ २६ ॥

इति श्रीकर्मविपाकसंहितायां चित्रानक्षत्रतृतीयचरणप्रायश्चित्त-
कथनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

## अथैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

शिव उवाच ॥ देशे पुण्यतमे देवि प्रतिष्ठानपुरे तथा । ब्राह्मणो वेदविभ्रष्टस्तत्र वासमकारयत् ॥ १ ॥ सुरामांसस्य वै भोक्ता नित्यं मत्स्यं भुनक्ति सः । द्यूतेनैव विशालाक्षि व्ययं कुर्याद्दिनेदिने ॥ २ ॥ तस्य स्त्री परमानाम्नी भ्रष्टा चातीव सुन्दरी । परपुंसि रता नित्यं निर्भया पतिवंचका ॥ ३ ॥ एवं सर्वं वयो यातं तयोर्मृत्युरभूत्किल । पुण्यक्षेत्रे च गङ्गायां देव-गन्धर्वपूजिते ॥ ४ ॥ तस्य विप्रस्य वै स्वर्गः कल्पमेकं वरानने । भुक्त्वा च विविधं सौख्यं दिव्यकन्याभिरावृतः ॥ ५ ॥

---

हे देवि ! फिर पुत्र उत्पन्न होता है स्त्रीके गर्भ नष्ट नही होते ॥ २५ ॥ काक-वंध्या स्त्री फिर निःसन्देह पुत्रको उत्पन्न करती है ॥ २६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां चित्रानक्षत्रतृतीयचरण-
प्रायश्चित्तकथनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

शिवजी बोले—हे देवि ! पुण्यदेशमें प्रतिष्ठाननगरके बीच एक वेदभ्रष्ट ब्राह्मण रहता था ॥ १ ॥ हे विशालाक्षि ! यह प्रतिदिन सुरा, मांस और मछलियोको खाता था, जुआ खेलकर धन खर्च करता था ॥ २ ॥ और परमा इसकी स्त्री थी सो वह बडी सुन्दर निर्भय पतिवंचक और परपुरुष-गामिनी थी ॥ ३ ॥ इस भांतिसे रहते हुए इन दोनो स्त्री पुरुषोंकी देव-गंधर्वोंसे पूजित पवित्रक्षेत्र श्रीगंगाजीमें मृत्यु होगई ॥ ४ ॥ हे वरानने ! फिर इस ब्राह्मणने एक कल्पतक देवकन्याओंके साथ मिलकर स्वर्गमें अनेक प्रकारके

ततः पुण्यक्षये जाते मृत्युलोके सुरेश्वरि। महाढ्यकुलसम्पन्ने तस्य जन्माभवत्तदा॥ ६॥ पुनः कर्मवशात्तस्य भार्या सा व्यभिचारिणी। पुनर्विवाहिता देवि पुत्रोऽप्यस्यां न जायते॥ ७॥ मद्यपानादिकं पापं पूर्वजन्मनि यत्कृतम्। तत्फलेन महादेवि व्याधिग्रस्तस्ततोऽभवत्॥ ८॥ अथ शान्तिं प्रवक्ष्यामि यतः पापक्षयो भवेत्। गायत्रीमूलमन्त्रेण लक्षजाप्यं वरानने॥ ९॥ हवनं तद्दशांशेन तर्पणं मार्जनं तथा। देवस्याराधनं नित्यं सूर्यस्य व्रतमाचरेत्॥ १०॥ प्रयागे नियतः स्नानं माघे मासि यथाविधि। पत्न्या सह विशालाक्षि ततः पापं प्रणश्यति॥ ११॥ षडंशं च ततो देवि विप्रेभ्यो दानमाचरेत्। ततो वर्षेण महतीं गां च दद्यात् पयस्विनीम्॥ १२॥

---

सुखोंको भोगा॥ ५॥ हे सुरेश्वरि! जब पुण्यक्षय हुआ तब मृत्युलोकमें आकर मनुष्य होकर उत्तम धनिक कुलमें जन्म लिया॥ ६॥ हे देवि! और कर्मवशसे वही पूर्वजन्मवाली व्यभिचारिणी स्त्रीके साथ विवाह हुआ परन्तु पुत्र नही होता है॥ ७॥ हे महादेवि! पूर्वजन्ममें जो इसने मद्यपानादि पापकर्म किये हैं तिसके फलसे इसका शरीर रोगोंसे ग्रस्त रहता है॥ ८॥ हे वरानने! अब इसके पाप दूर होनेके लिये शान्तिको कहता हूँ-प्रथम तो यह गायत्रीमंत्रका एक लाख जप करावै॥ ९॥ फिर जपका दशांश हवन, हवनका दशांश तर्पण, तर्पणका दशांश मार्जन करावै और प्रतिदिन सूर्यनारायणकी आराधना कर रविवारको व्रत रहे॥ १०॥ हे विशालाक्षि! स्त्रीसहित फिर यह माघमहीनेमें विधिपूर्वक प्रयागराजमें स्नान करे तो पाप नष्ट होजाते हैं११॥ हे देवि! और अपने धनमेंसे छठा भाग ब्राह्मणको दान करै, प्रतिवर्षके अन्तमें

भूमिं वृत्तिकरीं दद्यात्पुत्रपौत्रानुजीविनीम् । एवं कृते न सन्देहो वंशो भवति नान्यथा ॥ १३ ॥ रोगार्त्तो मुच्यते रोगात्काकवन्ध्या सुतं लभेत् । नष्टगर्भा लभेत्पुत्रं चिरंजीविनमुत्तमम् ॥ १४

इति श्रीकर्मविपाकसंहितायां चित्रानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## अथ षष्टितमोऽध्यायः ॥ ६० ॥

### स्वातीनक्षत्रफलम् ।

शिव उवाच ॥ कान्यकुब्जे महादेवि राजाप्येकोऽवसत्पुरा । राजधर्मरतः शान्तः प्रजापालनतत्परः ॥ १ ॥ रुद्रधर्मेति विख्यातो भार्या तस्य प्रभावती । एकस्मिन्दिवसे देवि ब्राह्मणो भयपीडितः ॥ २ ॥ शरणं श्रावयामास शरणार्थी द्विजोत्तमः । तस्य भार्या महादेवि सुरूपा स्वतिसुन्दरी ॥ ३ ॥

---

बहुत दूध देनेवाली गौका दान करै ॥ १२ ॥ पुत्र पौत्रोंकी आजीविका करनेवाली पृथ्वीका दान करै, ऐसा करनेसे वंश चलता है अन्य प्रकारसे नहीं चलता है ॥ १३ ॥ और रोगी रोगसे छूट जाता है, काकवंध्या स्त्री पुत्रको प्राप्त करती है नष्टगर्भा स्त्री उत्तम चिरंजीवी पुत्रको प्राप्त करती है ॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां चित्रानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

शिवजी बोले–हे महादेवि ! पहले कान्यकुब्जदेशमें राजधर्ममे लीन, शांतस्वभाव और प्रजाको पालनेवाला एक राजा रहता था ॥ १ ॥ रुद्रधर्म इस राजाका नाम था और प्रभावती इसकी रानी थी हे देवि ! एक दिन एक ब्राह्मण भयसे भीत होकर ॥ २ ॥ राजाके यहां शरण लेनेके अर्थ आया, साथमें इस ब्राह्मणके हे महादेवि ! इसकी परम सुन्दरी स्त्री थी ॥३॥

राजपुत्रेण तस्यां तु गमनं मुग्धतः कृतम् । शरणं दत्तवान् राजा पुत्रस्नेहेन यन्त्रितः ॥ ४ ॥ एवं बहुगते काले नृपस्य मरणं यदा । तदा यमाज्ञया दूतैः क्षिप्तो नरककर्दमे ॥ ५ ॥ षष्टिवर्ष-सहस्राणि नरके परिपच्यते । नरकाद्वै विनिष्क्रान्तः सूकरत्वं ततोऽलभत् ॥ ६ ॥ पुनः शृगालयोनिं च मानुषत्वं ततोऽगमत् धनधान्यसमायुक्तो बहुज्ञो गुणवानपि ॥ ७ ॥ पुनर्विवाहिता जाता पत्नी तस्य प्रभावती । पूर्वकर्मफलाद्देवि तस्य पुत्रो न जायते ॥ ८ ॥ शरीरं सततं देवि ज्वरेणैव प्रपीडितम् । वातपित्त-कफानां च सम्भवः स्याद्वयोधिके ॥ ९ ॥ अस्य दानं शृणु त्वं हि यथा पापक्षयस्तथा । गृहवित्ताष्टमं भागं पुण्यकार्ये च कारयेत् ॥ १० ॥ वापीकूपतडागानां जीर्णोद्धारो यदा भवेत् । तदा पापं क्षयं याति पूर्वजन्मसमुद्भवम् ॥ ११ ॥

---

राजपुत्रने इस ब्राह्मणीके साथ मुग्ध होकर रमण किया और पुत्र-स्नेहके वश राजाने पुत्रको दंड नही दिया॥ ४॥ ऐसे बहुतकाल पीछे राजाकी मृत्यु होगई, तब यमराजकी आज्ञासे यमदूतोंने कर्दमनरकमें डाल दिया ॥५॥ वहां साठ हजारवर्षतक इसने नरकको भोगा, फिर नरकसे निकलकर सूकरकी योनिको प्राप्त हुआ ॥ ६ ॥ सूकरकी योनि भोगकर शृगाल हुआ, शृगाल-योनिको भोग, धनधान्यसे युक्त बहुत जाननेवाला और गुणवान् होकर मनुष्य हुआ ॥ ७ ॥ हे देवि ! फिर वही पूर्वजन्मवाली प्रभावती स्त्रीके साथ उसका विवाह हुआ, अब पूर्व कर्मके फलसे पुत्र नहीं होताहै ॥ ८ ॥ हे देवि इसका शरीर निरन्तर ज्वरसे पीडित रहता है और अधिक आयु होजानेसे वात, पित्त, कफके विकार रहते हैं ॥ ९ ॥ अब इसके उस दानको सुनो जिसके करनेसे पाप नष्ट होजाते हैं—प्रथम तो यह अपने घरका आठवां भाग पुण्य कार्यमें लगावै ॥ १० ॥ फिर पुराने बावडी कुएँ और तालाबोंका जीर्णोद्धार

विष्णोररराटमन्त्रेण जपं कुर्याद्विचक्षणः । दद्याद्गां वेदविदुषे सवत्सां चैव शोभने । वस्त्ररत्नसमायुक्तां घण्टाचामरभूषिताम् ॥ १२ ॥ चन्द्रसूर्यग्रहे काश्यां स्नानं दानं समाचरेत् ॥ १३ ॥ निष्कत्रय-सुवर्णस्य कमलं कारयेत्ततः । ब्राह्मणाय वरारोहे प्रदद्यात् कमलं शुभम् ॥ १४ ॥ एवं कृते वरारोहे सर्वपापक्षयो भवेत् । अपि वन्ध्या लभेत्पुत्रं चिरंजीविनमुत्तमम् । सर्वे रोगाः क्षयं यान्ति नात्र कार्या विचारणा ॥ १५ ॥

इति श्रीकर्मविपाकसंहितायां स्वातीनक्षत्रप्रथमचरणप्रायश्चित्त-कथनं नाम षष्टितमोऽध्यायः ॥ ६० ॥

---

## अथैकषष्टितमोऽध्यायः ॥ ६१ ॥

श्रीशिव उवाच ॥ गङ्गाया दक्षिणे कूले विंध्ये च नगरोत्तमे ।
द्विजोप्येकोऽवसद्देवि ब्रह्मकर्मविवर्जितः ॥ १ ॥

---

करादेवे तो पूर्वजन्मके पाप नष्ट होजाते हैं ॥ ११ ॥ हे सुशोभने ! 'विष्णोरराट' इस मंत्रका जप करावै फिर वेदपाठी ब्राह्मणको वस्त्र, रत्न, घंटा और चमरसे भूषित कर बछडेवाली गौ दान करके दे ॥ १२ ॥ चंद्र और सूर्यके ग्रहणमें काशीजीमें स्नान और दान करै ॥ १३ ॥ हे वरारोहे ! फिर तीन तोले सुवर्णका सुन्दर कमल बनाकर ब्राह्मणको दान करै ॥ १४ ॥ हे वरारोहे ! ऐसा करनेसे सब पाप नष्ट होजाते है वंध्या स्त्रीभी उत्तम चिरंजीवी पुत्रको प्राप्त करती है और सम्पूर्ण रोग दूर होजाते हैं इसमें कुछ विचार नही करै १५

इति श्रीकर्मविपाकसंहिताभाषाटीकायां स्वातीनक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नाम षष्टितमोऽध्यायः ॥ ६० ॥

---

शिवजी बोले-गंगाजीके दक्षिण किनारे उत्तम विन्ध्यनगरमें एक ब्राह्मण

अनाचाररतो नित्यं परस्त्रीलम्पटः शठः। व्यापारं कुरुते नित्यं गोहिरण्यगजादिकम् ॥ २ ॥ बहु द्रव्यमभूत्तस्य त्रिंशत्कोटिप्रमाणकम्। द्रव्यस्य संग्रही नित्यं न च किंचिद्ददाति सः ॥ ३॥ स्वभार्यां च परित्यज्य परभार्यारतो द्विजः। धनेश्वर इति ख्यातं तस्य नाम पुराऽभवत् ॥ ४ ॥ ततो बहुगते काले तस्य मृत्युरभूत्किल। यमदूतेन वै बद्ध्वा निक्षिप्तो नरकार्णवे ॥ ५ ॥ महाघोरे सुरश्रेष्ठे कल्पमेकं तदाऽवसत्। पुनर्व्याघ्रस्य योनिं च वृकयोनिं ततोऽलभत् ॥ ६ ॥ पुनर्मानुषयोनिं च मृतवत्सत्वमाप्तवान्। महारोगसमायुक्तो न सुखं लभते क्वचित् ॥ ७ ॥ अस्य शान्तिं प्रवक्ष्यामि शृणु देवि वरानने। गायत्रीमूलमंत्रेण दशलक्षजपो यदा ॥ ८ ॥ दशांशं हवनं चैव तदा पापक्षयो भवेत्। गोविन्दस्य सदा ध्यानं सदा गोविन्दकीर्त्तनम् ॥ ९ ॥

---

ब्रह्मकर्मसे रहित रहता था ॥ १ ॥ यह आचारसे भ्रष्ट नित्य पराई स्त्रियोंमें लम्पट और शठ था, गौ, हिरण्य एवं हाथी आदिका व्यापार करता था ॥२॥ इस भांति इसने व्यापारसे तीन करोड रुपया संचय किया और जीवनतक संचयही करता रहा परन्तु उसमेसे कुछ भी दान नही किया ॥ ३ ॥ यह ब्राह्मण अपनी स्त्रीको छोडकर अन्यस्त्रियोंमें रत रहता था, पूर्वजन्ममें इसका धनेश्वर नाम था ॥ ४ ॥ इस प्रकार बहुत समयके उपरान्त इसकी मृत्यु हुई तब यमराजके दूतोंने इसको बांधकर नरकरूपी सागरमें डाल दिया॥ ५ ॥ हे सुरश्रेष्ठ! उस महाघोर नरकमें एक कल्पतक इसने वास किया, फिर व्याघ्रकी योनि मिली, व्याघ्रयोनिको भोग वृकयोनिको प्राप्त हुआ ॥ ६ ॥ फिर मनुष्ययोनिको प्राप्त हुआ, यहां इसकी सन्तान नही जीती है और यह महारोगसे युक्त रहता है इस कारण सुखहीन है ॥ ७ ॥ हे देवि ! हे वरानने ! अब इसकी शान्तिको कहता हूं सुनो-प्रथम तो गायत्रीमूलमंत्रका दशलाख जप करावै ॥ ८ ॥ दशांश हवन आदि करै तो पाप नष्ट होते है, सदा गोविन्दका

नित्यं प्रपूजयेद्देवं शंखचक्रगदाधरम् । पीताम्बरधरं श्यामं श्रीवत्सेन विराजितम् ॥ १० ॥ प्रत्यब्दं कार्त्तिके मासि तुलसीं विष्णुरूपिणीम् । पूजयेद्दीपदानं च दद्याद्भार्यासमन्वितः ॥ ११ ॥ गोदानं शास्त्ररीत्या च ततो दद्याद्वसुन्धराम् । यथाशक्त्या च भो देवि ब्राह्मणाय शिवात्मने ॥ १२ ॥ एवं कृते न सन्देहः पूर्वजन्मकृतं च यत् । तत्पापं नाशमायाति सर्वरोगक्षयो भवेत् ॥ १३ ॥ वन्ध्यात्वं प्रशमं याति पुत्रलाभो भवेद्ध्रुवम् । काकवन्ध्या लभेत्पुत्रं नात्र कार्या विचारणा ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायां स्वातीनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

## अथ द्विषष्टितमोऽध्यायः ॥ ६२ ॥

शिव उवाच ॥ कुरुक्षेत्रे महातीर्थे बल्लवो वसति प्रिये ।
कृषिकर्मरतो नित्यं क्रयविक्रयतत्परः ॥ १ ॥
महिषीगोवृषाणां च संग्रहं कुरुते बहु ॥ २ ॥

---

ध्यान और कीर्तन करै ॥ ९ ॥ और शंख चक्र गदाधारी, पीताम्बरके धारण करनेवाले, श्याममूर्ति, श्रीवत्सके चिह्नसे विराजित श्रीविष्णुभगवान्का नित्य पूजन करै ॥ १० ॥ प्रतिवर्ष कार्तिकमासमें विष्णुरूपिणी तुलसीदेवीका स्त्रीसहित पूजन करै और दीपदान करे ॥ ११ ॥ हे देवि ! शास्त्रकी रीतिके अनुसार गोदान करे और अपनी सामर्थ्यके अनुसार शिवरूपी ब्राह्मणके लिये पृथ्वीका दान करै ॥ १२ ॥ ऐसा करनेसे निःसन्देह पूर्वजन्मके पाप नष्ट होजाते हैं और समस्त रोग दूर होजाते हैं ॥ १३ ॥ वंध्यात्वदोष दूर होकर निश्चय पुत्र प्राप्त होता है और काकवंध्या स्त्रीभी पुत्रको प्राप्त करती है इसमें कुछ भी विचार नहीं करै ॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां स्वातीनक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

श्रीशिवजी बोले-हे प्रिये ! महातीर्थस्वरूप कुरुक्षेत्रमें एक गोप रहता था, यह खेती और क्रयविक्रयके व्यापारको नित्य करता था ॥ १ ॥ इसके

तस्य भार्या वरारोहे परपुंसि रता सदा। स्वपतिं तर्जयेन्नित्यं सदा निष्ठुरभाषणात् ॥ ३ ॥ संग्रहो बहुद्रव्याणां न दानं दत्तवान् क्वचित्। एकस्मिन्दिवसे देवि चन्द्रपर्वणि शोभने। दानं च दशवर्णायाः कृतं क्षेत्रे तदा किल ॥ ४ ॥ ततो बहुगते काले तस्य मृत्युरभूत्किल। यमदूतेन भो देवि निक्षिप्तो नरके किल ॥५॥ त्रिंशद्वर्षसहस्राणि भुक्त्वा नरकयातनाम्। पुनर्माहिषयोनिश्च जातः खलु वरानने ॥ ६ ॥ नरयोनिं पुनर्लेभे धनधान्यसमन्वितः। जातः खलु वरारोहे पुत्रकन्याविवर्जितः ॥७॥ रोगवान्नात्र संदेहो जङ्घापीडा ततोऽधिका ॥ ८ ॥ अस्य शान्तिं प्रवक्ष्यामि शृणु त्वं च यथा तथा। षडंशं च ततो दानं विप्राय विदुषे तथा ॥ ९ ॥ गायत्रीलक्षजाप्यं च ततो होमं प्रकल्पयेत्। दशांशं तर्पणं कुर्यात्तद्दशांशं च मार्जनम् ॥ १० ॥

---

यहाँ भैंस, गौ और बैलोंका बहुत संग्रह था ॥ २ ॥ हे वरारोहे! इसकी स्त्री सदा परपुरुषसे रत रहती और अपने पतिसे कठोर वचनोंके साथ झगडा करती थी ॥ ३ ॥ इस गोपने बहुतसा धन संग्रह किया परन्तु उसमेंसे कुछभी दान नहीं किया हे देवि! हे शोभने! एक दिन चन्द्रपर्वपर कुरुक्षेत्रमे दशवर्णवाली गौका इसने दान किया ॥ ४ ॥ हे देवि! तिसके पीछे बहुत समयके उपरान्त इसकी मृत्यु हुई तब यमदूतोंने नरकमें डाल दिया ॥ ५ ॥ हे वरानने! वहाँ तीस हजार वर्षतक नरककी पीडा भोगकर भैंसेकी योनिको प्राप्त हुआ ॥ ६ ॥ हे वरारोहे! फिर धनधान्यसे युक्त मनुष्ययोनिको प्राप्त हुआ, यहाँ पापकर्मके वश पुत्र कन्याओंसे रहित है॥७॥ यह निःसन्देह रोगी रहता है, इसकी जाँघोंमें बडी पीडा रहती है ॥ ८ ॥ अब इसकी यथार्थ शान्तिको कहताहूँ सुनो—प्रथम तो यह अपने समस्त धनमेंसे छठा भाग विद्वान् ब्राह्मणको दान करै ॥ ९ ॥ गायत्रीका एक लाख जप करावै. जपका दशांश हवन, हवनका दशांश तर्पण और तर्पणका

गामेकां कपिलां दद्यात्स्वर्णशृङ्गीं सहाम्बराम् । ब्राह्मणान्पञ्च-पञ्चाशत्पक्वान्नेन प्रभोजयेत् ॥ ११ ॥ पञ्चपात्राणि दद्याद्वै शय्या-दानं यथाविधि । दशवर्णा प्रदातव्या ब्राह्मणेभ्यो यथाविधि ॥ १२ ॥ एवं कृते न संदेहः शीघ्रं पुत्रः प्रजायते । रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां स्वातीनक्षत्रतृतीयचरणप्रायश्चित्त-कथनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## अथ त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

श्रीशिव उवाच ॥ हस्तिनाख्यं च नगरं ख्यातं चैव मनो-हरम् । अवसंस्तत्र भो देवि नराः सर्वे विचक्षणाः ॥ १ ॥ तन्मध्ये शूद्र एको हि धर्मात्मा ज्ञानवानपि । स्वधर्मकर्मणा कृत्वा व्ययं कुर्याद्दिनेदिने ॥ २ ॥ तस्य पुत्रद्वयं जातं द्वौ च पापरतौ शठौ । प्रत्यहं जीवघातेन मद्यवेश्यारतौ च तौ ॥ ३ ॥

---

दशांश मार्जन करावै ॥ १० ॥ फिर एक कपिला गौको सुवर्णसे सींग मढाय और वस्त्र उढायके दान करै. पचपन ब्राह्मणोंको पकान्नसे भोजन करावै ॥ ११ ॥ विधिपूर्वक पॉच पात्रोंका और शय्याका दान करे फिर विधानसे दशवर्णवाली गौका दान करके ब्राह्मणको दे ॥ १२ ॥ ऐसा करनेसे निःसन्देह शीघ्र पुत्र प्राप्त होता है और समस्त रोग नष्ट होजाते हैं इसमें कुछ विचार नहीं करै ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां स्वातीनक्षत्रतृतीयचरण-प्रायश्चित्तकथनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

श्रीशिवजी बोले-हे देवि ! सुन्दर और प्रसिद्ध हस्तिनापुरमे सब बुद्धि-मान् मनुष्य वसते थे ॥ १ ॥ उनमेसे एक धर्मात्मा और ज्ञानी शूद्र था वह अपने धर्मकर्ममे प्रतिदिन खर्च करता था ॥ २ ॥ उस शूद्रके दो पुत्र उत्पन्न हुए,

द्यूताच्चैव महादेवि रात्रावह्नि च पानतः। न च वारयितुं शक्यौ शूद्रेण तु तदा शिवे ॥ ४ ॥ ततस्तु दैवयोगेन प्रयागे शूद्र आगतः। मासमेकं ततः स्थित्वा तस्य मृत्युरभूत्किल ॥ ५ ॥ विष्णुदासस्ततो लब्ध्वा यज्ञलोकं वरानने। विमानवरमारूढः स्वर्गसौख्यमवाप्तवान् ॥ ६ ॥ तस्य भार्या विशालाक्षि मर्त्यलोके सुरेश्वरि। साऽभवद्विधवा नारी किञ्चित्काले गते सति ॥ ७ ॥ परपुंसि रता जारे प्रत्यहं व्यभिचारिणी। ततो बहुगते काले तस्या मृत्युरभूत् किल ॥८॥ यमदूतैर्महाघोरैर्निक्षिप्ता तत्क्षणादपि। विंशत्यब्दसहस्राणि नरके परिभुज्यते ॥ ९ ॥ शूद्रः पुण्यक्षये जाते मृत्युलोके सुरेश्वरि। जन्म तस्य भवेद्देवि मध्यदेशे सुरेश्वरि ॥ १० ॥ तदा सा तु भवेन्नारी या पुरा व्यभिचारिणी। पूर्वजन्मप्रसंगाच्च वंशच्छेदो हि जायते ॥११॥

---

वे दोनों पापी, शठ और प्रतिदिन जीवोंके मारनेवाले, मद्यपी, वेश्यागामी हुए ॥ ३ ॥ हे महादेवि! हे शिवे! जुआ आदिसे तथा मद्य पीनेसे वह शूद्र अपने बेटोंको नही रोक सका ॥ ४ ॥ तदनन्तर यह शूद्र दैवयोगसे प्रयागमें आया वहां एक मास रहकर मरगया ॥ ५ ॥ हे वरानने! तब वह विष्णुभक्त शूद्र यज्ञलोकमें जाकर विमानोंपर चढता हुआ स्वर्गीय सुखको भोगने लगा ॥ ६ ॥ हे विशालाक्षि! हे सुरेश्वरि! इधर शूद्रकी स्त्री मृत्युलोकमे विधवा हुई ॥ ७ ॥ और अन्यपुरुषसे प्रतिदिन व्यभिचार करने लगी ऐसे बहुत कालके पीछे मरगई ॥ ८ ॥ उसी समय यमदूतोंने महाघोर नरकमें डालदिया, वहां उसने बीस हजार वर्षतक नरककी पीडा भोगी ॥९॥ हे सुरेश्वरि! हे देवि! फिर वह शूद्र पुण्य क्षीण होनेपर मृत्युलोकमें आकर मध्यदेशमें मनुष्ययोनिको प्राप्त हुआ ॥ १० ॥ और पूर्वजन्मवाली व्यभिचारिणी स्त्रीही इसको यहां मिली, सो पूर्वजन्मके प्रसंगसे ही वंशच्छेद

रोगश्च जायते ताभ्यां कष्टं चैव दिनेदिने । अस्य पापस्य वै शान्तिं तत्समासेन मे शृणु ॥ १२ ॥ स्वर्णवृक्षं वरं कृत्वा स्वांगुष्ठपरिमाणकम् । फलपुष्पसमायुक्तं पलपंचदशस्य तु ॥ १३ ॥ तस्य वृक्षस्य वै मूले शालग्रामशिलां शुभाम् । पूजयित्वा विधानेन विष्णुरूपां वरानने ॥ १४ ॥ ब्राह्मणाय ततो दद्याद्गां च दद्यात्पयस्विनीम् । गायत्रीमन्त्रजाप्यं तु लक्षमेकं प्रकारयेत्॥ १५॥ततः पापविशुद्धिः स्यात्पुत्रो भवति नान्यथा । सर्वे रोगाः क्षयं यान्ति काकवन्ध्या लभेत्सुतम् ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां स्वातीनक्षत्रचतुर्थचरणप्रायश्चित्त-कथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

हुआ है ॥ ११ ॥ यहां यह दोनों स्त्री पुरुष रोगी रहते और दिन दिन कष्ट पाते हैं, अब इसकी पापशान्तिको कहता हूँ उसको सावधान होकर मुझसे सुनो ॥ १२ ॥ यह साठ तोले सुवर्णका फल और पुष्पोंसे युक्त एक उत्तम वृक्ष अंगूठेकी समान बनवावै ॥ १३ ॥ हे वरानने ! उस वृक्षकी जडमें शालग्रामकी मूर्तिको स्थापित कर विधिपूर्वक पूजन करै ॥ १४ ॥ फिर इस मूर्तिको दुधारी गौके साथ ब्राह्मणको देदे और गायत्रीमंत्रका एक लाख जप करावै ॥ १५ ॥ ऐसे करनेसे समस्त पाप नष्ट होजाते हैं और पुत्र उत्पन्न होता है अन्य भाँतिसे नहीं होता है, सम्पूर्ण रोग नष्ट होजाते हैं और काकवन्ध्याभी पुत्रको प्राप्त होती है ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां स्वातीनक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

# अथ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## विशाखानक्षत्रफलम् ।

शिव उवाच ॥ कांपिल्यनगरे देवि क्षत्री वसति वै पुरा । क्षत्रधर्मविहीनश्च वैश्यकर्मरतः सदा ॥ १ ॥ वैश्यस्य कर्मणा नित्यं व्ययं कुर्वन्दिनेदिने । तिलवर्मेति विख्यातः पत्नी तस्य च निष्ठुरा ॥ २ ॥ बहु द्रव्यं तदा तेन संचितं तिलवर्मणा । महा-लोभेन संयुक्तो धर्मचर्चा न कुत्रचित् ॥ ३ ॥ पत्नीपुत्रैः कठोर-त्वाद्दत्तं तस्मै न दीयते । एवं बहुतिथे काले मरणं सर्पतस्तदा ॥ ४ ॥ कुम्भीपाके महाघोरे यमदूतैस्तदा शिवे । निक्षिप्तः श्रृंखलैर्बद्धा महती यातना ततः ॥ ५ ॥ युगमेकं वरारोहे कष्टं भुक्त्वा सुदारुणम् । ततोऽभूत्स ततो देवि महिषो वृषभो हयः ॥ ६ ॥ पुनश्च मानुषो भूत्वा तस्य भार्या च या पुरा । विवा-हिता च सा देवि तस्यां पुत्रो न जायते ॥ ७ ॥

---

शिवजी बोले-हे देवि ! पहले काम्पिल्यनामक नगरमें एक क्षत्रिय रहता था, यह सदा अपने धर्मको छोडकर वैश्यके कर्मको करता था ॥ १ ॥ तिल-वर्मा इसका नाम था, वह प्रतिदिन वैश्यके कर्मसे व्यय करता था, इसकी स्त्रीका नाम निष्ठुरा था ॥ २ ॥ इस तिलवर्माने बहुतसा धनसंचय किया और महा-लोभी होनेके कारण कुछभी धर्म नहीं किया ॥ ३ ॥ स्त्रीपुत्रोंने कठोरताके कारण इसका दिया हुआ धनभी उसे नही दिया, इस प्रकार चिरकालके पीछे सर्पके काटनेसे तिलवर्माकी मृत्यु होगई ॥ ४ ॥ हे शिवे ! तब यमदूतोंने सांकलोसे बांधकर महाघोर कुंभीपाक नरकमें डाल दिया, वहां यह नरकपीडा भोगने लगा ॥ ५ ॥ हे वरारोहे ! एक युगतक दारुण दुःख नरकके भोगे, तिसके पीछे हे देवि! क्रमानुसार भैंसे बैल और घोडेकी योनिको प्राप्त हुआ॥६॥ हे देवि ! फिर मनुष्ययोनिको प्राप्त हुआ, पूर्वजन्मवाली स्त्रीही इसको विवाही

पुरा ह्येकाऽभवत्कन्या पुनः सूतिविवर्जिता । रोगो भवति देहे च मध्येमध्ये ज्वरोऽभवत् ॥ ८ ॥ अस्य शांतिं प्रवक्ष्यामि शृणु देवि वरानने ॥ ९ ॥ कल्पवृक्षवरं कुर्यात्स्वांगुष्ठपरिमाणकम् । सुवर्णस्य महादेवि पलपञ्चदशस्य तु ॥ १० ॥ रौप्यस्य तु कृता वेदी पलपञ्चदशस्य तु । तत्र वृक्षं समारोप्य फलपुष्पेण संयुतम् ॥ ११ ॥ अष्टम्यां च चतुर्दश्यां नवम्यां च सुरेश्वरि । तस्य वृक्षस्य वै मूले वृषकेतुं सुरेश्वरि ॥ सगणं देवमीशानमर्चयित्वा यथाविधि ॥ १२ ॥ यथाशक्ति वरारोहे गन्धधूपादिभिस्तथा । साष्टाङ्गं दण्डवत्कृत्वा देवदेवं क्षमापयेत् ॥ १३ ॥ मंत्रेणानेन भो देवि विसर्जनमथाचरेत् ॥ ॐ नमः शिवाय देवाय शिवायै सततं नमः ॥ १४ ॥ मम पूर्वकृतं पापं जन्मजन्मसमुद्भवम् । तत्सर्वं क्षम्यतां देव देव्या सह महेश्वर ॥ १५ ॥

---

गई परन्तु कर्मवश उसके पुत्र नही उत्पन्न होता है ॥ ७ ॥ प्रथम तो इसको एक कन्या उत्पन्न हुई फिर सन्तान होना बंद होगया, इसके शरीरमें रोग रहते है और कभी कभी ज्वर आजाता है ॥ ८ ॥ हे देवि ! हे वरानने ! अब इसकी शान्तिको कहता हूँ तिसको सुनो ॥ ९ ॥ हे महादेवि ! साठ तोले सुवर्णका अँगूठेकी समान उत्तम कल्पवृक्ष बनवावै ॥ १० ॥ और फल पुष्पोंसे युक्त उस वृक्षको साठ तोले चांदीकी वेदीपर स्थापित करै ॥ ११ ॥ हे सुरेश्वरि ! अष्टमी चतुर्दशी तथा नवमीके दिन उस वृक्षकी जडमें बैलपर सवार हुए महादेवजीकी मूर्तिको उनके गणोंके साथ स्थापन कर विधिपूर्वक पूजन करै ॥ १२ ॥ हे वरारोहे ! अपनी शक्तिके अनुसार गन्ध धूप आदिसे पूजन करै फिर देवदेव महादेवको साष्टांग प्रणाम करके अपने अपराधोंको क्षमा करावै ॥१३॥ हे देवि ! "ॐ नमः शिवाय देवाय शिवायै सततं नमः" इस मंत्रसे विसर्जन करै ॥ १४ ॥ और हाथ जोडकर प्रार्थना करै कि, मेरे अनेक जन्मोंके किये हुए पापोको हे देव ! आप पार्वतीजीके साथ नष्ट करो ॥१५॥

ततो वै पूजयेद्विप्रं वेदब्रह्मस्वरूपिणम्। पट्टवस्त्राद्यलंकारैर्विविधै-मोदकैरपि ॥ १६ ॥ ततो वृक्षं सवेदिं च कपिलां गां सवत्सकाम्। ब्राह्मणाय ततो दद्यात्पूर्वपापविशुद्धये ॥ १७ ॥ व्रतं मम महादेवि शिवरात्रिं विशेषतः। आजन्ममरणाद्देवि व्रतं कुर्यात्प्रयत्नतः ॥ १८ ॥ एवं कृते महादेवि शीघ्रं पुत्रः प्रजायते। रोगाः सर्वे क्षयं यान्ति वन्ध्या च लभते सुतम्। मृतवत्सा लभेत्पुत्रं चिरंजीविनमुत्तमम् ॥ १९ ॥

इति श्रीकर्मविपाकसंहितायां विशाखानक्षत्रप्रथमचरणप्रायश्चित्त-कथनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## अथ पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

शिव उवाच ॥ विष्णुकांच्यां महादेवि ब्राह्मणो वेदपारगः।
सदाचाररतः शान्तो विष्णुभक्तिपरायणः ॥ १ ॥

---

तदनन्तर वेद और ब्रह्मस्वरूप ब्राह्मणका पूजन करै और रेशमी वस्त्र पहराय अनेक प्रकारके अलंकारोंसे भूषित कर लड्डू खिलावै ॥ १६ ॥ फिर वेदीके सहित कल्पवृक्ष और बछडा सहित कपिला गौ पूर्वजन्मके पापोंकी शान्तिके लिये ब्राह्मणको दे ॥ १७ ॥ हे महादेवि ! हे देवि ! मेरे शिवरात्रिके व्रतको विशेष करके करै और जबतक जीवित रहे तबतक यत्नके साथ अन्यव्रत भी करै ॥ १८ ॥ हे महादेवि ! ऐसे करनेसे शीघ्र पुत्र होता है. सम्पूर्ण रोग नष्ट होजाते हैं, वंध्या स्त्री पुत्रवती होती है और मृतवत्सा स्त्रीभी उत्तम चिरंजीवी पुत्रको प्राप्त करती है ॥ १९ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां विशाखानक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

शिवजी बोले-हे महादेवि ! विष्णुकांचीमें एक वेदके पारको जाननेवाला बडे आचारवाला, शान्तस्वभाव और विष्णुभक्त ब्राह्मण रहता था ॥ १ ॥

लाञ्छितो विष्णुचक्रेण स विप्रो वै वरानने । न वेदः पाठ्यते तेन न विप्रं स्पृशते क्वचित् ॥ २ ॥ द्विजानां स्मार्त्तवृत्तीनां विद्वेषं च करोति सः । शिवभक्तिरतानां च नाभिवादनमाचरेत् ॥ ३ ॥ एवं वयो गतं देवि वृद्धे जाते वरानने । मरणं तस्य वै जातं ब्राह्मणस्य वरानने ॥ ४ ॥ यमदूतैर्महाघोरे नरके पातितस्तदा । रौरवे च तदा देवि षष्टिवर्षसहस्रकम् ॥ ५ ॥ भुक्त्वा नरककष्टं च पुनर्जातः सरीसृपः । मानुषत्वं पुनर्जातं कष्टानि विविधानि च ॥ ६ ॥ पुत्रस्य मरणं कान्ते प्रतिवर्षेऽभवत्सुतः । पुनः स्त्री काकवन्ध्याऽभूत्पूर्वजन्मप्रसङ्गतः ॥ ७ ॥ धनधान्यसमायुक्तो मानुषं लभ्यते क्वचित् ॥ ८ ॥ अथ वक्ष्ये महादेवि पूर्वपापस्य निष्कृतिम् । अष्टांशं यद् गृहे देवि ब्राह्मणाय समर्पयेत् ॥ ९ ॥ गायत्रीजातवेदोभ्यां दशायुतजपं ततः । कूष्माण्डं नारिकेलं च पञ्चरत्नसमन्वितम् । गङ्गामध्ये प्रदातव्यं पूर्वपापविशुद्धये ॥ १० ॥

---

हे वरानने ! यह विष्णुचक्रसे ( शंखचक्रके चिह्नसे ) युक्त था, यह न किसीको वेद पढाता और न ब्राह्मणको छुआ करता था ॥ २ ॥ और स्मार्त वृत्तिवाले ब्राह्मणोंसे द्वेष रखता था, एवं शिवभक्तोंको प्रणाम नही करता था ॥ ३ ॥ हे देवि ! हे वरानने ! इस प्रकारसे इसकी आयु बीतगई हे वरानने ! फिर वृद्धावस्थाको प्राप्त होनेपर उसकी मृत्यु होगई ॥ ४ ॥ हे देवि ! तब यमदूतोंने महाघोर रौरव नरकमें साठ हजार वर्षोंके लिये डाल दिया ॥ ५ ॥ वहां नरकके दुःख भोगकर सर्प हुआ सर्पकी योनि भोगकर मनुष्य हुआ है मनुष्य होकर अनेक प्रकारके कष्ट भोगरहा है ॥ ६ ॥ हे कान्ते ! प्रतिवर्ष इसके पुत्र उत्पन्न होकर मरजाता है पूर्वजन्मके प्रसंगसे इसकी स्त्री काकवंध्या होगई है ॥ ७ ॥ हे महादेवि ! धनधान्यसे युक्त होकर मनुष्य जन्म कोईही पाता है ॥ ८ ॥ हे महादेवि ! अब इसके पूर्वपापोके नष्ट होनेका उपाय कहता हूँ- प्रथम तो यह अपने घरका आठवां भाग ब्राह्मणको देदे ॥९॥ फिर "गायत्री" और "जातवेदसे" इन मंत्रोंका एक लाख जप करावै और कुम्हडा नारियल

निष्कत्रयसुवर्णस्य कमलं निर्मितं शुभम् । दद्याद्वेदविदे देवि ब्राह्मणाय शुभार्थिने ॥ ११ ॥ एवं कृते भवेद्देवि पूर्वपापविशुद्धता । पुत्रं चैव लभेद्देवि चिरञ्जीविनमुत्तमम् ॥१२॥ व्याधयः प्रशमं यान्ति ज्वराः सर्वे तथाविधाः । काकवन्ध्या लभेत्पुत्रं चिरंजीविनमुत्तमम् ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां विशाखानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम पंचषष्टितमोऽध्यायः ॥ ६५ ॥

---

## अथ षट्षष्टितमोऽध्यायः ॥ ६६ ॥

शिव उवाच ॥ विदर्भनगरे देवि क्षत्री ह्येकोऽवसत्पुरा ।
तेजःशर्मेति विख्यातो द्विजानां वृत्तिहारकः ॥ १ ॥
प्रजानां दुःखदो नित्यं वेदानां चैव निन्दकः ।
तस्य त्रासवशात्सर्वाः प्रजा ग्रामात्पलायिताः ॥२॥

---

पंचरत्नोंके साथ गंगाजीमे खडे होकर पूर्वपापोंकी शुद्धिके लिये दान करै ॥ १० ॥ हे देवि ! तीन तोले सोनेका उत्तम कमल बनवाकर कल्याणके निमित्त वेदपाठी ब्राह्मणको देवे ॥ ११ ॥ हे देवि ! ऐसा करनेसे पूर्वजन्मके पाप नष्ट होजाते हैं और हे देवि ! उत्तम चिरंजीवी पुत्र प्राप्त होता है ॥ १२ ॥ संपूर्ण व्याधि और ज्वर नष्ट होजाते हैं, काकवंध्या भी उत्तम चिरंजीवी पुत्रको प्राप्त करती है ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां विशाखानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम पंचषष्टितमोऽध्यायः ॥ ६५ ॥

---

शिवजी बोले-हे देवि ! पहले विदर्भनगरमें एक तेजशर्मानामक क्षत्रिय बसता था यह ब्राह्मणोंकी वृत्तिको हरनेवाला ॥ १ ॥ प्रजाको दुःख देनेवाला और प्रतिदिन वेदोंकी निन्दा करनेवाला था, उसके भयसे दुःखी हो सम्पूर्ण

एवं बहुगते काले तस्य मृत्युरभूत्किल । यमदूतैर्महाघोरे निक्षिप्तो नरके ततः ॥ ३ ॥ द्विसप्ततिसहस्राणि घोरे नरक-कर्दमे । भुक्तं नरककष्टं च सूचीमुखव्यथावृतम् ॥ ४ ॥ नरका-न्निर्गतो देवि गर्दभत्वं ततोऽभवत् । रासभानन्तरं देवि मानुषत्वं ततोऽभवत् ॥ ५ ॥ तस्य भार्याऽभवद्वन्ध्या पूर्वजन्मफला-न्वतः । तस्य गात्रेऽभवद्रोगो दद्रुरर्शादयस्तथा ॥ ६ ॥ न सुखं लभते देवि चिन्तया व्याकुलेन्द्रियः । शृणु सर्वं वरारोहे पूर्व-पापस्य निग्रहम् ॥ ७ ॥ दशांशं यद् गृहे देवि ब्राह्मणाय समर्प-येत् । वापीकूपतडागादि पथिमध्ये च कारयेत् ॥ ८ ॥ गृहदानं ततो देवि सर्ववस्तुसमन्वितम् । प्रदद्याद्वेदविदुषे ब्राह्मणाय वराय च ॥९॥ आकृष्णेति जपं देवि लक्षमेकं च कारयेत् । होमं च कारयेद्देवि तिलाज्यमधुतण्डुलैः ॥ १० ॥ ततो गां कपिलां देवि ब्राह्मणाय प्रपूजिताम् । प्रदद्याद्विधिवच्चैव सर्वालङ्कारभूषिताम् ११

---

प्रजा नगरको छोडकर भागगई ॥ २ ॥ इस प्रकार चिरकालके पीछे उसकी मृत्यु होगई, तब यमदूतोंने महाघोर नरकमे डाल दिया ॥ ३ ॥ वहाँ बहत्तर हजार वर्षतक घोर कर्दमनामक नरकमें सुईके समान मुखवाले कीडोंसे डसते रहकर नरककी पीडा भोगी ॥ ४ ॥ हे देवि ! जब नरकसे निकला तब गधेकी योनि भोगकर मनुष्य हुआ है ॥ ५ ॥ पूर्वजन्मके फलसे उसकी स्त्री वंध्या हुई और उसके शरीरमें दाद, बवासीर आदि रोग हुए हैं ॥६॥ हे वरारोहे ! उसको सुख नहीं मिलता और इंद्रियें व्याकुल रहती हैं, अब इसके पापकी शान्तिको सुनो ॥७॥ प्रथम तो यह अपने घरका दशवां भाग ब्राह्मणको सम-र्पण करै और मार्गके बीचमें बावडी, कुआँ, तालाव बनवावै ॥ ८ ॥ हे देवि ! फिर सब वस्तुओंसे युक्त करके घर वेदपाठी श्रेष्ठ ब्राह्मणको दान करके दे ॥९॥ हे देवि ! 'आकृष्णेन' इस मंत्रका एक लाख जप करावै, फिर तिल, घी, शहद और चावलोंसे हवन करावै ॥१०॥ हे देवि ! सम्पूर्ण अलंकारोंसे भूषित करके

सुवर्णं निष्कमात्रं तु ब्राह्मणाय ततो ददेत् ।
एवं कृते वरारोहे रोगनाशो भवेद् ध्रुवम् ॥ १२ ॥
पुत्रश्च जायते देवि वन्ध्यात्वं च प्रशाम्यति ।
काकवन्ध्या लभेत्पुत्रं नात्र कार्या विचारणा ॥१३॥

इति श्रीकर्मविपाकसंहितायां विशाखानक्षत्रतृतीयचरणप्रायश्चित्त-कथनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## अथ सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

शिव उवाच ॥ मायापुर्यां महादेवि क्षत्री ह्येकस्तु तिष्ठति । स शूरश्च धनी मानी देवतातिथिपूजकः ॥ १ ॥ तस्य भार्या विशालाक्षि शतानाम्नी वराङ्गना । ब्राह्मणातिथिदेवानां पूजने चापि तत्परा ॥ २ ॥ एकस्मिन्समये देवि हेमकारस्तदाऽऽगतः । स चाढ्यः स्वर्णसंयुक्तो हेमकारस्तदाऽवसत् ॥ ३ ॥ क्षत्रियाय स्वमित्राय शतं स्वर्णस्य वै पलम् । प्रदत्तं हेमकारेण चान्यत् स्वर्णं समर्पितम् ॥ ४ ॥

---

कपिला गौका पूजन कर ब्राह्मणको देवै ॥ ११ ॥ हे वरारोहे ! फिर एक तोला सुवर्ण ब्राह्मणको दान करके दे ऐसा करनेसे शीघ्रही रोग नष्ट हो जाते है ॥ १२ ॥ हे देवि ! और पुत्र होता है वंध्यात्वदोष दूर होजाता है काक-वंध्या स्त्री भी पुत्रको प्राप्त करती है इसमें कुछ विचार न करै ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां विशाखानक्षत्रतृतीयचरण-प्रायश्चित्तकथनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

शिवजी बोले-हे महादेवि ! मायापुर (हरिद्वार) में एक क्षत्रिय रहता था, यह शूर, वीर, धनी, मानी और अभ्यागतोंका पूजनेवाला था ॥ १ ॥ हे विशालाक्षि ! इसकी स्त्री शतानामसे विख्यात और शुभ अंगवाली थी, यह भी ब्राह्मण, अतिथि और देवताओंका पूजन करती थी ॥ २ ॥ हे देवि ! एकसमय एक धनी सुवर्णसे युक्त सुनार आकर यहां वसने लगा ॥ ३ ॥ फिर इस क्षत्रियसे मित्रता होनेपर सुनारने क्षात्रियको चार सौ तोले सुवर्ण

अत्रान्तरे महादेवि स्वर्णकारस्ततो मृतः । दष्टः सर्पेण तीव्रेण स्वर्णकारो ह्यपुत्रकः ॥ ५ ॥ स्वर्णं सर्वं गृहीत्वा तु प्रभुक्तं क्षत्रियेण तत् । पुत्रदारेषु संयुक्तं किञ्चिद्दाने न कल्पितम् ॥ ६ ॥ ततो बहुगते काले तस्य मृत्युरभूत्किल । क्षत्रियस्य महादेवि सुरलोकस्ततोऽभवत् ॥ ७ ॥ सौख्यं सुराङ्गनासार्धं षष्टिवर्ष-प्रमाणकम् । ततः पुण्यक्षये जाते मर्त्यो भवति भामिनि ॥८॥ धनधान्यसमायुक्तो भार्या भवति या पुरा ॥ ९ ॥ गर्भश्च जायते देवि तद्गर्भपतनं भवेत् । रोगमुग्रं लभेद्देवि न सुखं जायते खलु १० शान्तिं शृणु वरारोहे यतः पापक्षयो भवेत् । षडंशं च ततो देवि ब्राह्मणाय समर्पयेत् ॥ ११ ॥ दशवर्णां श्रोत्रियाय दद्या-द्विप्राय मत्प्रिये । गायत्रीमूलमंत्रेण लक्षजाप्यं च कारयेत् ॥ १२

---

दिया, पीछे और भी सुवर्ण दे दिया ॥ ४ ॥ हे महादेवि ! इसके उपरान्त वह सुनार सर्पके काटनेसे अपुत्रावस्थामे ही मरगया ॥ ५ ॥ तब इस सुनारका समस्त धन लेकर अपने स्त्रीपुत्रोंसहित यह क्षत्रिय भोगने लगा, परन्तु उस धनमेसे कुछ .दान नही किया ॥ ६ ॥ हे देवि ! चिरकालके उपरान्त उस क्षत्रियकी मृत्यु हुई तब स्वर्गलोकको गया ॥ ७ ॥ हे भामिनि ! वहां साठ हजार वर्षतक इसने देवाङ्गनाओंके साथ सुख भोगा, जब पुण्य क्षीण हुआ तब मृत्युलोकमें मनुष्य हुआ है ॥ ८ ॥ यह धनधान्यसे युक्त है और पूर्व जन्मवाली स्त्री ही इसको मिली है, पूर्वकर्मोंके वश न कन्या होती और न पुत्र ही होता है ॥९॥ हे देवि ! यहां इसकी स्त्रीके गर्भ तो रहता है परन्तु वह असमयमें ही गिरजाता है, हे देवि ! इसको उग्ररोग होनेसे सुख नही मिलता ॥ १० ॥ हे वरारोहे ! दे देवि ! अब इसके पाप दूर होनेकी शांतिको सुनो—प्रथम तो यह अपने घरका छठा भाग ब्राह्मणको दे दे ॥ ११ ॥ हे प्रिये ! फिर दशवर्णवाली गौको श्रोत्रिय ब्राह्मणको द और

पक्वान्नेनैव भो देवि ब्राह्मणान्भोजयेच्छतम् ॥ १३ ॥ वृक्षं स्वर्णस्य वै देवि फलपुष्पसमन्वितम् । दद्याद्विप्राय विदुषे पलदशप्रमाणकम् ॥ १४ ॥ सूर्यस्य पूजनं देवि रविवारे विशेषतः । एवं कृते वरारोहे शीघ्रं पुत्रश्च जायते ॥ १५ ॥ ज्वरस्य वै भवेन्मुक्तिः काकवन्ध्या सुतं लभेत् । मृतवत्सा लभेत्पुत्रं चिरंजीविनमुत्तमम् ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां विशाखानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अथाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

### अनुराधानक्षत्रफलम् ।

शिव उवाच ॥ कल्याणनगरे देवि मायापुर्याः समीपतः ।
एको वणिग्जनोऽप्यासीद्धनाढ्यो धनगर्वितः ॥ १ ॥
क्रयं च कुरुते नित्यं विक्रयं च सदाऽकरोत् ।
महालोभवशाद्देवि न दानं कुरुते क्वचित् ॥ २ ॥

---

गायत्रीमूलमंत्रका एक लाख जप करावै ॥ १२ ॥ हे देवि ! पक्वान्नसे सौ ब्राह्मणोको भोजन करावै ॥ १३ ॥ हे देवि ! चालीस तोले सुवर्णका फलपुष्पोंसे युक्त एक वृक्ष बनवाकर विद्वान् ब्राह्मणको दान करै ॥ १४ ॥ हे देवि ! प्रतिरविवारको विशेषरूपसे सूर्यभगवान्का पूजन करे, ऐसा करनेसे शीघ्र पुत्र होता है ॥ १५ ॥ मनुष्यका ज्वर छूट जाता है, काकवंध्या स्त्री पुत्र प्राप्त करती है और मृतवत्सा स्त्रीभी चिरंजीवी पुत्रको प्राप्त करती है ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां विशाखानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

शिवजी बोले–हे देवि ! मायापुरीके निकट कल्याणनामक नगरमें धनसे गर्वित एक वैश्य रहता था ॥ १ ॥ हे देवि ! यह सदा क्रयविक्रय करता था

तस्य भार्या विशालाक्षि पुंश्चली कुलटाऽधमा । पुत्रद्वयं वरारोहे पुंश्चल्यां समभूत्तदा ॥ ३ ॥ एको द्यूतरतः पुत्रो द्वितीयो ब्राह्मणीरतः । वैश्येनैव विशालाक्षि धनं च बहु सञ्चितम् ॥ ४ ॥ प्रत्यहं भुज्यते छागविक्रयं कुरुते सदा । वृद्धे सति महादेवि वैश्यस्य मरणं ह्यभूत् ॥ ५ ॥ यमदूतैस्तदा बद्धा निक्षिप्तो नरकार्णवे । स्वरूपं दर्शयामास तस्मै वैश्याय भो शिवे ॥ ६ ॥ नवत्यब्दसहस्राणि घोरे नरकदारुणे । महाकष्टं तदा प्राप्तः कृमिभिर्घोररूपिभिः ॥ ७ ॥ ततो व्याघ्रस्य वै योनिं काक-कुक्कुटयोः पुनः । मानुषत्वं पुनर्यातः पुत्रकन्याविवर्जितः ॥८॥ पुनर्विवाहिता सा तु या पत्नी पूर्वजन्मनि । रोगवत्यभवत्सोग्रा मृतवत्सा पुनः पुनः ॥ ९ ॥ एकापत्या तदा जाता पुनः पुत्रो न जायते ॥ १० ॥

---

और महालोभके वश दान कुछ नही करता था ॥ २ ॥ हे विशालाक्षि ! हे वरारोहे ! इसकी स्त्री व्यभिचारिणी, कुलटा और महाअधम थी, इसके दो पुत्र उत्पन्न हुए ॥ ३ ॥ हे विशालाक्षि ! उनमेसे एक जुआरी और दूसरा ब्राह्म-णीसे रमण करनेवाला हुआ, इस वैश्यने बहुतसा धन सञ्चय किया था ॥ ४ ॥ हे महादेवि ! यह प्रतिदिन बकरेके मांसको खाता और बकरोंको मोल लेता बेचता था. वृद्धावस्थाको प्राप्त होकर इस वैश्यकी मृत्यु होगई ॥ ५ ॥ हे शिवे ! यमदूतोंने अपना घोररूप दिखाकर इसको बाँधकर नरकरूपी समुद्रमें डाल दिया ॥ ६ ॥ वहां इसने ९०००० नब्बे हजार वर्षतक घोर दारुण नरकमें कीडोंसे कष्ट पाया ॥ ७ ॥ तदनन्तर व्याघ्र, मुरगा और कौएकी योनि भोग मनुष्ययोनिको प्राप्त हुआ, यह पुत्र कन्याओसे रहित है ॥ ८ ॥ और पूर्वजन्मवाली स्त्री फिर मिली है परन्तु पूर्वकर्मवश उग्ररोग रहता है और बारंवार सन्तान होकर मरजाती हैं ॥ ९ ॥ इसके एक सन्तान हुई फिर

यदा सर्वस्वदानं वै सूर्यस्याराधनं यदा। हरिवंशश्रवणं देवि दुर्गास्तोत्रजपस्तथा ॥ ११ ॥ गायत्रीमूलमन्त्रेण लक्षजाप्यं यदा भवेत्। तदा पुत्रो भवेद्देवि व्याधिनाशश्च जायते ॥ १२ ॥

इति श्रीकर्मविपाकसंहितायामनुराधानक्षत्रप्रथमचरणप्रायश्चित्त-कथनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## अथैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

शिव उवाच ॥ मागधे वै शुभे देशे काष्ठकारोऽवसत्प्रिये। पुत्रपौत्रसमायुक्तो धनाढ्यो गुणवानपि ॥ १ ॥ यदा चार्धं वयो जातं दरिद्रत्वं तदाऽभवत्। गृहीतं च यतेर्द्रव्यं शतं पंचपलं तथा ॥ २ ॥ व्ययं कृत्वा तदा तेन न दत्तं यतये शिवे। ततस्तस्याभवन्मृत्युः काष्ठकारस्य मागधे ॥ ३ ॥

---

कोई पुत्र नहीं हुआ ॥ १० ॥ हे देवि ! यदि यह सर्वस्वदान करे, सूर्यका आराधन करै, हरिवंशपुराणकी कथा सुनै, दुर्गास्तोत्रका पाठ करै अथवा दुर्गाजीके मंत्रका जप करावै ॥ ११ ॥ और गायत्रीमूलमंत्रका एक लाख जप करावै हे देवि ! तो पुत्र उत्पन्न होता है और समस्त व्याधियें दूर होजाती हैं ॥ १२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामनुराधानक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

शिवजी बोले-हे प्रिये ! मागधनामक शुभदेशमें पुत्रपौत्रोंसे युक्त धनी और गुणी एक बढई रहता था ॥ १ ॥ जब इसकी आधी आयु बीती तभी दरिद्रता आ गई, तब इसने एक यतीसे चारसौ तोले सुवर्ण लिया ॥ २ ॥ हे शिवे ! उस रुपयेको लेकर खर्च करदिया और यतीको फिर नहीं दिया

ददौ वै कपिलां कृष्णां स्वर्णरौप्यविभूषिताम् । पुत्रेणापि कृतं श्राद्धं शास्त्ररीत्या गयादिकम् ॥ ४ ॥ यक्षलोके तदा यातो वर्षं शतसहस्रकम् । पुनः पुण्यक्षये जाते कपियोनिं ततोऽलभत् ॥ ५ ॥ ऋक्षस्यैव पुनर्योनिं मानुषत्वं ततोऽगमत् । धनधान्य-समायुक्तो गुणज्ञोऽप्यतिसुन्दरः ॥ ६ ॥ पूर्वजन्मनि भो देवि काष्ठच्छेदः कृतः सदा । तेन पापेन भो देवि शरीरे महती व्यथा ॥ ७ ॥ यतेर्द्रव्यं गृहीतं च न दत्तं यतये यतः । तेन जातः सुतो देवि ऋणसम्बन्धकारणात् ॥ ८ ॥ द्यूतवेश्यारतो नित्यं पितृ-मात्रोर्विरोधकृत् । युवरूपो यदा जातस्तदा मृत्युश्च जायते ॥ ९ ॥ पुनः पुत्रस्य संदेहः काकवन्ध्यात्वमाप्नुयात् । पत्नी तस्य वरारोहे मृतवत्सा पुनः पुनः ॥ १० ॥ अस्य शान्तिमहं वक्ष्ये शृणु देवि प्रयत्नतः । गृहवित्ताष्टमं भागं पुण्यकार्ये च कारयेत् ॥ ११ ॥ सूर्यमन्त्रस्य वै जाप्यं वैदिकस्य वरानने । आकृष्णेति महामंत्रः सर्वव्याधिविनाशनः ॥ १२ ॥

---

फिर बढईकी मगधदेशमें मृत्यु होगई ॥ ३ ॥ उस समय बढईके पुत्रने सोने चांदीसे भूषित करके एक कपिला कृष्णागौका दान दिया और शास्त्रकी रीतिसे गया आदिमें श्राद्ध किया ॥ ४ ॥ उस पुण्यफलसे बढईने एक लाख वर्षतक यक्षलोकमें वास किया जब पुण्य क्षीण हुआ तब बंदर हुआ ॥ ५ ॥ फिर रीछ तिस पीछे धनधान्यसे युक्त गुणी और परमरूपवान् मनुष्य हुआ ॥ ६ ॥ हे देवि ! पूर्वजन्ममें इसने काष्ठका छेदन किया है इससे इसके शरीरमें बडी पीडा रहती है ॥ ७ ॥ हे देवि ! और जो यतीका धन लेकर नहीं दिया उससे ऋणसंबंधी पुत्र उत्पन्न हुआ ॥ ८ ॥ सो ज्वारी वेश्यागामी हुआ और प्रतिदिन माता पितासे विरोध करता था, जब युवक हुआ तभी मरगया ॥ ९ ॥ हे वरारोहे ! फिर पुत्रका सन्देह हुआ स्त्री काकवंध्या होगई और वारंवार सन्तान होकर मर-जाती है ॥ १० ॥ हे देवि ! अब उसकी शांतिको कहताहूं तुम यत्नके साथ सुनो-प्रथम तो यह अपने घरका आठवां भाग पुण्यकार्यमें लगावे ॥ ११ ॥ हे वरानने !

सर्वकामप्रदो देवि मोक्षदो भुक्तिकारणम् ॥ १३ ॥ सूर्यदेवस्य यो भक्तिं कुरुते नियतो नरः । न किंचिद्दुर्लभं तस्य पुत्रतो धनतोऽपि वा ॥ १४ ॥ ममातीव प्रियो नित्यं सूर्यदेव उपासिते । मद्गणास्तं हि रक्षन्ति यतो मम कला रविः ॥ १५ ॥ कमलं सूज्ज्वलं देवि वंशपात्रं सुशोभनम् । तस्योपरि सुवर्णस्य सूर्यं रत्नविभूषितम् । पलपंचमितं देवि मंत्रेणानेन पूजयेत् ॥ १६ ॥ ॐ नमः सूर्याय देवाय भद्राय भद्ररूपिणे । पूर्वजन्मकृतं सर्वं मम पापं व्यपोहय ॥ १७ ॥ प्रतिमां पात्रसंयुक्तां ब्राह्मणाय च दापयेत् ॥ १८ ॥ ततो गां कपिलां शुभ्रां सवत्सां स्वर्णभूषिताम् । ब्राह्मणाय ततो दद्यात्पट्टवस्त्रेण वेष्टिताम् ॥ १९ ॥ रविसप्तमीव्रतं कुर्यात्पत्न्या सह वरानने । पूर्वजन्मकृतं पापं नश्यत्येवं कृते प्रिये ॥ २० ॥

---

फिर 'आकृष्णेन' इस वैदिकमंत्रका जप करावै तो सब व्याधि नष्ट होजाती हैं ॥ १२ ॥ हे देवि! सूर्यमन्त्र समस्त कामनाओका दाता मोक्षदाता और सब भोगोका कारण है ॥ १३ ॥ सूर्यनारायणकी जो मनुष्य भक्ति करता है उसको धन पुत्र आदि कोई पदार्थ दुर्लभ नही रहता ॥ १४ ॥ जो मनुष्य प्रतिदिन सूर्यदेवकी उपासना करते है वे मुझको बडे प्रिय है और मेरे गणही उनकी रक्षा करते है क्योंकि सूर्य मेरी कला है ॥ १५ ॥ हे देवि! फिर सुन्दर बांसके पात्रमें सुन्दर कमलको रखकर उसपर रत्नोसे भूषित करके बीस तोले सुवर्णकी सूर्यनारायणकी मूर्तिको स्थापित कर इन मंत्रोंसे पूजन करे ॥ १६ ॥ मंत्र-ॐ नमः भद्र और भद्रस्वरूप सूर्यदेवके लिये नमस्कार है (हे भगवन्!) मेरे पूर्वजन्मके सम्पूर्ण पापोंको नष्ट करो ॥ १७ ॥ फिर पात्रसहित सूर्यनारायणकी मूर्ति ब्राह्मणको देदे ॥१८॥ अनन्तर बछडासहित सफेद कपिला गौको सुवर्णसे भूषित कर और रेशमीवस्त्र उढाय ब्राह्मणको दान करके दे ॥ १९ ॥ हे वरानने! हे प्रिये! फिर स्त्रीसहित रविवार

रोगाः सर्वे क्षयं यान्ति पुत्रलाभो भवेद् ध्रुवम् ।
काकवंध्या लभेत् पुत्रं मृतवत्सा च पुत्रिणी ॥ २१ ॥

इति श्रीकर्मविपाकसंहितायामनुराधानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## अथ सप्ततितमोऽध्यायः ॥ ७० ॥

शिव उवाच ॥ सौराष्ट्रदेशे विख्यातं सुकर्माख्यं पुरं महत् ।
तत्र तिष्ठति वै विप्रो ब्रह्मकर्मविवर्जितः ॥ १ ॥ विक्रयं कुरुते
नित्यं गजवाजिरथादिकम् । राजमृत्युं समासाद्य ग्रामदाह-
स्तथा कृतः ॥ २ ॥ ब्राह्मणा बहवस्तत्र ब्राह्मण्यश्च तथा
शिवे । मृता ग्रामस्य वै दाहे बह्वयो गावो मृताः खलु ॥ ३ ॥
ततो बहुतिथे काले मृतः सोऽपि द्विजाधमः । ततस्तु यमदूतेन
नरके घोरकर्दमे ॥ ४ ॥ यमाज्ञया च निक्षिप्तः कष्टं भुक्तं
मुहुर्मुहुः । नरकान्निर्गतो देवि गजयोनिं ततोऽलभत् ॥ ५ ॥

---

सप्तमीका व्रत करे तो पूर्वजन्ममें कियेहुए पाप नष्ट हो जाते हैं ॥ २० ॥ और समस्तरोग नष्ट होजाते है शीघ्र पुत्र प्राप्त होताहै काकवन्ध्या और मृतवत्सा स्त्रीभी पुत्रवती होती है ॥ २१ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामनुराधानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

श्रीशिवजी बोले–हे प्रिये ! सौराष्ट्रदेशमे सुकर्मानामक नगर बडा विख्यात है, वहां ब्रह्मकर्मसे रहित एक ब्राह्मण वसता था ॥ १ ॥ यह ब्राह्मण प्रतिदिन हाथी, घोडे और रथ आदिका व्यापार करता था, एक समय राजाकी मृत्यु जानकर इसने गॉवको जलादिया ॥ २ ॥ हे शिवे ! उस गांवके जलनेसे अनक ब्राह्मण ब्राह्मणी और गौएं मरगई ॥ ३ ॥ चिरकालके उपरान्त वह अधम ब्राह्मण मरगया, तब यमदूतोंने घोर कर्दम नरकमे ॥ ४ ॥ यमराजकी आज्ञासे डालदिया और वारंवार कष्ट भोगकर जब नरकसे

कच्छपत्वं ततो यातः काकयोनिस्ततोऽभवत् । मानुषत्वं ततो यातः कुले महति शोभने ॥ ६ ॥ सर्वसम्पत्तिसंयुक्तो वंशस्तस्य न जायते । बहुकन्यासमायुक्तो रोगयुक्तो भवेन्नरः ॥ ७ ॥ भार्या तस्य ज्वरग्रस्ता मासे वर्षे भवेज्ज्वरः । अतः शान्तिं प्रवक्ष्यामि यतः खलु सुखी भवेत् ॥ ८ ॥ चतुर्भागं गृहद्रव्यं ब्राह्मणाय समर्पयेत् । प्रयागे मकरे मासि पत्न्या सह वरानने ॥ ९ ॥ स्नानं तु नियतः कुर्यात्सप्ताहं च ततः शिवे । हेमदानं ततः कुर्याद् भूमिदानं च पार्वति ॥ १० ॥ गायत्रीजातवेदोभ्यां त्र्यम्बकेण तदा जपेत् । दशायुतप्रमाणेन हवनं मार्जनं तथा ॥ ११ ॥ ब्राह्मणान्भोजयेद्भक्त्या पक्वान्नैः पायसेन च । विप्रेभ्यो दक्षिणां दद्याद्वस्त्ररत्नविभूषिताम् ॥ १२ ॥ दशवर्णां ततो दद्याद्धरिवंशश्रवणं ततः । एवं कृते वरारोहे शीघ्रं पुत्रमवाप्नुयात् ॥ १३ ॥

---

निकला तब हे देवि ! हाथी हुआ ॥ ५ ॥ फिर कछुआ और काककी योनि मिली फिर सुन्दर कुलमे मनुष्य होकर जन्म लिया है ॥ ६ ॥ यहाँ सब संपत्तियोंसे तो युक्त और वंश करके रहित है इसके बहुतसी कन्या हुई हैं और रोगी रहता है ॥ ७ ॥ स्त्रीकोभी रोग रहता है महीने और वर्षमें ज्वर आजाता है, अब इसकी शान्ति कहता हूँ जिससे इसको सुख प्राप्त हो ॥८॥ प्रथम यह अपने घरका चतुर्थ भाग धन ब्राह्मणको देदे। हे वरानने ! हे शिवे ! फिर स्त्रीके साथ प्रयागराजमें माघके महीने सात दिन स्नान करे तिस पीछे हे पार्वति ! सुवर्णके साथ पृथ्वीदान करै ॥ ९ ॥ १० ॥ फिर 'गायत्री' और 'जातवेदसे' 'त्र्यम्बक' इन तीनो मंत्रोंका एक लाख जप करावै, जपका दशांश हवन हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै ॥ ११ ॥ भक्तिके साथ पक्वान्न और खीरसे ब्राह्मणोंको भोजन कराके दक्षिणा दे, दशवर्णवाली गौको वस्त्र और रत्नोंसे भूषित करके दान करे

काकवन्ध्या लभेत्पुत्रं पुनर्देवि न संशयः ।
रोगाः सर्वे क्षयं यान्ति मृतवत्सा लभेत्सुतम् ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायामनुराधानक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम सप्ततितमोऽध्यायः ॥ ७० ॥

---

## अथैकसप्ततितमोऽध्यायः ॥ ७१ ॥

शिव उवाच ॥ वन्दी जनो वसत्येकः सौराष्ट्रविषये शुभे । स कविर्भाग्यवान्देवि स्वधर्मनिरतः सदा ॥ १ ॥ तस्य स्त्री सुन्दरी देवि पतिसेवासु तत्परा ॥ २ ॥ एकस्मिन्दिवसे देवि ब्रह्मचारी समागतः । आतिथ्यकरणे तस्य चासमर्थस्तदा शिवे ॥ ३ ॥ उपोषणं कृतं तेन द्वारे वन्दिजनस्य च । प्रभाते स वरारोहे शापं दत्त्वा गतस्तु वै ॥ ४ ॥

---

और हरिवंशपुराणकी कथा सुने हे वरारोहे ! ऐसा करनेसे शीघ्र पुत्र प्राप्त होता है ॥ १२ ॥ १३ ॥ हे देवि ! निःसन्देह काकवंध्या नारी पुत्रको प्राप्त करती है समस्तरोग नष्ट हो जाते है और मृतवत्सा स्त्री पुत्र प्राप्त करती है ॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामनुराधानक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम सप्ततितमोऽध्यायः ॥ ७० ॥

---

शिवजी बोले–हे देवि ! सुंदर सौराष्ट्रदेशमें एक बंदीजन रहता था यह कवि, भाग्यवान् और अपने धर्ममें तत्पर था ॥ १ ॥ हे देवि ! इसकी स्त्री सुन्दरी और पतिव्रता थी ॥ २ ॥ हे देवि ! हे शिवे ! एक दिन इसके घर एक ब्रह्मचारी आया तब इसने उसका अतिथिसत्कार नहीं किया इस कारण इसके द्वारपर ब्रह्मचारीने उपोषण किया अर्थात् कुछ भोजन नही किया और हे वरारोहे ! प्रात काल उठकर ब्रह्मचारी इसको

ततस्तु दैवयोगेन मार्जारी तत्र सूतिका । पंच पुत्रा वरारोहे घातितास्तेन भामिनि ॥ मार्जारी च तदा देवि क्षुधार्ता च तदा तथा ॥ ५ ॥ ततो बहुतिथे काले तस्य मृत्युरभूत्पुरा । पत्नी पतिव्रता तस्य सती जाता च तत्क्षणात् ॥ ६ ॥ सत्यलोके वरारोहे युगमेकमुवास सः । पत्न्या सह वरारोहे सौख्यं हि मनसेप्सितम् ॥ ७ ॥ भुक्तं देवाङ्गनासार्द्धं पुनः पुण्यक्षये सति । मानुषत्वं ततो लेभे सह पत्न्या वरानने ॥ ८ ॥ धनधान्यसमायुक्तो वरा भार्या विवाहिता । पुत्राश्च बहवो जातास्तेषां मृत्युरभूत्किल ॥ ९ ॥ सा ज्वरेण समाविष्टा मध्ये तापयुता पुनः । तस्य पापस्य वै शान्तिं शृणु त्वं गिरिजे वरे ॥ १० ॥ जातवेदसमंत्रेण लक्षजाप्यं च कारयेत् । बिडालप्रतिमां कृत्वा पञ्चबालैश्च संयुताम् ॥ ११ ॥ हेम्ना रौप्यस्य वा देवि पलपञ्चदशस्य तु । सवस्त्रां वै तदा दद्याद्ब्राह्मणाय वरानने ॥ १२ ॥

---

शाप देकर चला गया ॥ ३ ॥ ४ ॥ हे वरारोहे ! हे भामिनि ! हे देवि ! अनन्तर दैवयोगसे इसके यहाँ एक बिल्ली पाँच बच्चे व्याई तब इसने बिल्लीके पाँचों बच्चोंको मारडाला और बिल्ली भूखी रही ॥ ५ ॥ तिसके उपरान्त चिरकालके पीछे इस बंदीजनकी मृत्यु हुई तब इसकी पतिव्रता स्त्री अपने पतिके साथ सती होगई ॥ ६ ॥ हे वरारोहे ! इसने स्त्रीसहित सत्यलोकमें जाकर वास किया और वहां देवांगनाओंके साथ मिलकर मनवाञ्छित फल भोगे जब पुण्य क्षीण हुआ तब स्त्रीसहित इसको हे वरानने ! मनुष्ययोनि प्राप्त हुई ॥ ७ ॥ ८ ॥ मनुष्ययोनि पाकर धनधान्यसे युक्त होकर सुन्दर स्त्रीको प्राप्त करता हुआ, यहाँ इसके बहुत पुत्र उत्पन्न हुए परन्तु पापकर्मसे उनकी मृत्यु होगई ॥ ९ ॥ हे गिरिजे ! हे वरे हे श्रेष्ठे ! इसकी स्त्री ज्वरसे युक्त रहती है बीच बीचमें दाह वेदना होजाती है, अब इसके पापकी शान्तिको कहता हूँ सुनो ॥ १० ॥ हे देवि ! प्रथम तो यह जातवेदसे इस मन्त्रका एक लाख जप करावै, पीछे साठ तोले सोने अथवा चांदीके पांच बच्चोंसमेत बिल्लीकी

गामेकां रक्तवर्णां च तां विप्राय प्रदापयेत् । अमायां पिण्डदानं च सोमवारे तथा गुरौ ॥ व्रतं च रविसप्तम्यां कर्तव्यं भार्यया सह ॥ १३ ॥ ततः पुत्रो भवेद्देवि चिरंजीवी तथोत्तमः । व्याधिनाशो भवेद्देवि वन्ध्यात्वं च प्रशाम्यति ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायामनुराधानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

## अथ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

ज्येष्ठानक्षत्रफलम् ।

शिव उवाच ॥ ब्राह्मणो वसति ह्येको महाराष्ट्रपुरे शुभे । स वेदपाठनिरतो वेदपाठं सदाऽकरोत् ॥ १ ॥ तडागं खानयामास तत्र द्रव्यं च लब्धवान् । द्रव्यस्यार्थे तदा देवि विग्रहो भ्रातरं प्रति ॥ २ ॥ भ्रात्रा तस्य महादेवि द्रव्यार्थे भक्षितं विषम् । बहुकाले तदा देवि व्ययं सर्वं धनं गतम् ॥ ३ ॥

---

मूर्ति बनवाकर वस्त्र उढाय हे वरानने ! ब्राह्मणको दान करै ॥ ११ ॥ १२ ॥ फिर एक लाल गौ ब्राह्मणको देवै, सोमवती अमावस्या तथा बृहस्पतिवारी अमावस्याको पिण्डदान करै और रविवारी सप्तमीका व्रत स्त्रीसहित करै॥१३॥ तो हे देवि ! चिरंजीवी तथा उत्तम पुत्र प्राप्त होता है और हे देवि ! समस्त व्याधियें नष्ट होजातीं है एवं वन्ध्यात्वदोष दूर होजाता है॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामनुराधानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

शिवजी बोले—सुन्दर महाराष्ट्रपुरमे एक ब्राह्मण वसता था यह वेदपाठमें तत्पर होकर सदा वेदपाठ करता था ॥ १ ॥ हे देवि ! इसने एक तालाव खुदाया तिसमे वहुतसा धन मिला उस धनके कारण इसका भाईसे विरोध होगया ॥ २ ॥ हे महादेवि ! हे प्रिये ! द्रव्य न मिलनेपर इसका भाई विष खाकर मर गया फिर बहुत दिनोमे इसने सब धन खर्च करडाला ॥ ३ ॥

ततश्च पंचतां यातो ब्राह्मणश्च सुरेश्वरि । यमदूतैर्महाघोरे नरके देवि कर्दमे ॥ ४ ॥ षष्टिवर्षसहस्राणि निक्षिप्तश्च यमाज्ञया । भुक्त्वा नरकजं दुःखं काकयोनिरभूत्पुनः ॥ ५ ॥ पुनर्मानुषयोनिश्च पुत्रकन्याविवर्जितः । पूर्वजन्मनि भो देवि भ्रात्रंशं नैव दत्तवान् ॥ ६ ॥ तेन पापेन भो देवि महारोगसमुद्भवः । अस्य शान्तिं प्रवक्ष्यामि शृणु त्वं गिरिजे वरे ॥ ७ ॥ गृहवित्ताष्टमं भागं पुण्यकार्ये च योजयेत् । वापीकूपतडागादिजीर्णोद्धारं प्रयत्नतः ॥ ८ ॥ प्रतिमां कारयेद्देवि स्वर्णपंचदशस्य तु । भ्रातुश्चित्रं तदा देवि पूजयित्वा यथाविधि ॥९॥ गन्धधूपादिभिर्देवि भूषणैर्विविधैरपि । गायत्रीलक्षजाप्येन दशांशहवनेन च ॥ १० ॥ प्रयागे मकरे स्नानात्सर्वपापक्षयो भवेत् । ब्राह्मणाय ततो दद्याद्गां च दद्यात्पयस्विनीम् ॥ ११ ॥

---

हे सुरेश्वरि ! हे देवि ! फिर इस ब्राह्मणकी मृत्यु होगई, तब यमदूतोंने यमराजकी आज्ञासे महाघोर कर्दम नरकमें साठ हजार वर्षके लिये डाल दिया, वहां इसने नरकपीडा भोगी फिर काकयोनिको प्राप्त हुआ ॥ ४ ॥ ५ ॥ हे देवि ! इसने पूर्वजन्ममें अपने भाईका हिस्सा नही दिया था इस कारण मनुष्ययोनि पाकर यह पुत्र कन्याओंसे हीन हुआ है ॥ ६ ॥ हे देवि ! और उसी पापसे इसको महारोग सताते हैं हे गिरिजे ! हे वरे ! अब इसकी शान्तिको कहता हूँ तुम सुनो ॥ ७ ॥ प्रथम तो यह अपने घरके धनका आठवां भाग पुण्य कार्यमें लगावै, फिर टूटेफूटे पुराने कुएँ, बावडी और तालावोंको यत्नके साथ सुधरा देवे ॥ ८ ॥ हे देवि ! पन्द्रह तोले सुवर्णकी अपने भाईकी मूर्ति चित्रसहित बनवावै फिर विधिपूर्वक उसका पूजन करै ॥ ९ ॥ गंध, पुष्प, धूप, दीपादिसे पूजन कर आभूषण चढावै गायत्रीका एक लाख जप करावै जपका दशांश हवन करै ॥ १० ॥ प्रयागराजमें मकरकी संक्रांतिपर समस्त पापोंके नाशके निमित्त त्रिवेणीजीका स्नान करै पीछे दूध देनेवाली गौका दान करके

भूमिं वृत्तिकरीं दद्यात्पुत्रपौत्रानुयायिनीम् । अश्वदानं ततो दद्याद्ब्राह्मणान् भोजयेत्ततः ॥ १२॥ एवं कृते वरारोहे पुत्रो भवति नान्यथा । व्याधिस्तस्य निवर्तेत काकवन्ध्या लभेत्सुतम् । मृतवत्सा लभेत्पुत्रं चिरञ्जीविनमुत्तमम् ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां ज्येष्ठानक्षत्रप्रथमचरणप्रायश्चित्त-कथनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## अथ त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

शिव उवाच ॥ पट्टने वै पुरे शुभे लोहकारोऽवसत्पुरा । गोवर्धनेति नाम्ना च तत्पत्नी परमेश्वरि ॥ १ ॥ धनधान्यसमायुक्तो धर्मकर्मरतस्तथा । तस्य पुत्रद्वयं जातं लोहकारस्य पार्वति ॥ २ ॥ ज्येष्ठपुत्रस्य भो देवि भार्यया सह तेन वै । निःसारितो गृहाद्देवि तस्मै किञ्चिन्न दीयते ॥ ३ ॥

---

ब्राह्मणको देवे ॥ ११ ॥ और इतनी पृथ्वी दान करके ब्राह्मणको दे जिसमें पुत्रपौत्रादि उस पृथ्वीकी आजीविकासे अपना निर्वाह कर सके फिर घोडा दान करै और ब्राह्मणोंको भोजन करावै ॥ १२ ॥ ऐसा करनेसे अवश्यमेव पुत्र उत्पन्न होता है अन्यथा नहीं होता है, समस्त व्याधियोंसे मुक्त होकर काकवन्ध्या नारीभी पुत्रवती होजाती है और मृतवत्सा नारीभी उत्तम चिरंजीवी पुत्र प्राप्त करती है ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीतायां ज्येष्ठानक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

शिवजी बोले-हे परमेश्वरी ! सुन्दर पट्टननामक पुरमें स्त्रीके साथ गोवर्द्धन लुहार बसता था ॥ १ ॥ हे पार्वति ! यह धनधान्यसे युक्त और अपने धर्म कर्मसे युक्त था इसके दो पुत्र उत्पन्न हुए ॥ २ ॥ हे देवि ! उस लुहारने अपने बडे बेटेको स्त्रीसहित घरसे निकाल दिया और उसको

एको गृहे ततः पुत्रो द्रव्यं तस्य प्रयच्छति । लोहकारेण भो देवि स्वभार्या पुत्रसंयुता ॥ ४ ॥ त्यक्ता चैव महादेवि गोपालस्य तु कन्यका । भार्या कृता पुनस्तेन पत्न्यास्त्यागश्च वै कृतः ॥ ५ ॥ ततो बहुगते काले लोहकारस्य वै शिवे । व्याघ्रेण मरणं प्राप्तो यमदूतैर्यमाज्ञया ॥ ६ ॥ निक्षिप्तो नरके घोरे कृमिविष्ठादिसंकुले । त्रिंशद्वर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ ७ ॥ नरकान्निर्गतो देवि मानुषत्वं ततोऽलभत् । पुनः सर्पस्य योनिं च ततो नकुल एव च ॥ ८ ॥ मानुषत्वं ततो देवि धनधान्यसमाकुलम् । शूरश्च कृतविद्यश्च ज्ञानवान् राजवल्लभः ॥९॥ पुरैव यत्कृतं सर्वं तत्प्राप्नोति न संशयः । पुरैव कार्त्तिके मासि पौर्णमास्यां सदाशिवे ॥ १० ॥ दशवर्णाकृतं दानं विधिवन्मम वल्लभे । तेन दानफलेनेह धनाढ्यत्वं प्रजायते ॥११॥ स्वभार्यां च परित्यज्य परकीयारतः स वै । अतः पुत्रस्य वै मृत्युः पुनः पुत्रो न जायते ॥ १२ ॥

---

कुछ नहीं दिया ॥ ३ ॥ हे देवि ! छोटे बेटेको घर रक्खा और उसीको धन दिया फिर इस लुहारने अपनी स्त्री और छोटे बेटेको भी त्यागकर एक गोपालकी कन्याको अपनी स्त्री बनालिया ॥ ४ ॥ ५ ॥ हे शिवे ! अनंतर चिरकालके पीछे व्याघ्रसे इस लुहारकी मृत्यु होगई तब यमदूतोंने यमराजकी आज्ञासे कीडे और विष्ठासे युक्त महाघोर नरकमें डाल दिया वहां इसने तीस हजार वर्षतक नरककी पीडा भोगी॥ ६ ॥ ७ ॥ हे देवि ! जब नरकसे निकला तब मनुष्य हुआ, फिर सर्पकी योनि मिली सर्पयोनिके पीछे न्यौला हुआ ॥८॥ हे देवि ! पुनः धनधान्यसे युक्त होकर मनुष्ययोनिको प्राप्त हुआ यहां शूर, वीर, कृतविद्या, ज्ञानी और राजाका प्रिय हुआ ॥ ९ ॥ हे शिवे ! पूर्वजन्ममें जो किया जाता है उसका फल इस लोकमे अवश्य प्राप्त होता है, हे वल्लभे ! पूर्वजन्ममें कार्तिककी पूर्णमासीके दिन इसने दशवर्णवाली गौका दान किया था उसीके फलसे यह धनवान् हुआ है ॥ १० ॥ ११ ॥ और अपनी स्त्रीको

कन्यकाजनयित्री च तस्य भार्या भवेत्खलु । भार्यापुत्रौ परित्यज्य परकीयारतो यतः ॥ १३ ॥ तत्पापेन महादेवि रोगग्रस्तकलेवरः । व्याधयश्च समुत्पन्ना दद्रुपामादयस्तथा ॥ १४ ॥ ख्यातवंशे समुत्पन्नो भूमिभागो न लभ्यते । अथ शान्तिं प्रवक्ष्यामि पूर्वपापविशुद्धये ॥ १५ ॥ एकादशीव्रतं नित्यं षडंशं दानमाचरेत् । षडङ्गं पाठयेन्नित्यं रुद्रपूजनपूर्वकम् ॥ १६ ॥ हरिवंशश्रवणं देवि चण्डीपाठो निरन्तरम् । तिलधेनुप्रदानं वै अमाश्राद्धं विशेषतः ॥ १७ ॥ एवं कृते तदा देवि पुत्रस्तस्य भविष्यति । वन्ध्यात्वं प्रशमं याति सर्वरोगक्षयो भवेत् ॥ १८ ॥

इति श्रीकर्मविपाकसंहितायां ज्येष्ठानक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

छोडकर पूर्वजन्ममे परस्त्रीसे जो भोग किया है इस कारण इसके पुत्रकी मृत्यु होगई है और फिर पुत्र उत्पन्न नही होता है ॥ १२ ॥ इसकी स्त्रीके कन्या उत्पन्न होती है कारण इसने पूर्वजन्ममे अपनी स्त्री और पुत्रको छोडकर अन्यस्त्रीसे विषय किया है ॥ १३ ॥ हे देवि ! उसी पापसे यह रोगसे युक्त है दाद, पामादि व्याधियोंसे दुःखी है ॥ १४ ॥ यह विख्यातवंशमें उत्पन्न हुआ है परन्तु पृथ्वीका भाग नहीं मिला है अब इसके पूर्वजन्मके पापोंकी शांतिको कहता हूँ ॥ १५ ॥ यह नित्य एकादशीका व्रत करै और अपने घरके धनमेंसे छठा भागका दान करै शिवजीका पूजन करावै और षडंगका पाठ करावै ॥ १६ ॥ हे देवि ! हरिवंशपुराणकी कथा सुनै, निरन्तर चंडीका पाठ ( दुर्गापाठ ) करावै तिलधेनुका दान करै विशेषकर अमावास्याके दिन श्राद्ध करै ॥ १७ ॥ हे देवि ! ऐसा करनेसे पुत्र उत्पन्न होता है स्त्रीका वंध्यात्वदोष जाता रहता है और समस्त रोग नष्ट होजाते हैं ॥ १८ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां ज्येष्ठानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

## अथ चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

श्रीशिव उवाच ॥ बीजापुर इति ख्याते पुरे देवि मनोहरे । वर्णा वसन्ति चत्वारो यतयश्च तपस्विनः॥ १॥ तन्मध्ये शूद्र एको हि ताम्बूलं च करोति सः। सुरापी च स वै नित्यं शिवे ताम्बूलविक्रयी ॥ २ ॥ तस्य पुत्रद्वयं जातं धनं च बहु संचितम् । ततस्तु दैवयोगेन महाधनमदेन च ॥ ३ ॥ ज्येष्ठपुत्रस्य हननं कृतं तेन वरानने । स्वभार्यार्थे तदानीं तु पत्नी तस्य तु तेन हि ॥ ४ ॥ पुत्रेण चाभवद्वैरं पत्न्या सह विशेषतः । प्रत्यहं भुज्यते तेन पुत्रपत्नी तथाऽधमः ॥ ५ ॥ एवं बहुदिने याते तस्य मृत्युरभूच्छिवे । ततो वै नरके घोरे यमदूतैर्यमाज्ञया ॥ ६ ॥ निक्षिप्तो वै ततो देवि षष्टिवर्षसहस्रकम् । कृमिभिर्घोरवक्त्रैश्च भुक्त्वा नरकयातनाम् ॥ ७ ॥ नरकान्निर्गतो देवि श्वानयोनिं ततोऽलभत् । ततो वृषभयोनिं च मानुषत्वं ततो गतः ॥ ८ ॥

---

श्रीशिवजी बोले-हे देवि ! मनोहर बीजापुर नाम विख्यातपुरमें चारों वर्णवाले मनुष्य यती और तपस्वी बसते थे ॥ १ ॥ तहां एक शूद्र मदिरा पीकर ताम्बूल बेचा करता था ॥ २ ॥ उसके दो पुत्र उत्पन्न हुए और इसने बहुतसा धन संचय किया अनंतर दैवयोगसे धनके मदसे ॥ ३ ॥ हे वरानने ! इसने अपने बडे पुत्रको मारडाला और उसकी स्त्रीको अपनी भार्या बनानेके लिये ग्रहण किया ॥ ४ ॥ तब छोटे पुत्रसे और विशेष करके स्त्रीके साथ इसका वैर होगया, परन्तु यह प्रातिदिन अपनी पुत्रवधूके साथ रमण करने लगा ॥ ५ ॥ हे शिवे ! इस प्रकारसे बहुतसमय बीतजानेपर इसकी मृत्यु होगई तब यमराजकी आज्ञासे यमदूतोंने घोरनरकमें डाल दिया हे देवि ! वहां साठ हजार वर्षतक घोरमुखवाले कीडोंसे कष्ट पाते हुए नरककी पीडा भोगी ॥ ६ ॥ ७ ॥ हे देवि ! जब नरकसे निकला तब

पूर्वजन्मनि भो देवि दशवर्णां ददौ बहु। तत्फलेनेह भो देवि धन-धान्ययुतस्तदा ॥ ९ ॥ पुत्रस्य पत्नीं भुक्त्वा तु पुत्रस्यैव वधः कृतः। तत्पापफलतो देवि ह्यपुत्रश्च ज्वरी तथा ॥ १० ॥ व्याधिश्च बहुधा तस्य चाङ्गे च महती व्यथा। तदा चिन्तासमायुक्तो रात्रौ निद्रां न लब्धवान् ॥ ११ ॥ स्ववित्तस्य त्रयं भागं प्रगृह्य हरवल्लभे। कूपं च खानयेद्देवि तडागं जीर्णमुद्धरेत् ॥ १२ ॥ पौर्णमासीव्रतं देवि सकलत्रस्तदाचरेत्। शिवस्य पूजनं लक्षं ब्राह्मणेभ्यश्च कारयेत् ॥ १३ ॥ कृष्णां च गां च वृषभं ब्राह्मणाय प्रदापयेत्। गायत्रीमूलमंत्रेण तथा लक्षप्रमाणतः ॥ १४ ॥ जपं वै कारयेद्देवि हवनं तद्दशांशतः। मार्जनं तर्पणं देवि दशांशं चैव कारयेत् ॥ १५॥ पुत्रस्य प्रतिमां तद्वत्स्वर्ण-वस्त्रसमन्वितान्। पलपञ्चदशस्यैव निर्मितां रत्नभूषिताम्॥ १६॥

---

श्वानयोनिको प्राप्त हुआ फिर वृषयोनिको प्राप्त होकर मनुष्ययोनिको प्राप्त हुआ ॥ ८ ॥ हे देवि ! पूर्वजन्ममें इसने दशवर्णवाली गौओंका दान किया था हे देवि ! तिसके फलसे यह धनधान्यसे युक्त हुआ ॥ ९ ॥ हे देवि ! और इसने पूर्वजन्ममें अपने पुत्रको मारकर उसकी स्त्री भोगी तिस पापसे पुत्रहीन और ज्वरसे युक्त है ॥ १० ॥ उसी पापसे इसके शरीरमें अनेक व्याधियें और बडी पीडा रहती हैं उसी चिन्तासे इसको रात्रिमें नींद नहीं आती है ॥ ११ ॥ हे हरवल्लभे ! यह उस पापके शान्तिके निमित्त अपने द्रव्यका तीसरा भाग लेकर कुआँ खुदावै और टूटे हुए तालावको सुधरावै १२॥ हे देवि ! फिर स्त्रीसहित पूर्णिमाका व्रत करे और ब्राह्मणोंसे एक लाख पार्थिव पूजन करावे ॥ १३ ॥ अनन्तर काली गौ और एक बैल दान करके ब्राह्मणको देवै, गायत्रीके मूलमंत्रका एक लाख जप करावै ॥ १४ ॥ हे देवि ! जपका दशांश हवन करावै. हवनका दशांश मार्जन और मार्जनका दशांश तर्पण करावै ॥ १५ ॥ साठ तोले सोनेकी पुत्रकी

पूजां कृत्वा विधानेन ब्राह्मणाय प्रदापयेत् । एवं कृते न संदेहः शीघ्रं पुत्रमवाप्नुयात् ॥ १७॥ व्याधिश्च प्रशमं याति काकवन्ध्या लभेत्सुतम् । मृतवत्सा लभेत् पुत्रं चिरंजीविनमुत्तमम् ॥ १८॥

इति श्रीकर्मविपाकसंहितायां ज्येष्ठानक्षत्रतृतीयचरणप्रायश्चित्त-कथनं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## अथ पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

श्रीशिव उवाच ॥ चतुर्भुजपुरं नाम वेणीपश्चिमतः शिवे ।
पट्टकारोऽवसद्देवि लक्ष्मणेति च संज्ञया ॥ १ ॥
तस्य पत्नी विशालाक्षी परपुंसि रता सदा ।
पुत्राश्च बहवो जाता धनं च बहु संचितम् ॥ २ ॥
क्रयविक्रयधर्मेण व्ययं कृत्वा दिनेदिने ।
तस्य गेहेऽकरोद्वासं चटका नाम पक्षिणी ॥ ३ ॥

---

मूर्ति बनवाकर वस्त्र और सुवर्ण रत्नके आभूषणोंसे भूषित कर ॥ १६ ॥ विधिपूर्वक पूजन करके ब्राह्मणको दे ऐसा करनेसे निस्सन्देह शीघ्र पुत्र प्राप्त होता है ॥ १७ ॥ सम्पूर्ण व्याधियें नष्ट होजाती हैं काकवंध्या नारी सुतको प्राप्त करती है और मृतवत्सा स्त्रीभी उत्तम चिरंजीवी पुत्रको प्राप्त करती है १८

इति श्रीकर्मविपाकसंहिताभाषाटीकायां ज्येष्ठानक्षत्रतृतीयचरण-प्रायश्चित्तकथनं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

श्रीशिवजी बोले-हे देवि ! हे शिवे ! वेणीनदीसे पश्चिम दिशामें चतुर्भुज नामक पुरमें लक्ष्मण नामक एक पट्टकार रहता था ॥ १ ॥ इसकी स्त्री बडे नेत्रोंवाली और परपुरुषगामिनी थी, इसके बहुत पुत्र उत्पन्न हुए और इसने बहुत धन संचय किया ॥ २ ॥ यह क्रयविक्रयको करके अपना निर्वाह करता

एकस्मिन्समये देवि चाण्डान् दत्त्वापि पक्षिणी । बहून्वै पोषितां-
श्चाण्डान् सपक्षान्कृतवत्यपि ॥ ४ ॥ फलं गृह्य सदा पक्षी मध्याह्ने
बालकान्प्रति । भोजनं प्रददौ नित्यं स्वकुलाये तदा शिवे ॥५॥
ततस्तु दैवयोगेन पट्टकारस्तु तद्गृहे । भोजनार्थं गतो देवि पत्नी
चान्नं तदा ददौ ॥ ६ ॥ भुक्तं च विविधं चान्नं तत्क्षणे पक्षि-
बालकाः । विष्ठां चक्रुस्तथा दृष्ट्वा पट्टकारो रुषा खलु ॥ ७ ॥
कुलं तस्य कृतं नष्टं बालानां हननं तथा । एवं बहुगते काले
पट्टकारस्य सुव्रते ॥ ८ ॥ गङ्गायां मरणं जातं भार्यया सहि-
तस्य वै । स्वर्गवासोऽभवद्देवि पट्टकारस्य सुव्रते ॥ ९ ॥ सप्तति-
र्वै सहस्राणि स्वर्गे भुक्त्वा फलं बहु । पुनः पुण्यक्षये जाते
स्वर्गभ्रष्टो यदाऽभवत् ॥ १० ॥ मनुष्यश्चाभवद्देवि गंगागण्डकि-
मध्यतः । धनधान्यसमायुक्तो विवाहमकरोद्यदा ॥ ११ ॥

---

था, इसके घरमें एक चिडियाका घोंसला था ॥ ३ ॥ हे देवि ! एक समय चिडियाने उस घोंसलेमें अंडे दिये और उनमेसे बच्चोंको पंखवाला बनानेके लिये पालने लगी ॥ ४ ॥ हे शिवे ! यह पक्षी मध्याह्नकालमें फल और कणका चुगा लेकर बच्चोको खिलाया करता था ॥ ५ ॥ हे देवि ! दैवयोगसे वह पट्टकार अपने घर भोजन करने आया तब उसकी स्त्रीने भोजन परोसा ॥६॥ जब यह पट्टकार भोजन करने लगा तब चिडियाके बच्चोंने वींठ कर दी यह देखकर पट्टकार क्रोधित हुआ ॥७॥ और चिडियाके बच्चोको मारकर घोंसला नष्ट करादिया हे सुव्रते ! ऐसे चिरकालके उपरान्त इस पट्टकारकी स्त्रीसहित गंगाजीमें मृत्यु होगई हे देवि ! हे सुव्रते ! तब इस पट्टकारका स्वर्गमें वास हुआ ॥ ८ ॥ ९ ॥ वहां सत्तर हजार वर्षतक स्वर्गीय अनेक फल भोगे जब पुण्यक्षय हुआ तब स्वर्गसे भ्रष्ट हुआ ॥ १० ॥ फिर गंगा और गंडकी नदीके बीचमें यह मनुष्ययोनिको प्राप्त होकर धनधान्यसे युक्त हुआ और जब इसने

पूर्वजन्मस्थिता भार्या सा तस्य गृहमेधिनी। प्रेष्ययुक्ताऽभवत्सा तु गर्भस्य पतनं मुहुः ॥ १२ ॥ कन्यका नापि जायन्ते पुत्रस्यैव तु का कथा। ज्वरयुक्ता सदा नारी स्वशरीरे भवेत्खलु ॥ १३ ॥ सुखं न लभते क्वापि दुःखं याति दिनेदिने। अस्य शान्तिं प्रवक्ष्यामि शृणु सर्वं वरानने ॥ १४ ॥ चंद्रस्याथ च सूर्यस्य गायत्रीजपमाचरेत्। लक्षमेकं वरारोहे पूर्वपापविशुद्धये ॥ १५ ॥ गृहवित्ताष्टमं भागं पुण्यकार्ये च कारयेत्। कपिलां गां सवत्सां च ब्राह्मणाय प्रदापयेत् ॥ १६ ॥ दशवर्णां ततो दद्याद् ब्राह्मणान् भोजयेत्ततः ॥ १७ ॥ चटकस्याकृतिं कृत्वा सार्भकस्य वरानने। रौप्यस्य स्वर्णताम्रस्य पञ्चविंशपलस्य तु ॥ १८ ॥ ब्राह्मणाय ततो दद्याद् भूमिदानं विशेषतः। हरिवंशश्रवणं कुर्याद्भार्यया सहितस्तु वै ॥ १९ ॥

---

विवाह किया ॥ ११ ॥ तब पूर्वकी स्त्रीके साथ ही इसका विवाह हुआ पूर्वजन्मके पापसे इसके वारंवार गर्भ गिरजाते है॥ १२ ॥ इसके कन्याभी नहीं उत्पन्न होती पुत्रकी तो बात ही क्या है? और यह स्त्रीसमेत सदा ज्वरसे युक्त रहते हैं ॥१३॥ इसको सुख कभी नहीं प्राप्त हुआ दिन दिन दुःखही भोगतेहैं हे वरानने! अब इसकी शान्तिको कहता हूँ तुम सुनो ॥ १४ ॥ हे वरारोहे! पूर्वपापकी शुद्धिके लिये प्रथम चन्द्र और सूर्यकी गायत्रीका एक लाख जप करावै ॥ १५ ॥ घरके धनका आठवां भाग पुण्यकर्ममें लगावै फिर बछडे सहित कपिला गौको ब्राह्मणको दे ॥ १६ ॥ फिर दशवर्णवाली गौका दान करके ब्राह्मणोंको भोजन करावै ॥ १७ ॥ हे वरानने! सौ तोले चांदी सोने और तांबेकी चिडियाकी बच्चोसहित मूर्त्ति बनवाकर ॥ १८ ॥ ब्राह्मणको दे और विशेषकरके पृथ्वीदान करै और स्त्रीसमेत हरिवंशपुराणकी कथा सुनै॥१९॥

जातवेदसमंत्रेण दशायुतजपं तथा । गोपालमंत्रजाप्येन पुत्रलाभो भवेद्ध्रुवम् ॥२०॥ हवनं तर्पणं कुर्यान्मार्जनं तु ततः परम् । रोगनाशो भवेद्देवि काकवन्ध्या लभेत्सुतम् ॥ २१ ॥

इति श्रीकर्मविपाकसंहितायां ज्येष्ठानक्षत्रचतुर्थचरणप्रायश्चित्त-
कथनं नाम पंचसप्ततितमोऽध्यायः ॥ ७५ ॥

---

## अथ षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

### मूलनक्षत्रफलम् ।

शिव उवाच ॥ अयोध्यानगरे देवि कायस्थो वसति प्रिये ।
रामदास इति ख्यातस्तस्य पत्नी तु देविका ॥ १ ॥
विष्णुभक्तिरतो नित्यं ब्राह्मणस्य च सेवकः ।
भार्या पतिव्रता तस्य पतिसेवासु तत्परा ॥ २ ॥
भाग्यवान्सर्ववस्तूनां विक्रेता गजवाजिनाम् ।
तस्य मित्रं भवेद्विप्रो ब्राह्मणो वेदपारगः ॥ ३ ॥

---

फिर जातवेदसे और गोपालमंत्रका एक लाख जप करावै जपका दशांश हवन, हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै तो निःसन्देह पुनः पुत्रलाभ होता है और हे देवि ! सम्पूर्ण रोग नष्ट हो जाते हैं काकवन्ध्या नारी सुतको प्राप्त करती है ॥ २० ॥ २१ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां ज्येष्ठानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम पंचसप्ततितमोऽध्यायः ॥ ७५ ॥

---

श्रीशिवजी बोले-हे देवि ! हे प्रिये ! अयोध्यानगरीमें रामदास नामक कायस्थ रहता था देविका उसकी स्त्रीका नाम था ॥ १ ॥ रामदास प्रतिदिन विष्णुकी भक्ति और ब्राह्मणोकी सेवा करता था, देविका भी अपने पति रामदासकी सेवामे तत्पर रहती थी ॥ २ ॥ एक समय रामदासका मित्र एक भाग्यवान् वेदपाठी ब्राह्मण हाथी घोडे आदि सम्पूर्ण वस्तुओंका

आगतो वै गृहे तस्य प्रेम्णा मित्रस्य भामिनि । चातुर्मास्यं स्थितस्तत्र स्वर्णं शतपलं तदा ॥ ४ ॥ कायस्थस्य गृहे तेन स्थापितं ब्राह्मणेन वै । वाराणस्यां गतो देवि स्नानार्थं स द्विजोत्तमः ॥ ५ ॥ शरीरं त्यक्तवांस्तत्र ब्रह्मचारी द्विजस्तदा । ततो बहुतिथे काले कायस्थस्य दरिद्रता ॥ ६ ॥ तद्धनं ब्राह्मणस्यैव भुक्तं तेन वरानने । पुनर्वै स मृतो देवि कायस्थो भार्यया सह ॥ ७ ॥ अयोध्यायां ततो देवि तयोः स्वर्गो ह्यजायत । नवतिवर्षसहस्राणि ब्रह्मलोके वरानने ॥ ८ ॥ भुक्तं सौख्यमनेकं तु देवानामपि दुर्लभम् । ततः पुण्यक्षये जाते मर्त्यलोके सुरेश्वरि ॥ ९ ॥ तत्पापेनाभवद्देवि कन्यापुत्रप्ररोधनम् । अस्य पापस्य वै शान्तिं शृणु मे परमेश्वरि ॥ १० ॥ प्रायश्चित्तं सुरश्रेष्ठे पूर्वजन्मसमुद्भवम् । गृहवित्तषडंशेन ततो दानं प्रकल्पयेत् ॥ ११ ॥ गायत्रीत्र्यंबकाभ्यां च जातवेदेन चानघे । जपं वै कारयेन्नित्यं प्रतिमन्त्रं दशायुतम् ॥ १२ ॥

---

बेचनेवाला ॥ ३ ॥ हे भामिनि ! मित्रके प्रेमसे इसके घर आया और चातुर्मास इसके यहां रहा. तब उस ब्राह्मणने चार सौ तोले सुवर्ण रामदासके घर रक्खा और हे देवि ! आप स्नान करनेके निमित्त काशीजीको चला गया ॥ ४ ॥ ५ ॥ काशीजीमे जाकर उस ब्राह्मणका शरीर छूट गया इसके पीछे चिरकालके उपरान्त कायस्थके यहां दरिद्रता आगई ॥ ६ ॥ हे वरानने ! हे देवि ! तब स्त्रीसहित उस धनको कायस्थने भोगा फिर दोनों स्त्री पुरुषोंकी मृत्यु होगई ॥ ७ ॥ हे देवि ! हे वरानने ! वह दोनों स्त्रीपुरुष अयोध्याजीमें मरनेके कारण स्वर्गको प्राप्त हुये और नब्बे हजार वर्षतक ब्रह्मलोकमें ॥ ८ ॥ देवदुर्लभ अनेक प्रकारके सुख भोगे हे सुरेश्वरि ! जब पुण्य क्षीण हुआ तब मृत्युलोकमें जन्म हुआ ॥ ९ ॥ हे देवि ! हे परमेश्वरि ! उस पापसे इसके पुत्र और कन्या उत्पन्न नहीं होती हैं अब इसके पापकी शान्तिको कहता हूँ तुम सुनो ॥ १० ॥ हे सुरश्रेष्ठे ! अब इसके पूर्वजन्ममें किये पापोंका प्रायश्चित्त कहता हूँ–प्रथम तो यह अपने धनका छठा भाग दान करै ॥ ११ ॥ हे अनघे !

ततो होमं दशांशेन तर्पणं मार्जनं तथा । पलदशसुवर्णेन ब्राह्म-
णस्य तदाकृतिम् ॥ १३ ॥ पूजयित्वा यथान्यायं ब्राह्मणाय
ततो ददेत् । ततो गां कपिलां दद्यात्स्वर्णवस्त्रविभूषिताम् । वृष-
मेकं वरारोहे दशवर्णां ददेत्पुनः ॥ १४ ॥ एवं कृते न सन्देहो
वंशोऽस्य प्रभवेत्खलु । रोगः शरीरजन्योऽथ तस्य नाशः प्रजा-
यते ॥ १५ ॥ काकवन्ध्या लभेत्पुत्रं मृतवत्सा ततः प्रिये ।
चिरजीविसुतं चैव नात्र कार्या विचारणा ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां मूलनक्षत्रप्रथमचरणप्रायश्चित्त-
कथनं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

## अथ सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

शिव उवाच ॥ पश्चिमायामयोध्याया योजनानां त्रयोपरि ।
राघवस्य पुरं यत्र वसन्ति बहवो जनाः ॥ १ ॥

---

पीछे 'गायत्री' 'त्र्यम्बक' 'जातवेदसे' इन तीनो मंत्रोंका एक एक लाख जप करावै ॥ १२ ॥ जपका दशांश हवन हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै और ४० चालीस तोले सोनेकी ब्राह्मणकी मूर्ति बनवावै ॥ १३ ॥ उसका विधानसे पूजन करके दे दे अनन्तर एक कपिला गौको वस्त्र और सुवर्णसे भूषित करके दे फिर दशवर्णवाले बैलका दान करै ॥ १४ ॥ ऐसा करनेसे निःसंदेह वंशकी वृद्धि होती है और सम्पूर्ण शरीरजनित रोग नष्ट होजाते हैं ॥ १५ ॥ हे प्रिये ! काकवंध्या स्त्री पुत्रको प्राप्त करती है और मृतवत्सा स्त्री चिरजीवी पुत्रको प्राप्त करती है इसमें कुछ विचार करनेकी आवश्यकता नहीं है ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मूलनक्षत्रप्रथमचरणप्राय-
श्चित्तकथनं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

शिवजी बोले-हे देवि ! अयोध्यासे पश्चिम तीन योजनपर राघव

तन्मध्ये ब्राह्मणो ह्येको योगशर्मा ततः प्रिये । तस्य पत्नी समाख्याता गुणजा परमा शुभा ॥ २ ॥ तत्र वासोऽभवद्देवि ज्ञानवानतिपंडितः । पुरोहितो महादेवि धनाढ्यः कृपणस्तथा ॥ ३ ॥ प्रतिग्रहेण भो देवि व्ययं कुर्याद्दिनेदिने । तस्य भ्राता कनिष्ठश्च व्यापारकरणे रतः ॥ ४ ॥ उभौ तौ ब्राह्मणौ देवि प्रीतिमन्तौ परस्परम् । ततो बहुगते काले वैरं जातं तदा शिवे ॥ ५ ॥ स्वधनस्य विभागार्थं युद्धं जातं सुदारुणम् । तदुद्देशेन भो देवि मृतो भ्राता कनिष्ठकः ॥ ६ ॥ गृहीत्वा तद्धनं स्वर्णं सर्वं पुत्राय दत्तवान् । दानं नैव कृतं तेन ततो वै मरणं खलु ॥ ७ ॥ यमदूतैर्महाघोरे निक्षिप्तो रक्तकर्दमे । बहून्यब्दसहस्राणि भुक्त्वा नरकयातनाम् ॥ ८ ॥ नरकान्निर्गतो देवि गर्दभत्वमवाप्तवान् । वृकयोनिस्ततो भूत्वा मानुषत्वं ततोऽलभत् ॥ ९ ॥

---

नामक पुरमें बहुतसे मनुष्य रहते थे ॥ १ ॥ हे प्रिये ! उनके बीचमें योगशर्मानामक ब्राह्मण बसता था उसकी स्त्री परमसुन्दरी गुणजा नामवाली थी ॥ २ ॥ हे देवि ! यह ज्ञानवान् परमविद्वान् पुरोहित था । हे महादेवि ! यह धनवान् होकर भी कृपण था ॥ ३ ॥ हे देवि ! यह प्रतिदिन दान लेकर खर्च करता था इसका छोटा भाई व्यापार करता था ॥ ४ ॥ हे देवि ! हे शिवे ! इन दोनों भाइयोंमें परमप्रीति थी परन्तु चिरकालके उपरान्त इनमें वैर उत्पन्न हुआ ॥ ५ ॥ हे देवि ! अपने धन बांटनेके लिये इन दोनों भाइयोंमें घोर युद्ध हुआ और उसी उद्देश्यसे छोटे भाईकी मृत्यु होगई, इस ब्राह्मणने सम्पूर्ण धन और सुवर्ण लेकर अपने पुत्रको देदिया, उसमेंसे कुछ भी दान नहीं किया अनन्तर इसकी मृत्यु होगई ॥ ६ ॥ ७ ॥ तब महाघोर रक्तकर्दम नामक नरकमें यमदूतोंने इसे डाल दिया वहां हजारों वर्षतक इसने नरककी पीडा भोगी ॥ ८ ॥ हे देवि ! जब नरकसे निकला तब गधेकी योनिको प्राप्त हुआ फिर वृकयोनिको प्राप्त होकर मनुष्ययोनिको प्राप्त हुआ ॥ ९ ॥

वैद्यविद्यारतो देवि कन्यकापुत्रवर्जितः । रोगयुक्तो महादेवि सदा भिक्षारतो नरः ॥ १० ॥ पूर्वपापविशुद्ध्यर्थं प्रायश्चित्तं शृणुष्व मे । हरिवंशश्रवणं देवि शिवपूजनमेव च ॥ ११ ॥ अमायां पिण्डदानं च गोदानं च विशेषतः । षडक्षरं तथा मन्त्रं शुद्धं मम सुरेश्वरि ॥ १२ ॥ जप्यं वै जापयेत्प्रेम्णा दशलक्षं वरानने । होमं वै कारयेच्चैव कुण्डे चित्रे वरानने ॥ १३ ॥ चतुरस्रे वरारोहे तिलधान्यादि-तण्डुलैः ॥ १४ ॥ प्रतिमां कारयेद्देवं भ्रातुः स्वर्णस्य वै शिवे । पलं दशप्रमाणेन मंत्रेणानेन पूजयेत् ॥ १५ ॥ ॐ नमः सवित्रे देवाय वेदवेदाङ्गपारग । पूर्वजन्मकृतं सर्वं मम पापं व्यपोहय ॥ १६ ॥ अज्ञानाद्वा प्रमादाद्वा भ्रातुरंशापहारतः । तदर्थं गौर्मया दत्ता साध्वी भूताय ते नमः ॥ १७ ॥ प्रतिमां पूजयित्वा तु ब्राह्मणाय ददेत्ततः । एवं कृते विधाने तु शीघ्रं पुत्रमवाप्नुयात् १८

---

हे देवि ! हे महादेवि ! यह वैद्यकशास्त्रमें लीन पुत्र-कन्याओंसे रहित, रोगी और सदा भिक्षा मांगनेवाला मनुष्य हुआ ॥ १० ॥ हे देवि ! अब इसके पूर्वजन्मके पापोंकी शुद्धिके अर्थ प्रायश्चित्त मुझसे सुनो-यह हरिवंश पुराणकी कथा सुने और शिवजीका पूजन करै ॥ ११ ॥ अमावास्याके दिन पिंडदान करै विशेष करके गोदान करै हे सुरेश्वरि ! मेरे षडक्षर शुद्ध मंत्रका ॥ १२ ॥ हे वरानने ! दश लाख जप करावै और हे वरानने ! चौकोन चित्र कुंडमें तिल धान्यादि चावलोंसे हवन करावै ॥ १३ ॥ १४ ॥ हे शिवे ! चालीस तोले सोनेकी अपने भाईकी मूर्ति बनवाकर इन मंत्रोंसे पूजन करै ॥ १५ ॥ ( मंत्रार्थ ) हे वेदवेदाङ्गके पारको जाननेवाले सविता देव ! आपको नमस्कार है मेरे पूर्वजन्मके किये हुए पापोंको नष्ट करो ॥ १६ ॥ मुझे अज्ञानसे वा प्रमादसे भाईका भाग न देनेके कारण जो पाप लगा है उसके दूर होनेके लिये मै गोदान करताहूँ और साध्वी गौको प्रणाम करता हूं ॥ १७ ॥ प्रतिमाका पूजन करके ब्राह्मणको देदे ऐसा करनेसे शीघ्र ही पुत्र प्राप्त होता है ॥ १८ ॥

काकवन्ध्या वरं पुत्रं जनयेच्चैव भामिनी ।
व्याधयो नाशमायान्ति तूलराशिर्यथाऽनले ॥ १९ ॥

इति श्रीकर्मविपाकसंहितायां मूलनक्षत्रद्वितीयचरणप्रायश्चित्त-
कथनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

## अथाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

शिव उवाच ॥ सरय्वाश्चोत्तरे कूले मंगलं नाम वै पुरम् । तत्र क्षत्री वसत्येको मद्यं मांसं भुनक्ति सः ॥ १ ॥ भावसेनश्च नाम्ना स तस्य पत्नी मनोहरा । वेश्याद्यूतरतश्चासौ लुब्धश्चोरेषु संमतः ॥ २ ॥ प्रत्यहं चौरकार्येण व्ययं कुर्याद्दिनेदिने । ततो बहुगते काले तस्य मृत्युरभूत्किल ॥ ३ ॥ सर्पेणापि महादेवि यमदूतैर्यमाज्ञया । रौरवे नरके क्षिप्तः षष्टिवर्षसहस्रकम् ॥ ४ ॥

---

हे भामिनि ! और काकवंध्या नारीभी उत्तम पुत्रको प्राप्त करती है और इसकी सम्पूर्ण व्याधियें जैसे अग्निसे रुईका ढेर नष्ट होजाता है वैसेही इस विधानके करनेसे नष्ट होजाती है ॥ १९ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मूलनक्षत्रद्वितियचरण-
प्रायश्चित्तकथनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

श्रीशिवजी बोले--सरयूनदीके उत्तर किनारे मंगलनामपुरमे एक क्षत्रिय बसता था यह मद्यमांसको खाता था ॥ १ ॥ भावसेन उसका नाम था मनोहरा उसकी स्त्रीका नाम था यह क्षत्रिय वेश्या और जुएमें तत्पर लोभी और चोरोंमें माननीय था ॥ २ ॥ यह प्रतिदिन चोरी करके अपना खर्च करता था उस भांति चिरकालके उपरान्त सर्पके द्वारा इसकी मृत्यु होगई हे महादेवि ! तब यमराजकी आज्ञासे यमदूतोंने रौरवनामक नरकमें साठ हजार वर्षोंके

नरकान्निर्गतो देवि व्याघ्रयोनिं ततोऽलभत् । मानुषत्वं ततो लेभे कुले महति पूजिते ॥ ५ ॥ पूर्वजन्मनि भो देवि दीपदानं कृतं यतः । तत्फलेन महादेवि धनाढ्यत्वं प्रजायते ॥ ६ ॥ मद्यपानफलाद्देवि जीर्णज्वरसमुद्भवः । वेश्यासुरतसंयुक्तो यतोऽसौ पूर्वजन्मनि ॥ ७ ॥ तेन पापेन भो देवि पुत्राणां मरणं खलु । मनस्युद्विग्नता नित्यं जातो द्यूतरतः पुरा ॥ ८ ॥ अस्य शांतिं प्रवक्ष्यामि सर्वपापविशुद्धये । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् । वापीकूपतडागांश्च पथिमध्ये च कारयेत् ॥ ९ ॥ गायत्रीमूलमंत्रेण लक्षं जाप्यं वरानने । दशांशहवनं तद्वत्तर्पणं मार्जनं तथा ॥ १० ॥ दशवर्णां ततो दद्याद् वृषभेण समन्विताम् । एवं पापविशुद्धिः स्यान्नात्र कार्या विचारणा ॥ ११ ॥ पुत्रश्च जायते देवि वन्ध्यात्वं च प्रणश्यति । मृतवत्सा लभेत्पुत्रं चिरंजीविनमुत्तमम् ॥ १२ ॥

---

लिये डाल दिया ॥ ३ ॥ ४ ॥ हे देवि ! जब नरकसे निकला तब व्याघ्रकी योनिको प्राप्त हुआ अनन्तर उत्तमपूजनीय कुलमें मनुष्ययोनिको प्राप्त हुआ ॥५॥ हे देवि ! हे महादेवि ! इसने पूर्वजन्ममें दीपदान किया था तिसके बलसे यह धनवान् हुआ है ॥ ६ ॥ हे देवि ! पूर्वजन्ममें मदिरा पीनेसे इसको जीर्णज्वर रहता है, पूर्वजन्ममें इसने जो वेश्याप्रसंग किया था तिस पापसे इसके पुत्रोंकी मृत्यु होती है पूर्वजन्ममें जुआमे लीन रहनेके कारण इसके मनमें उद्विग्नता रहती है ॥ ७ ॥ ८ ॥ अब इसके पूर्वजन्मकृत पापोंकी शुद्धिके लिये शांतिको कहता हूँ, प्रथम तो यह अपने धनका छठा भाग पुण्यकार्यमें लगावे और मार्गमें बावडी कूआँ बनवावे ॥ ९ ॥ हे वरानने ! गायत्रीके मूलमंत्रका एक लाख जप करावे जपका दशांश हवन उसका दशांश तर्पण और मार्जन करावै ॥ १० ॥ एक बैलके साथ दशवर्णवाली गौका दान करे तो सम्पूर्ण पापोंसे छूट जाता है इसमें कुछ विचार नहीं करे ॥ ११ ॥ हे देवि ! ऐसा करनेसे नारीका वंध्यात्वदोष दूर हो जाता है और पुत्र प्राप्त

रोगा विनाशमायांति व्याधयश्च तथा शिवे ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां मूलनक्षत्रतृतीयचरणप्रायश्चित्त-
कथनं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

## अथैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

मध्यदेशे विशालाख्ये हैडम्बं नाम वै पुरम् । भीमो लवण-
कारो हि वसत्येको विचक्षणः ॥ १ ॥ प्रत्यहं लवणं कृत्वा
विक्रयं कुरुते सदा । तस्य पुण्यवती भार्या पुत्रत्रयमजीजनत् ॥ २ ॥
धनधान्यं वृषच्छागगोमहिष्यादिकं तथा । बहूनि सञ्चितानि
स्युर्लवणकारस्य वै गृहे ॥ ३ ॥ तस्य ज्येष्ठः सुतो देवि वेश्या-
सुरततत्परः । एकस्मिन्समये देवि लवणकूपे निशामुखे ॥ ४ ॥
भार्यया सह देवेशि वृषभौ पतितौ तदा । श्रुत्वा तेन तदा देवि
निशायां न गतोऽपि सः ॥ ५ ॥

---

होता है मृतवत्सा नारीको भी उत्तम चिरंजीवी पुत्र होता है ॥ १२ ॥ हे शिवे ! और सम्पूर्ण रोग तथा व्याधियें नष्ट होजाती हैं ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मूलनक्षत्रतृतीयचरणप्राय-
श्चित्तकथनं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

श्रीशिवजी बोले-हे देवि ! विशालनामक मध्यदेशमें एक हैडम्बपुर है वहां एक लवणका बेचनेवाला रहता था ॥ १ ॥ यह प्रतिदिन लवणको बनाता और सदा बेचा करता था, इसकी पुण्यात्मा स्त्रीके तीन पुत्र उत्पन्न हुए ॥ २ ॥ इस लवणकारके घरमें धन, धान्य, बैल, बकरी, गौ और भैंस आदि बहुत संपत्ति थी ॥ ३ ॥ हे देवि ! इसका बडा पुत्र वेश्यागामी था, एक दिन सायंकालके समय लवणकारकी स्त्री और दोनों बैल लवण बनानेके कुएमें गिर गये तब हे देवि ! यह लवणकार सुनकर भी रात्रिमें वहां नहीं गया ॥ ४ ॥ ५ ॥

त्रयाणां वै भवेन्मृत्युः स्वकाले ज्ञातिना सह । भार्या निःसारिता तेन वृषभौ मृत्युसंयुतौ ॥६॥ ततः सर्वं वयो यातं वृद्धे सति वरानने । मरणं तस्य वै जातं लवणकारस्य पार्वति ॥७॥ यमदूतो महाघोरे नरके घोरसंज्ञके । पातयामास देवेशि द्वाविंशतिसहस्रकम् ॥ ८ ॥ वर्षं सुभुज्यते देवि कृमिसूचीमुखैर्युतम् । नरकान्निःसृतो देवि व्याघ्रयोनावजायत ॥ ९ ॥ पुनश्छागस्य वै योनिर्बिडालस्य ततोऽभवत् । मानुषत्वं ततो लेभे देशे पुण्यतमे शुभे ॥ १० ॥ स्वकर्मवशगो नित्यं धनधान्यसमन्वितः । गुणज्ञः सर्वविद्यानां कन्यापुत्रो ह्यजायत ॥ ११ ॥ लवणकारस्य मरणं गङ्गायां पूर्वजन्मतः । तत्फलेन महादेवि धनाढ्यत्वं प्रजायते ॥ १२ ॥ स्वभार्या पतिता देवि लवणकूपे निशामुखे । नैव निःसारिता देवि ततः कन्या प्रजायते ॥ १३ ॥

---

इन तीनोंकी उस कुएमें मृत्यु होगई पीछे अपने नित्यके समयपर ज्ञातिवालोंके साथ जाकर मरेहुए बैलोको और अपनी स्त्रीको निकाला ॥ ६ ॥ हे वरानने ! हे पार्वति ! पीछे सम्पूर्ण आयुके बीतजानेपर वृद्धावस्थामे इस लवणकारकी मृत्यु होगई ॥ ७ ॥ हे देवेशि ! तब यमदूतोने महाघोर नरकमें बाईस हजार वर्षोंके लिये डाल दिया ॥ ८ ॥ हे देवि ! वहां सूचीमुखवाले कीडोंसे डसा गया जब नरकसे निकला तब व्याघ्रकी योनिको प्राप्त हुआ ॥ ९ ॥ फिर बकरेकी योनि मिली. पीछे बिल्लीकी योनि मिली अनन्तर सुन्दर अतिपवित्र देशमें मनुष्ययोनिको प्राप्त हुआ ॥ १० ॥ अपने कर्मके वश यह धनधान्यसे युक्त सब विद्याओके गुणका जाननेवाला हुआ और इसके कन्यारूपी पुत्रकी सन्तान उत्पन्न हुई ॥ ११ ॥ हे महादेवि ! पूर्वजन्ममें गंगाजीमें मरनेके कारण यह लवणकार धनवान् हुआ ॥१२॥ हे देवि ! इसने पूर्वजन्ममें अपनी स्त्रीको लवणकूपमें गिरनेपर नहीं निकाला इस कारण हे देवि ! कन्या उत्पन्न हुई ॥१३

वृषभौ पतितौ कूपे पातितौ मृत्युमागतौ । तेन दोषेण देवेशि पुत्रो नैव प्रजायते ॥ १४ ॥ परस्त्रीरतिसंयोगो यत्कृतः पूर्वजन्मनि । तेन पापेन भो देवि शरीरे रोगसंभवः ॥ १५ ॥ अस्य शान्तिं प्रवक्ष्यामि शृणु देवि सुशोभने । गृहवित्ताष्टमं भागं ब्राह्मणाय समर्पयेत् ॥ १६ ॥ गायत्रीलक्षजाप्यं च विप्रद्वारा च कारयेत् । हवनं तद्दशांशेन मार्जनं तर्पणं तथा ॥ १७ ॥ सुवर्णस्य कृता मूर्तिर्लक्ष्म्याः पंचपलस्य तु । रौप्यस्यैव वरारोहे वृषभौ द्वौ सुनिर्मलौ ॥ १८ ॥ पलदशकस्य वै कुर्यात्पूजयित्वा यथाविधि । मन्त्रेणानेन देवेशि चोपचारैः पृथक्पृथक् ॥ १९॥ ॐ लक्ष्मि देवि महालक्ष्मि कमले सर्वसिद्धिदे । मम पूर्वकृतं पापं तत्क्षमस्व दयानिधे ॥ २० ॥ ॐ लक्ष्म्यै नमः पाद्यं समर्पयामि । ॐ महालक्ष्म्यै नमः अर्घ्यं समर्पयामि । ॐ देव्यै नमः स्नानं समर्पयामि । ॐ कमलायै नमः गन्धं

---

हे देवेशि ! और दोनों बैल जो लवणकूपमें गिरकर मरगये थे उस दोषसे इसके पुत्र उत्पन्न नहीं हुआ ॥ १४ ॥ हे देवि ! पूर्वजन्ममें इसने जो अन्य स्त्रियोंसे विषय किया तिस पापसे इसके शरीरमें रोग उत्पन्न होते है ॥ १५ ॥ हे देवि ! हे सुशोभने ! अब इसके पापोंकी शान्तिको कहता हूँ तिसको सुनो-प्रथम तो यह अपने घरका आठवां भाग धन ब्राह्मणको देदे ॥ १६ ॥ फिर ब्राह्मणसे गायत्रीका एक लाख जप करावे जपका दशांश हवन मार्जन और तर्पणादि करावै ॥ १७ ॥ हे वरारोहे ! बीस तोले सोनेकी लक्ष्मीकी मूर्ति बनवावे और चालीस तोले चांदीकी सुन्दर दो बैलोंकी मूर्ति बनवावै, हे देवेशि ! फिर विधानपूर्वक अगाडीके मंत्रोंसे पृथक् २ उपचारसे दोनों मूर्तियोंको पूजन करै ॥ १८ ॥ १९ ॥ मंत्र-हे लक्ष्मी देवि ! हे महालक्ष्मी ! हे कमले ! हे सर्वसिद्धिदे ! हे दयानिधे ! मेरे पूर्वजन्मके पापोंको नष्ट करो ॥ २० ॥ ' ॐ लक्ष्म्यै नमः ' कहकर पाद्य अर्पण करै, ' ॐ महालक्ष्म्यै नमः ' कहकर अर्घ्य दे, 'ॐ देव्यै नमः' कहकर स्नान करावै, ' ॐ कमलायै नमः ' कह-

समर्पयामि । ॐ सर्वायै नमः धूपं समर्पयामि । ॐ सिद्धिदायै नमः दीपं समर्पयामि । एवं पाद्यादीनि सर्वाणि दापयेत् । ॐ नन्दिकेश्वर भूतेश गणानामधिप प्रभो । मम पूर्वकृतं पापं क्षम्यतां परमेश्वर ॥ २१ ॥ इति मंत्रेण वृषभौ पूजितौ शुभ्ररूपिणौ । पूजयित्वा यथान्यायं ब्राह्मणाय ददेत्ततः ॥ २२ ॥ ततो गां कपिलां दद्यात्स्वर्णशृङ्गीं सुभूषिताम् ॥ २३ ॥ एवं कृते वरारोहे यत्कृतं पूर्वजन्मनि । तत्सर्वं नाशमायाति शीघ्रमेव न संशयः ॥ २४ ॥ पुत्रोऽपि जायते देवि वन्ध्यात्वं च प्रशाम्यति । रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा ॥२५॥ मृतवत्सा लभेत्पुत्रं चिरंजीविनमुत्तमम् । काकवंध्या लभेत्पुत्रं पुनर्देवि न संशयः ॥ २६ ॥

इति श्रीकर्मविपाकसंहितायां मूलनक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

कर चन्दन चढावै, ' ॐ सर्वायै नमः ' कहकर धूप दे, ' ॐ सिद्धिदायै नमः ' कहकर दीपकसे आरती करै । इसी प्रकारसे पाद्यादि सब देवे और विनयसे कहे कि हे नन्दिकेश्वर ! हे भूतेश ! हे गणोंके स्वामी ! हे प्रभो ! हे परमेश्वर ! मेरे पूर्वजन्मके किये समस्तपापोंको नष्ट करो ॥ २१ ॥ इस मंत्रसे दोनो बैलोंका पूजन करके ब्राह्मणको देदे ॥ २२ ॥ फिर कापिला गौको सोनेसे सींग मढाय सुन्दर वस्त्र उढाय दान करै ॥ २३ ॥ हे वरारोहे ! ऐसा करनेसे पूर्वजन्ममें कियेहुए समस्त पाप निःसन्देह शीघ्र नष्ट होजाते हैं॥२४॥ हे देवि! और वन्ध्यात्वदोष दूर होकर पुत्र प्राप्त होता है, सम्पूर्णरोग नष्ट होजाते हैं इसमें कुछ विचार नही करना चाहिये ॥ २५ ॥ हे देवि ! मृतवत्सा नारी उत्तम चिरजीवी पुत्रको प्राप्त करती है और काकवन्ध्या नारीभी निःसन्देह पुत्रवती होती है ॥ २६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां मूलनक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

## अथाशीतितमोऽध्यायः ॥ ८० ॥

पूर्वाषाढानक्षत्रफलम् ।

शिव उवाच ॥ अयोध्याया महादेवि वसिष्ठस्यैव चाश्रमे । श्रीधनेश्वरशर्मेति ब्राह्मणो वसति प्रिये ॥ १ ॥ स पंडितो गुणज्ञश्च धनी मानी विचक्षणः । पतिव्रता च तस्य स्त्री पतिसेवासु तत्परा ॥ २ ॥ पुत्रद्वयं तथा जातं विद्यया स तु जीवति । भागिनेयस्ततो देवि तद्धनेश्वरशर्मणः ॥ ३ ॥ तत्र वासार्थमायातः सह पत्न्या वरानने । तीर्थयात्राप्रसंगेन गृहे तस्यावसद्द्विजः ॥ ४ ॥ मासमेकं स्थितस्तत्र भागिनेयस्ततो मृतः । दष्टः सर्पेण देवेशि कर्मकाण्डं तथा कृतम् ॥ ५ ॥ वर्षमात्रे ततो जाते भागिनेयस्य वै स्त्रियाः । धनेश्वरे महाप्रीतिर्जाता खलु वरानने ॥ ६ ॥ भार्यापुत्रविरोधश्च प्रत्यहं जायते तदा । गृहे स्वर्णं च रौप्यं च सर्वं तस्यै न्यवेदयत् ॥ ७ ॥

---

श्रीमहादेवजी बोले-हे महादेवि ! हे प्रिये ! अयोध्यानगरीके बीच वसिष्ठजीके आश्रममें श्रीधनेश्वरनामक एक ब्राह्मण बसता था ॥ १ ॥ यह ब्राह्मण पंडित, गुणी, धनी, मानी और चतुर था इसकी स्त्री पतिव्रता थी वह सदा अपने पतिकी सेवा करती थी ॥ २ ॥ हे देवि ! इसके दो पुत्र उत्पन्न हुए यह विद्यासे आजीविका करता था हे वरानने ! इस धनेश्वरशर्माका भानजा वहां स्त्रीसहित वास करनेको आया और तीर्थयात्राके प्रसंगसे धनेश्वरशर्माके घर रहने लगा ॥ ३ ॥ ४ ॥ हे देवेशि ! यह भानजा वहां एक महीनेतक रहा फिर सर्पके डसनेसे मृत्युको प्राप्त होगया तब धनेश्वरशर्माने कर्मकांड किया॥५॥ हे वरानने ! एक वर्षके पीछे भानजेकी स्त्रीकी धनेश्वर शर्माके ऊपर महाप्रीति होगई ॥ ६ ॥ तब धनेश्वर शर्माका अपनी स्त्री और पुत्रोंके साथ नित्य विरोध होने लगा तो धनेश्वरशर्माने अपने घरका सोना चांदी आदि समस्तधन भान-

ततो बहुगते काले तस्य मृत्युरभूत्किल । यमदूतैर्महाघोरे नरके क्षिप्त ईश्वरि ॥ ८ ॥ यमाज्ञया वरारोहे षष्टिवर्षसहस्रकम् ॥ ९ ॥ अन्यत्रापि कृतं पापं प्रयागे च विनश्यति । प्रयागे यत्कृतं पापं रामपुर्यां विनश्यति । अयोध्यायां कृतं पापं वज्रलेपो भविष्यति ॥ १० ॥ नरकान्निःसृतो देवि बकयोनिरजायत । पुनर्दर्दुरयोनिर्वै काकयोनिस्ततोऽभवत् ॥ ११ ॥ पुनर्मानुषयोनिं वै धनधान्यसमन्विताम् । यातः पुण्यतमे देशे देवगन्धर्वसेविते ॥ १२ सर्वविद्यासु विख्यातो गुणज्ञो रूपवांस्तदा । पूर्वजन्मनि देवेशि भागिनेयवधूं प्रति । सम्भोगं कृतवान्विप्रः कुक्षिपीडा ततः परम् ॥ १३ ॥ वंशच्छेदो विशालाक्षि कन्यका बहवस्तथा ॥ १४ ॥ भागिनेयस्य वै द्रव्यं भुक्तं पुत्रयुतं यतः । शरीरे बहुधा पीडा परस्त्रीगमनादनु ॥ १५ ॥ अस्य शांतिं प्रवक्ष्यामि शृणु त्वं मम वल्लभे । गृहवित्तषडंशं च पुण्यकार्यं च कारयेत् ॥ १६ ॥

---

जेकी बहूको दे दिया ॥ ७ ॥ हे ईश्वरी ! चिरकालके पीछे धनेश्वरकी मृत्यु होगई तब यमदूतोंने महाघोर नरकमे डाल दिया ॥ ८ ॥ हे वरारोहे ! वह यमराजकी आज्ञासे साठ हजार वर्षतक नरककी पीडा भोगी ॥ ९ ॥ अन्य स्थानपर कियाहुआ पाप प्रयागराजमें नष्ट होता है, प्रयागराजमें कियाहुआ पाप अयोध्यापुरीमें नष्ट होता है और अयोध्यापुरीमें किया हुआ पाप वज्रलेप होजाता है अर्थात् वह कहीं नहीं नष्ट होता है ॥ १० ॥ हे देवि ! फिर नरकसे निकलकर बगलेकी योनिको प्राप्त हुआ पीछे मेंढककी योनिको प्राप्त होकर काकयोनिको प्राप्त हुआ ॥ ११ ॥ पीछे देवगन्धर्वसे सेवित परमपवित्र देशमें धनधान्यसे युक्त होकर मनुष्य योनिको प्राप्त हुआ ॥ १२ ॥ यहां यह सब विद्याओंमें विख्यात गुणी और रूपवान् हुआ हे देवेशि ! इसने पूर्वजन्ममें अपने भानजेकी बहूसे संभोग किया इस कारण इसकी कोखमें पीडा रहती है ॥ १३ ॥ हे विशालाक्षि ! इसने पूर्वजन्ममें पुत्रसहित भानजेका द्रव्य भोग किया अतः वंश नष्ट होगया है और बहुतसी कन्या उत्पन्न हुई हैं ॥ १४ ॥ पूर्वजन्ममें पराई स्त्रीसे विषय करनेके कारण इसके शरीरमे अनेक प्रकारकी पीडा उत्पन्न होती है ॥ १५ ॥ हे मम वल्लभे ! अब इसके पापोंकी शान्तिको

गायत्रीजातवेदोभ्यां जपं वै कारयेत्ततः। दशांशहवनं कृत्वा तर्पणं मार्जनं तथा ॥ १७ ॥ जीर्णोद्धारं वरारोहे कूपं चैव तडागकम्। तद्वदेव च वै कुर्यात् षष्टिवृक्षावरोपणम् ॥ १८ ॥ प्रयागे माघमासे तु तुलादानं प्रयत्नतः। धूम्रवर्णां तथा गां वै दद्याद्विप्राय सत्कृताम् ॥ १९ ॥ एवं कृते वरारोहे पूर्वपापं विशुद्ध्यति। पुत्रोऽपि जायते देवि वन्ध्यात्वं च प्रशाम्यति ॥ २० ॥ काकवन्ध्यात्वशान्त्यै वै रवियुक्तां तु सप्तमीम्। कृत्वा पत्नी वरारोहे सुवर्णं दानमाचरेत् ॥ २१ ॥ शय्यादानं ततो दद्यान्मृतवत्सा सुपुत्रिणी। सर्वे रोगाः क्षयं यान्ति नात्र कार्या विचारणा ॥ २२ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाषाढानक्षत्रप्रथमचरणप्रायश्चित्त-कथनं नामाशीतितमोऽध्यायः ॥ ८० ॥

---

कहता हूँ तुम सुनो-प्रथम तो यह अपने घरके धनका छठा भाग पुण्य कार्यमें लगावै ॥ १६ ॥ फिर गायत्री और जातवेदसे इन मन्त्रोंका एक लाख जप करावै जपका दशांश हवन, उसका दशांश तर्पण और मार्जनादि करावै ॥१७॥ हे वरारोहे! पीछे टूटे फूटे कुए और बावडीको सुधरा दे एवं साठ वृक्षोंका एक बगीचा लगवावे ॥ १८ ॥ और माघके महीनेमें प्रयागराजमें तुला-दान करै फिर धूम्रवर्णवाली गौको भूषित करके दान करै ॥ १९ ॥ हे वरारोहे! हे देवि! ऐसा करनेसे पूर्वजन्मके पाप नष्ट होजाते हैं और वंध्यात्वदोष दूर होकर पुत्र प्राप्त होता है ॥ २० ॥ हे वरारोहे! काक-वन्ध्याकी शांतिके लिये रविवारी सप्तमीका व्रत करै और सुवर्णका दान करै ॥ २१ ॥ फिर शय्या दान करै ऐसा करनेसे मृतवत्सा नारीभी पुत्र-वती होती है और समस्तरोग नष्ट होजाते है इसमे कुछ विचारनेकी आव-श्यकता नहीं है ॥ २२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाषाढानक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नामाशीतितमोऽध्यायः ॥ ८० ॥

## अथैकाशीतितमोऽध्यायः ॥ ८१ ॥

शिव उवाच ॥ कर्णाटके शुभे देशे पुरं च शिवसंज्ञकम् । वसन्ति तत्र बहवो वैश्याः पण्योपजीविनः ॥ १ ॥ तन्मध्ये वैश्य एको हि धरणीकरविश्रुतः । तस्य रूपवती भार्या सुन्दरी बहुसम्मता ॥ २ ॥ व्यापारेण महादेवि धनं च बहु संचितम् । ततो बहुदिने जाते तस्य मित्रं द्विजोऽप्यभूत् ॥ ३ ॥ ब्राह्मणः सोऽपि वै भ्रष्टः कष्टं भुक्त्वा दिनेदिने । स्वर्णं शतपलं देवि हीरकं मौक्तिकं तथा ॥ ४ ॥ स्थापितं ब्राह्मणद्रव्यं स्वगृहे मित्रकारणात् । ततो वृद्धे तु वै जाते वैश्यमृत्युरभूत्पुरा ॥ ५ ॥ पश्चात् पत्नी मृता तस्य व्रतिनी गर्ववर्जिता ॥ ६ ॥ वैश्यस्यैवाभवत् स्वर्गो दिव्यवर्षसहस्रकम् । पत्न्या सह वरारोहे भुक्त्वा स्वर्गफलं ततः ॥ ७ ॥ काकयोनिं ततो लेभे चक्रवाकस्ततोऽभवत् । हंसयोनिस्ततो जातो मानुषत्वं ततोऽलभत् ॥ ८ ॥

---

श्रीशिवजी बोले—हे देवि ! शुभदेश कर्णाटकमे एक शिवपुरी थी वहां बहुतसे दूकानदार रहते थे ॥ १ ॥ इनमें एक धरणीकर नामका प्रसिद्ध वैश्य था उसकी स्त्री सबकी सम्मतिसे परम सुन्दरी थी ॥ २ ॥ हे महादेवि ! इसने व्यापारसे बहुत धन इकट्ठा किया चिरकालके उपरान्त एक ब्राह्मणके साथ इसकी मित्रता होगई ॥ ३ ॥ इस ब्राह्मणने भ्रष्ट होकर बडे कष्टोंसे धन संचय किया और चार सौ तोले सुवर्णको हीरामोतियोंके साथ वैश्यके पास रख दिया ॥ ४ ॥ और उस वैश्यने मित्रताके कारण ब्राह्मणका धन घरमें रक्खा था पीछे वृद्धावस्थाको प्राप्त होकर उस वैश्यकी मृत्यु होगई ॥ ५ ॥ फिर शीलवान् गर्वरहित इसकी स्त्रीभी मरगई ॥ ६ ॥ हे वरारोहे ! तब देवताओंके हजार वर्षोंतक वैश्यने स्त्रीसमेत स्वर्गके फलको भोगा ॥ ७ ॥ अनन्तर पुण्य क्षीण होनेपर काकयोनिको प्राप्त हुआ, फिर चकवेकी योनिको प्राप्त हुआ पुनः हंसकी योनि भोग मनुष्योनिको प्राप्त हुआ ॥ ८ ॥

पूर्वसंबन्धतः पत्नी पुण्यात्पातिव्रतादपि । पुनर्विवाहिता देवि न पुत्रं सा व्यजीजनत् । वन्ध्या जाता तु सा नारी दुःखिता चाप्यहर्निशम् ॥ ९ ॥ तस्य देहे भवेद्व्याधिः कफवातसमन्वितः । धनाढ्यो बहुधा कन्या जायन्ते च पुनःपुनः ॥१०॥ अस्य निग्रहहेत्वर्थं शृणु यत्नं वरानने । यद्गृहे वित्तमर्धं हि ब्राह्मणाय समर्पयेत् ॥ ११ ॥ ॐ लक्ष्म्यै नमो मन्त्रेण दशायुतजपं ततः । दशांशहवनं तद्वत्तर्पणं मार्जनं तथा ॥ १२ ॥ गामेकां कृष्णवर्णां वै स्वर्णशृङ्गीं सवत्सकाम् । ब्राह्मणाय ततो दद्यान्मुक्तालांगूलग्रन्थिताम् ॥ १३ ॥ भोजयेत् परमान्नेन ब्राह्मणान्वेदपारगान् । शतं वा द्विशतं देवि त्रिशतं वा विशेषतः ॥ १४ ॥ पलशतं सुवर्णस्य वेदीं कृत्वा विचक्षणः । तन्मध्ये च द्विजस्यैवाकृतिं रौप्यस्य कारयेत् ॥ १५ ॥ पूजयेच्चैव देवेशि मन्त्रेणैवं पुनः पुनः ॥ १६ ॥

---

हे देवि ! पूर्वजन्मके संबंधसे और पातिव्रत धर्मके प्रभावसे पूर्वजन्मकी स्त्रीही विवाही गई परन्तु उसके पुत्र नहीं होता है वह वंध्यात्व दुःखसे रातदिन दुःखी रहती है ॥ ९ ॥ इस वैश्यके शरीरमें कफवातजनित व्याधियें उत्पन्न होती हैं यह कर्मवश धनी तो है परन्तु इनके कन्या वारंवार उत्पन्न होती है ॥ १० ॥ हे वरानने ! अब इसके पापोंकी शांतिका उपाय कहता हूँ तुम सुनो-प्रथम तो यह अपने घरके धनका आधा भाग ब्राह्मणको दान करै ॥ ११ ॥ फिर " ॐ लक्ष्म्यै नमः " इस मंत्रका एक लाख जप करावै जपका दशांश हवन मार्जनादि करावै ॥ १२ ॥ फिर बछडेवाली काली गौके सींग सोनेसे मढाकर वस्त्र उढाय मोतियोंसे पूँछ गुंथाय ब्राह्मणको देवै ॥ १३ ॥ हे देवि! फिर वेदके जाननेवाले सौ दो सौ वा तीन सौ ब्राह्मणोंको भोजन करावै ॥ १४ ॥ अनन्तर बुद्धिमान् पुरुष चार सौ तोले सोनेकी वेदी बनाकर उसके बीचमें चांदीकी ब्राह्मणकी मूर्त्ति स्थापित करै ॥ १५ ॥ हे देवेशि ! आगे कहे हुए मन्त्रोंसे वारंवार पूजन करे ॥ १६ ॥

ब्रह्मंस्त्वं कपिलो विष्णुः सर्वसाक्षी जगन्मयः । ममापराधं देवेश क्षम्यतां पूर्वजन्मनः ॥ १७ ॥ द्रव्यं मित्रस्य भो देवि स्थापितं स्वगृहे मया । न दत्तं वै मयाऽज्ञानात्क्षम्यतां परमेश्वर ॥ १८ ॥ मन्त्रेणानेन देवेशि पूजनं विधिपूर्वकम् । पूजयित्वा ततो देवि ब्राह्मणाय प्रदापयेत् ॥ १९ ॥ एवं कृते वरारोहे शीघ्रं पुत्रः प्रजायते ॥ २० ॥ काकवन्ध्या पुनर्देवि कन्यकाजननी तथा । पुत्रं प्रसूयते देवि नच कन्या प्रसूयते ॥ २१ ॥ मृतवत्सा लभेत्पुत्रं चिरञ्जीविनमुत्तमम् । व्याधयः संक्षयं यान्ति नात्र कार्या विचारणा ॥ २२ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाषाढानक्षत्रद्वितीयचरणप्रायश्चित्त-कथनं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

---

मंत्र–हे ब्रह्मन् ! तुम कपिलरूपी विष्णु हो, सबके साक्षी हो, जगन्मय हो, हे देवेश ! मेरे पूर्वजन्ममे किये हुए अपराधोंको क्षमा करो ॥ १७ ॥ हे देवि ! ( हाथ जोडकर कहै ) हे ब्रह्मन् ! मित्रका धन मैंने अपने घरमें पूर्वजन्ममें धरा था और उसको अज्ञानतासे नहीं दिया सो मेरे उस अपराधको क्षमा करो ॥ १८ ॥ हे देवेशि ! इन मंत्रोंसे विधिपूर्वक पूजन करे और पूजा करके हे देवि ! उस वेदीसहित मूर्त्तिको ब्राह्मणको दे दे ॥ १९ ॥ हे वरारोहे ! ऐसा करनेसे शीघ्रही पुत्र प्राप्त होता है ॥ २० ॥ हे देवि ! काकवंध्या नारी और कन्या उत्पन्न करनेवाली स्त्री फिर कन्याको उत्पन्न नहीं करती फिर पुत्रको उत्पन्न करती है ॥ २१ ॥ और मृतवत्सा नारी उत्तम चिरंजीवी पुत्रको प्राप्तकरती है और संपूर्ण व्याधियें नष्ट हो जाती हैं इसमें कुछ विचार नहीं करना चाहिये ॥ २२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाषाढानक्षत्रद्वितीयचरण-प्रायश्चित्तकथनं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

---

## अथ द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

श्रीशिव उवाच ॥ अंतर्वेदे विशालाक्षि लोध्रो वसति पुण्यकृत्। गंधर्वपुरविख्याते नगरे यमुनातटे ॥ १ ॥ स भाग्यवान् गुणज्ञो हि बहु भृत्यैः सुपूजितः। भूपतिस्तस्य देशस्य दाता भोक्ता विचक्षणः ॥ २ ॥ ब्राह्मणस्य हृता भूमिरज्ञानाद्वा सुरेश्वरि। ब्राह्मणोऽपि विषं भुक्त्वा मृतस्तस्योपरि प्रिये ॥ ३ ॥ ततो बहुगते काले तस्य मृत्युरभूत्पुरा। यमदूतैर्महाघोरे कुंभीपाके निपातितः ॥ ४ ॥ यमाज्ञया वरारोहे युगमेकं पपाच वै। महादुःखेन सन्तप्तो बहु कष्टं प्रलब्धवान् ॥ ५ ॥ नरकान्निःसृतो देवि सूकरत्वं स्म जायते। ऋक्षयोनौ ततो भूत्वा शुकयोनिं ततोऽलभत् ॥ ६ ॥ पुनर्मानुषयोनिं वै मध्यदेशे वरानने। धनधान्यसमायुक्तो वंशहीनो वरानने ॥ ७ ॥

---

शिवजी बोले-हे विशालाक्षि ! गंगा यमुनाके बीच यमुनाजीके तटपर गंधर्वनामक नगरमें पुण्यात्मा एक लोधा रहता था ॥१॥ यह भाग्यवान्, गुणी, बहुतसे नौकरोंसे पूजित इस देशका राजा भोक्ता और परमचतुर था ॥ २ ॥ हे सुरेश्वरि ! हे प्रिये ! इस राजाने अज्ञानसे ब्राह्मणकी भूमि हरली तब वह ब्राह्मण विष खाकर मरगया ॥ ३ ॥ फिर बहुत दिनोंके पीछे इस लोधेकी मृत्यु होगई तो यमदूतोंने इसे घोर कुम्भीपाक नरकमें डाल दिया ॥ ४ ॥ हे वरारोहे ! वहां यमराजकी आज्ञासे एक युगतक रहकर महादुःखोंसे सन्तप्त होकर अनेक प्रकारके कष्ट भोगे ॥ ५ ॥ हे देवि ! जब नरकसे निकला तब सूकरकी योनिको प्राप्त हुआ फिर रीछकी योनि भोगकर तोतेकी योनिको प्राप्त हुआ ॥ ६ ॥ हे वरानने ! फिर मध्यदेशमें धनधान्यसे युक्त और वंशसे

पूर्वजन्मनि देवेशि हृता भूमिर्वरानने । ब्राह्मणो वै मृतः पूर्वं तदुद्देशेन वै शिवे ॥ ८ ॥ अतः पुत्रविहीनोऽयं बहुकन्याप्रजोऽभवत् । महारोगेण सन्तप्तो मृतवत्सः पुनः पुनः ॥ ९ ॥ अस्य शान्तिमहं वक्ष्ये पूर्वपापस्य शान्तये । गायत्रीजातवेदोभ्यां त्र्यम्बकेण वरानने ॥ १० ॥ दशायुतं जपः कार्यः प्रतिमंत्रैः सुरेश्वरि । दशांशं हवनं तद्वत्तर्पणं मार्जनं तथा ॥ ११ ॥ दानं च दशवर्णाया शतब्राह्मणभोजनम् । भूमिदानं ततः कुर्याच्छतविग्रहमानकम् ॥ १२ ॥ पलं पञ्चसुवर्णस्य ब्राह्मणस्य तथाऽऽकृतिम् । पूजयित्वा यथान्यायं ब्राह्मणाय प्रदापयेत् ॥ १३ ॥ प्रयागे मकरे मासि पत्न्या सह वरानने । स्नानं कुर्याच्च देवेशि पूर्वपापं व्यपोहति ॥ १४ ॥ एवं कृते वरारोहे पुत्रो जातः स वै शिवे । वंध्यात्वं नाशमायाति काकवन्ध्या च गुर्विणी १५

---

हीन होकर मनुष्ययोनिको प्राप्त हुआ ॥ ७ ॥ हे देवेशि ! हे वरानने ! हे शिवे ! पूर्वजन्ममें इसने जो ब्राह्मणकी भूमि हरली और भूमि हरनेके कारण ब्राह्मण मरगया ॥ ८ ॥ इस कारण यह पुत्रसे हीन हुआ और इसके अनेक कन्या उत्पन्न हुई है महारोगसे दुःखी रहता है और वारंवार इसकी कन्या मरजाती है ॥ ९ ॥ हे वरानने ! अब इसके पापोंकी शान्तिको कहता हूं—यह गायत्री और जातवेदसे इन दोनो मंत्रोंको ॥१०॥ हे सुरेश्वरि ! दो लाख जप करावै और दशांश हवन, तर्पण, मार्जनादि करावै ॥११॥ दशवर्णवाली गौका दान करै और सौ ब्राह्मणोंको भोजन करावै एवं सौ पुरुषोंके शरीरकी प्रमाण पृथ्वीका दान करै ॥ १२ ॥ बीस तोले सोनेकी ब्राह्मणकी मूर्ति बनावाकर उसका विधानसे पूजन करके ब्राह्मणको देदे ॥ १३ ॥ हे वरानने ! हे देवेशि ! मकरकी संक्रांतिपर प्रयागराजमें स्त्रीसहित स्नान करै तो पूर्वजन्मके पाप दूर होजाते है ॥ १४ ॥ हे वरारोहे ! हे शिवे ! ऐसा करनेसे पुत्र प्राप्त होता है वंध्यात्वदोष नष्ट होजाताहै और काकवंध्या गर्भको धारण करती है ॥ १५ ॥

मृतवत्सा लभेत्पुत्रं चिरंजीविनमुत्तमम् ।
रोगाः सर्वे क्षयं यान्ति नात्र कार्या विचारणा ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाषाढानक्षत्रतृतीयचरणप्रायश्चित्त-
कथनं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

## अथ त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

शिव उवाच ॥ अयोध्यायां विशालाक्षि मालाकारोऽवसत् पुरा । साधुवृत्तिरतः श्रीमान्ब्राह्मणानां च सेवकः ॥ १ ॥ तस्य पत्नी महादुष्टा कुलटा व्यभिचारिणी । माल्यं कृत्वा विशालाक्षि जीवयामास बान्धवान् ॥ २ ॥ तस्य मित्रं द्विजोऽप्येकः स्वर्ण-लक्षद्वयं तथा । स्थापितं स्वगृहे देवि गताश्च बहुवासराः ॥ ३ ॥ तेन स्वं याचितं द्रव्यमर्धं प्राप्तं तदा प्रिये । तदर्धं च व्ययं यातं मालाकारस्य वै गृहे ॥ ४ ॥

---

मृतवत्सा नारी उत्तम चिरंजीवी पुत्रको प्राप्त करती है, सम्पूर्ण रोग नष्ट होजाते हैं इसमें कुछ विचारकी आवश्यकता नहीं है ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाषाढानक्षत्रतृतीयचरण-
प्रायश्चित्तकथनं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

श्रीशिवजी बोले-हे विशालाक्षि ! पहले अयोध्यापुरीमें एक माली रहता था वह साधुवृत्तिवाला, धनी और ब्राह्मणोंका सेवक था ॥ १ ॥ उसकी स्त्री महादुष्टा, कुलटा, व्यभिचारिणी थी, माली माला बनाकर उसके द्वारा अपने कुटुंबका पालन पोषण करता था ॥ २ ॥ हे देवि ! एक ब्राह्मण इसका मित्र था उसने दो लाख असर्फिये इस मालीके घर रखदीं और बहुत दिनोंके पीछे जब ब्राह्मणने मांगी तब आधी प्राप्त हुई हे प्रिये ! आधी उस मालीके

एवं बहुगते काले मालाकारो मृतः पुरा । अयोध्यायां विशालाक्षि स्वर्गस्तस्याभवत्किल ॥ ५ ॥ लक्षवर्षं वरारोहे भुक्तं स्वर्गफलं शुभम् । ततः पुण्यक्षये जाते मानुषत्वं भवेत्पुनः॥ ६॥ मध्यदेशे च देवेशि पुत्रकन्याविवर्जितः । तस्य पत्नी पुनर्देवि या स्थिता पूर्वजन्मनि । विवाहिता च सा देवि व्याधियुक्ता ज्वरातुरा ॥ ७ ॥ अस्य शान्तिं वरारोहे शृणु मे परमेश्वरि । षडंगं पाठयेन्नित्यं शिवपूजनपूर्वकम् ॥ ८ ॥ षडक्षरेण मन्त्रेण लक्षजाप्यं वरानने । हवनं तद्दशांशेन मार्जनं तर्पणं तथा ॥ ९ ॥ शृणुयान्मासमेकं तु चण्डिकाचरितत्रयम् । ततः षडंशं देवेशि ब्राह्मणाय समर्पयेत् ॥ १० ॥ ततो गां कपिलां दद्यात्तिलधेनुं सुपूजिताम् । अश्वदानं विशालाक्षि महिषी दुग्धसंयुताम् ॥ ११ ॥ सुवर्णस्य कृतं वृक्षं फलपुष्पसमन्वितम् । दद्याद्दशपलस्यैवं ततः पुत्रः प्रजायते ॥ १२ ॥

---

घर खर्च हो गई ॥ ३ ॥ ४ ॥ हे विशालाक्षि ! इस भांति चिरकालके उपरान्त मालीकी मृत्यु हो गई, तब अयोध्यामे मरनेके कारण मालीका स्वर्गमें वास हुआ ॥ ५ ॥ हे वरारोहे ! वहां एक लाख वर्षतक स्वर्गका फल भोगा, जब पुण्य क्षीण हुआ तब मनुष्ययोनिको प्राप्त हुआ ॥ ६ ॥ हे देवेशि ! हे देवि ! अब यह मध्यदेशमे पुत्रकन्याओंसे रहित है, पूर्व जन्मवाली स्त्रीही इसको मिली है हे देवि ! जबसे स्त्री विवाही गई है तभीसे व्याधियोंसे युक्त और ज्वरसे आतुर रहती है ॥ ७ ॥ हे वरारोहे । हे परमेश्वरि ! अब इसके पापोंकी शांतिको कहता हूँ तुम सुनो—प्रथम यह शिवजीका पूजन और षडंगका पाठ करावै ॥ ८ ॥ हे वरानने ! षडक्षर मंत्रका एक लाख जप करावै और जपका दशांश हवन, मार्जन, तर्पणादि करावै ॥ ९ ॥ हे देवेशि ! फिर एक महीनेतक दुर्गापाठके तीनों चरित्रोंको प्रतिदिन सुने अनन्तर अपने घरका छठा भाग ब्राह्मणको देदे ॥ १० ॥ हे विशालाक्षि ! पीछे कपिला गौ और तिलधेनुका पूजन करके ब्राह्मणको दे एवं घोडा और दूध देती हुई भैंसका दान करै ॥ ११ ॥ हे देवि ! फिर चालीस तोले सोनेका फल और पुष्पों-

मृतवत्सा च नारी या काकवन्ध्या च रोगिणी ।
सर्वासां वाञ्छितं कार्यं जायते नात्र संशयः ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाषाढानक्षत्रचतुर्थचरणप्रायश्चित्त-कथनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

## अथ चतुरशीतितमोऽध्यायः ॥ ८४ ॥

उत्तराषाढानक्षत्रफलम् ।

शिव उवाच ॥ श्वेतपर्वे महातीर्थे रामपुर्यां वरानने । कान्य-कुब्जोऽत्रसद्विप्रो व्यापारकरणे रतः ॥ १ ॥ अश्वादिकं वरारोहे वृषचर्माजिनाम्बरम् । प्रत्यहं गृह्यते देवि विक्रयं कुरुते सदा ॥ २ ॥ द्यूतवेश्यारतो नित्यं परस्त्रीगमनं तथा । प्रकरोति सुरापानं गुरुं देवं न मन्यते ॥ ३ ॥ एवं बहुगते काले मरणं तस्य जायते । यमदूतैर्महाघोरे बद्धा क्षिप्तः सुदारुणे ॥ ४ ॥

---

समेत एक वृक्ष बनवाकर दान करै तो पुत्र उत्पन्न होता है ॥ १२ ॥ जो मृत-वत्सा, काकवंध्या और रोगिणी नारी है उनके निःसन्देह मनोरथ सिद्ध होते हैं १३

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाषाढानक्षत्रचतुर्थचरण-प्रायश्चित्तकथनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

श्रीशिवजी बोले-हे वरानने ! अयोध्यानगरीमें महातीर्थ श्वेतपर्वमें एक व्यापारी कान्यकुब्ज ब्राह्मण रहता था ॥ १ ॥ हे वरारोहे ! हे देवि ! यह ब्राह्मण प्रतिदिन घोडे, बैल आदि मृगचर्मको खरीदता और बेंचा करता था ॥ २ ॥ यह नित्य जुआ खेलता, पराई स्त्रियोंसे विषय करता; मदिरा पीता, गुरु और देवताओंको नहीं माना करता था ॥ ३ ॥ इस भांतिसे चिरकालके उपरान्त इसकी मृत्यु हो गई तब यमदूतोंने बांधकर महाघोर दारुण नरकमें डाल

षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् । नरकान्निःसृतो देवि वानरस्यालभद्वपुः ॥ ५ ॥ यातो रासभयोनिं वै तुरङ्गस्तु ततोऽभवत् । मनुष्यत्वं पुनर्लेभे पूर्वजन्मफलाद्यतः ॥६॥ धनधान्यसमायुक्तो रोगयुक्तोऽप्यपुत्रकः । कदाचिद्दैवयोगेन पुत्रो भवति भामिनि ॥७॥ मरणं तस्य वै शीघ्रं ततः कन्या प्रजायते ॥ ८ ॥ अस्य शान्तिं शृणुष्वादौ यथा पापं निवर्तते । गृहवित्तषडंशं च पुण्यकार्यं नियोजयेत् ॥ ९ ॥ पूर्वजन्मनि देवेशि कनीयांसं स्वभ्रातरम् । रात्रौ खड्गेन वै हत्वा तत्पापाच्च सुतक्षयः ॥ १० ॥ गायत्रीमूलमन्त्रेण पञ्चलक्षं वरानने । जपं वै कारयेत्तद्वन्नित्यं गोविन्दकीर्त्तनम् ॥ ११ ॥ होमं वै कारयेत्तत्र कुण्डे षट्कोणसंज्ञके । पायसेन विशालाक्षि तिलसर्पिर्युतेन च ॥ १२ ॥ दशवर्णां ततो दद्याद्ब्राह्मणाय शिवात्मने । भूमिदानं ततो दद्याच्छय्यादानं विशेषतः ॥ १३ ॥

---

दिया ॥ ४ ॥ हे देवि ! वहां साठ हजार वर्षतक नरककी पीडा भोगी जब नरकसे निकला तब वानरकी योनिको प्राप्त हुआ ॥ ५ ॥ पीछे गधे और घोडेकी योनिको भोगकर पूर्वजन्मके फलसे मनुष्ययोनिको प्राप्त हुआ ॥ ६ ॥ हे भामिनि ! यहां धनधान्यसे युक्त, रोगी और पुत्रहीन हुआ, किसी भांति दैवयोगसे पुत्र होगया ॥ ७ ॥ परन्तु वह पुत्र शीघ्र ही मरगया फिर कन्या उत्पन्न हुई ॥ ८ ॥ अब इसकी शांतिको कहताहूँ जिसके करनेसे पूर्वजन्मके पाप नष्ट होजांय—प्रथम तो यह अपने घरका छठा भाग पुण्यकार्यमें लगावै ॥९॥ हे देवेशि ! पूर्वजन्ममें इसने अपने छोटे भाईको रात्रिमे खड्गसे मारडाला था इस कारण इसको पुत्रशोक हुआ ॥ १० ॥ हे वरानने ! फिर गायत्रीके मूलमंत्रका पांच लाख जप करावै और प्रतिदिन गोविन्दका कीर्तन करै ॥ ११ ॥ हे विशालाक्षि ! षट्कोण कुण्डमे तिल घी और खीरसे जपका दशांश हवन करावै ॥ १२ ॥ फिर शिवरूपी ब्राह्मणको दशवर्णवाली गौका दान करै

भ्रातुश्चैवाकृतिं कृत्वा रौप्येणैव वरानने । पलसप्तप्रमाणेन पूजां कृत्वा प्रसन्नधीः ॥ १४ ॥ देवदेव महादेव चर्मभस्मविभूषण । पूर्वजन्मनि देवेश कृतो भ्रातुर्वधो मया । तत्पापं क्षम्यतां देव प्रपद्ये शरणं तव ॥ १५ ॥ प्रतिमां पूजितां देवि मंत्रेणानेन वै शिवे । दद्याद्विप्राय विदुषे श्रोत्रियाय द्विजन्मने ॥ १६ ॥ ततो वै भोजयेच्चैव ब्राह्मणान्वेदपारगान् । एकाधिकशतं देवि पयसा मोदकेन च ॥ १७ ॥ एवं कृते वरारोहे पूर्वपापस्य संक्षयः । वंध्यात्वं प्रशमं याति पुत्रः खलु प्रजायते ॥ १८ ॥ काकवन्ध्या लभेत्पुत्रं मृतवत्सा सुपुत्रिणी । व्याधयः संक्षयं यांति नात्र कार्या विचारणा ॥ १९ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराषाढानक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

अनन्तर पृथ्वीदान और विशेष करके शय्यादान करै ॥ १३ ॥ हे वरानने ! प्रसन्नतासे अट्ठाईस तोले चांदीकी अपने भाईकी मूर्ति बनवाकर उसका पूजन करै ॥ १४ ॥ मंत्र-हे देवदेव ! हे महादेव ! हे चर्मभस्मविभूषण ! हे देवेश ! हे देव ! पूर्वजन्ममें जो मैंने अपने भाईका वध किया उस पापको क्षमा करो मैं आपकी शरण हूँ ॥ १५ ॥ हे देवि ! हे शिवे ! इस मंत्रसे पूजन करके उस प्रतिमाको विद्वान् श्रोत्रिय ब्राह्मणको देदे ॥ १६ ॥ हे देवि ! और १०१ वेदपाठी ब्राह्मणोंको खीर और लड्डूओंसे भोजन करावै ॥१७॥ हे वरारोहे ! इस भाँति करनेसे पूर्वजन्मके पाप नष्ट हो जाते है और स्त्रीका वंध्यात्वदोष दूर होकर शीघ्र पुत्र प्राप्त होता है ॥ १८ ॥ काकवंध्या नारी और मृतवत्सा नारी पुत्रको प्राप्त करती है, एवं सम्पूर्ण व्याधियें नष्ट होजाती हैं इसमें कुछ विचार नहीं करना चाहिये ॥ १९ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराषाढानक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## अथ पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

शिव उवाच ॥ शंकेश्वरपुरे देवि वसत्येको द्विजो वरः । म्लेच्छवाणीं वदन्नित्यं म्लेच्छसेवारतः सदा ॥ १ ॥ तिष्ठति म्लेच्छनिकटे म्लेच्छविद्यासु पण्डितः । मत्स्यमांसस्य मद्यस्य भोजनं चाकरोत्सदा ॥ २ ॥ एवं सर्वं वयो यातं धनं बहु सुसंचितम् । तद्धनं भूमिमध्ये तु स्थापितं तु गृहे शुभे ॥ ३ ॥ एकस्मिन्समये देवि भ्रातुः पुत्रः समागतः । रत्नव्यापारकरणे स दक्षश्चतुरस्तथा । तस्य गेहे स्थितं नित्यं रत्नं बहु सुसंचितम् ॥ ४ ॥ रत्नलोभेन भो देवि रात्रौ छुरिकया तदा । पत्न्या सह वरारोहे सुप्तं निशि जघान तम् ॥ ५ ॥ तत्सर्वं भूमिमध्ये तु स्थापितं क्रूरकर्मणा । द्वाभ्यां रत्नं तदा गृह्य व्ययं नीतं दिनेदिने ॥ ६ ॥ ततो बहुदिने याते द्विजस्य मरणं खलु । पश्चात्पत्नी मृता तस्य तयोर्नरकपातनम् ॥ ७ ॥ षष्टिवर्षसहस्राणि महाकष्टेन पीडितौ । नरकान्निःसृतौ द्वौ तु गजयोनी अजायताम् ॥ ८ ॥

---

श्रीशिवजी बोले—हे देवि ! शंकेश्वरनगरमे एक श्रेष्ठ ब्राह्मण रहता था यह प्रातिदिन म्लेच्छवाणी बोलता और म्लेच्छोंकी सेवा करता था ॥ १ ॥ और म्लेच्छोंके ही पास रहता म्लेच्छविद्यामें विद्वान् था, यह सदा मच्छियें खाता और मद्य पीता ॥ २ ॥ इस प्रकारसे इसकी सब आयु बीत गई. संचय किया हुआ धन सुन्दर अपने घरके बीच पृथ्वीमे गाड दिया ॥३॥ हे देवि ! एक समय इसके भाईका पुत्र रत्नोके व्यापारमें चतुर इसके घर आया और वहां रहकर यह प्रातिदिन रत्नोका संग्रह करने लगा ॥ ४ ॥ हे देवि ! हे वरारोहे ! रत्नोंके लोभसे रात्रिमें सुन्दर सोते हुए भतीजेको स्त्रीसहित ब्राह्मणने छूरीसे मारडाला ॥ ५ ॥ और उसका सब धन पृथ्वीमें गाड दिया और उसमेसे थोडा लेकर प्रतिदिन खर्च करने लगा ॥ ६ ॥ इस भांतिसे बहुत दिनोंके पीछे इस ब्राह्मणकी मृत्यु हो गई पीछेसे इसकी स्त्रीभी मरगई, तब दोनों नरकमे जाकर गिरे ॥ ७ ॥ और वहां साठ

पुनः कच्छपयोनिर्वै गोधायोनिरजायत ॥ ९ ॥ एवं योनित्रयं भुक्त्वा सरय्वा उत्तरे तटे । मानुषत्वं ततो लेभे भाग्यवान्साधुसंमतः ॥ १० ॥ सुशीलः सुमतिर्दक्षः स्वल्पविद्यायुतो नरः । अपुत्रो रोगवान्देवि नरभूपतिपूजितः ॥ ११ ॥ पूर्वजन्मनि देवेशि भ्रातृपुत्रस्य वै वधः । कृतो रात्रौ महादेवि तेन दोषेण वै मृतः ॥ १२ ॥ म्लेच्छस्य सेवनाद्देवि म्लेच्छस्याशुचिभाषणात् । तेन पापेन भो देवि शरीरे रोगसंभवः ॥ १३ ॥ गजदानं कृतं पूर्वं दत्ता शय्या सुरेश्वरि । तत्फलेन महादेवि धनाढ्यत्वं प्रजायते ॥ १४ ॥ अनाचारः कृतः पूर्वं पुत्रदारेण सन्ततम् । तेन पापेन भो देवि नरः कन्याप्रजो भवेत् ॥ १५ ॥ अथ शान्तिं प्रवक्ष्यामि शृणु देवि सुशोभने । गायत्रीमूलमन्त्रस्य पञ्चलक्षं वरानने ॥ जपं च कारयेत्तद्वत्षडंशं दानमाचरेत् ॥ १६ ॥

---

हजार वर्षोंतक दोनों स्त्रीपुरुषोंने महाकष्ट भोगा, जब नरकसे निकले तब हाथीकी योनि मिली ॥ ८ ॥ फिर कछुएकी और गोहकी योनि मिली ॥९॥ इस प्रकार तीन योनिको भोगकर सरयूके उत्तर किनारे मनुष्य योनिको प्राप्त हुआ, वहां यह भाग्यवान्, साधुसंमत, सुशील, सुमति, चतुर, थोडी विद्यावाला, पुत्ररहित, रोगी, राजा और प्रजासे पूजित हुआ ॥ १० ॥ ११ ॥ हे देवेशि ! हे देवि ! पूर्वजन्ममें इसने अपने भाईके बेटेको मदसे रात्रिमें मारडाला था तिस दोषसे उसकी मृत्यु हुई ॥ १२ ॥ हे देवि ! म्लेच्छकी सेवा करनेसे और म्लेच्छवाणी बोलनेसे यह रोगी हुआ ॥१३॥ हे सुरेश्वरि ! हे महादेवि ! उसने पूर्वजन्ममें हाथी और शय्याका दान किया था तिसके फलसे यह धनी हुआ है ॥ १४ ॥ हे देवि ! पूर्वजन्ममें उसने स्त्री पुत्रके साथ अच्छा आचार नहीं किया था इस कारण इसको कन्या उत्पन्न होती हैं ॥ १५ ॥ हे देवि ! हे शोभने ! हे वरानने ! अब इसके पापोंकी शान्तिको कहता हूँ तुम सुनो-प्रथम यह गायत्रीके मूलमंत्रका पांच लाख जप करावै

होमं च कारयेत्कुण्डे तत्र देवि सुसंस्कृते । दशांशं तर्पणं देवि मार्जनं तद्दशांशतः ॥ १७ ॥ भ्रातृपुत्रस्य प्रतिमां कारयेद्वरभामिनि । दशपलसुवर्णस्य विधिवत्पूजयेत्ततः ॥ १८ ॥ मन्त्रेणानेन देवेशि गन्धधूपादिभिस्तथा ॥ १९ ॥ गणाधिप सुराध्यक्ष सर्वसिद्धिप्रदायक । मम पूर्वं कृतं पापं तत्क्षमस्व दयानिधे ॥२०॥ रौप्यपात्रे स्थितां तां तु प्रतिमां प्रार्थयेत्ततः ॥ २१ ॥ अज्ञानाद्वा प्रमादाद्वा मया पूर्वं वधः कृतः । तत्सर्वं क्षम्यतां देव प्रपद्ये शरणं तव ॥ २२ ॥ ॐ गणपतये नमः ॥ ॐ लक्ष्म्यै नमः ॥ ॐ सूर्याय नमः ॥ ॐ शिवाय नमः ॥ ॐ विश्वयोनये नमः ॥ ॐ गरुडाय नमः ॥ ॐ नन्दिकेश्वराय नमः ॥ ॐ चक्राय नमः ॥ ॐ त्रिशूलाय नमः ॥ ॐ पद्माय नमः ॥ ॐ शंखाय नमः ॥ एभिर्मंत्रैस्तु सर्वाणि वस्तूनि दापयेत् ततः । कलशं पूजयेद्देवि गणाधिपस्वरूपिणम् ॥ २३ ॥

---

और अपने घरका छठा भाग दान कर दे ॥१६॥ हे देवि ! फिर संस्कार किये हुए कुण्डमे जपका दशांश हवन, मार्जन और तर्पण करावै ॥१७॥ हे भामिनि ! हे देवेशि ! चालीस तोले सोनेकी भाईके बेटेकी मूर्ति बनवावे और आगे कहे मंत्रोसे गंध धूपादिद्वारा विधिपूर्वक पूजन करे ॥ १८ ॥ १९ ॥ मंत्र– हे गणाधिप ! हे सुराध्यक्ष ! हे सर्वसिद्धिप्रदायक ! हे दयानिधे ! मेरे पूर्वजन्मके किये हुए पापोको क्षमा करो ॥ २० ॥ फिर चांदीके पात्रमें प्रतिमाको रखकर प्रार्थना करै ॥ २१ ॥ हे देव ! अज्ञान वा प्रमादसे पूर्वजन्ममें जो मैंने अपने भतीजेको मारडाला उस अपराधको क्षमा करो मैं तुम्हारी शरणागत हूँ ॥ २२ ॥ ॐ गणपतये नमः, ॐ लक्ष्म्यै नमः, ॐ सूर्याय नमः, ॐ शिवाय नमः, ॐ विश्वयोनये नमः, ॐ गरुडाय नमः, ॐ नंदिकेश्वराय नमः, ॐ चक्राय नमः, ॐ त्रिशूलाय नमः, ॐ पद्माय नमः, ॐ शंखाय नमः, हे देवि ! इन मंत्रोंसे सब वस्तु दान करै

गन्धपुष्पैश्च ताम्बूलैर्वस्त्रैर्नानाविधैरपि । प्रतिमां पूजितां देवि ब्राह्मणाय प्रदापयेत् ॥ २४ ॥ दशवर्णां ततो दद्याद्वृषमेकं वरानने । पंचपात्रं ततो दद्याद्ब्राह्मणान्भोजयेत्ततः ॥ २५ ॥ रविवारेण संयुक्तां सप्तमीं विधिपूर्वकम् । उपोषणं नियमतः पत्न्या सह समाचरेत् ॥ २६ ॥ आसप्तवर्षपर्यन्तं प्रकुर्याद्वा सुरेश्वरि । ततस्तूद्यापनं कुर्याद्यथाशक्त्या सुदक्षिणाम् । दद्याद्विप्राय विदुषे श्रोत्रियाय तपस्विने ॥ २७ ॥ कूष्माण्डं नारिकेलं च पंचरत्नसमन्वितम् । गङ्गामध्ये प्रदातव्यं पूर्वपापविशुद्धये ॥ २८॥ एवं कृते वरारोहे शीघ्रं पुत्रः प्रजायते । सर्वे रोगाः क्षयं यान्ति नीहारं भास्करोदये ॥ २९ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराषाढानक्षत्रद्वितीयचरणप्रायाश्चित्तकथनं नाम पंचाशीतितमोऽध्यायः ॥ ८५ ॥

---

फिर गणाधिपस्वरूप कलशका पूजन करै ॥२३॥ हे देवि ! गंध, पुष्प, ताम्बूल, वस्त्रादि अनेक प्रकारसे प्रतिमाका पूजन करके ब्राह्मणको दे ॥ २४ ॥ हे वरानने ! अनन्तर एक बैल और दशवर्णवाली गौको पंचपात्रके साथ ब्राह्मणको दे और भोजन करावै ॥ २५ ॥ और रविवारी सप्तमीका व्रत विधिपूर्वक स्त्रीसहित नियमसे करै ॥ २६ ॥ हे सुरेश्वरि ! सात वर्षतक इस व्रतको कर आगे उद्यापन करै और यथाशक्ति दक्षिणा श्रोत्रिय तपस्वी विद्वान् ब्राह्मणको दे ॥ २७ ॥ फिर पंचरत्नोंके साथ कूष्मांड और नारियल गंगाजीके बीचमें स्थित होकर पूर्वजन्मके पापोंकी शांतिके निमित्त दान करै ॥२८॥ हे वरारोहे ! ऐसा करनेसे शीघ्र पुत्र प्राप्त होताहै और संपूर्ण रोग नष्ट हो जाते हैं जैसे सूर्यके उदयमें कुहर नष्ट होजाता है ॥ २९ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराषाढानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

## अथ षडशीतितमोऽध्यायः ॥ ८६ ॥

शिव उवाच ॥ यवनदेशे महादेवि ब्राह्मणो वेदपारगः । जयदेवेति विख्यातो गुणवानपि शीलवान् ॥ १ ॥ तस्य भार्या शीलवती सुशीला शीलरूपिणी । तस्यां पुत्रत्रयं जातं गुणज्ञं वेदपारगम् ॥ २ ॥ पुत्राः सर्वे गुणज्ञाश्च वेदवेदाङ्गपारगाः । ज्येष्ठपुत्रस्य चोद्वाहे स्वसा तस्य समागता ॥ ३ ॥ भगिन्याश्चादरं कृत्वा बहुमानेन पार्वति । विवाहे च समाप्ते वै ज्ञातयः स्वेषु वेश्मसु ॥ ४ ॥ गताः सर्वे विशालाक्षि ययाचे भगिनी तदा । ताटङ्कं स्वर्णरत्नाढ्यं भ्रातृपत्नी प्रकोपिता ॥ ५ ॥ श्रुत्वेर्ष्यया सवत्सा तु ततो याता स्ववेश्मनि । स्त्रीस्वभावाच्च देवेशि सा मृता भगिनी गृहे ॥ ६ ॥ तदुद्देशेन देवेशि शरीरं निशि साऽत्यजत् । ततो बहुदिने याते तस्य मृत्युरभूत्तदा ॥ ७ ॥

---

श्रीशिवजी बोले—हे महादेवि ! यवनदेशमें एक जयदेव नामक ब्राह्मण गुणी, शीलवान् और वेदको जाननेवाला रहता था ॥ १ ॥ इसकी स्त्री शीलवती नारियोमें सुशीला और शीलरूपिणी थी, उसके तीन पुत्र गुणी और ज्ञाता हुए ॥ २ ॥ सम्पूर्ण पुत्र गुणी और वेदवेदांगके पारगामी थे, इसके बडे बेटेके विवाहमें इसकी बहन आई ॥ ३ ॥ हे पार्वति ! तब बहुत मानसे बहनका आदर किया फिर विवाह होजानेपर सब ज्ञातिके मनुष्य अपने अपने घरको चलेगये, हे विशालाक्षि ! उस समय इस बहनने रत्नोंसे जडा हुआ एक सोनेका ताटंक ( कानका आभूषण ) मांगा तब भाईकी स्त्री क्रोधित हुई ॥ ४ ॥ ५ ॥ हे देवेशि ! तो इसकी बहन ईर्षाके वचन भाभीके मुखसे सुन पुत्रसमेत अपने घरको चली गई और वहां जाकर मरगई ॥ ६ ॥ हे देवेशि ! भाभीके कटु बचनोंसेही इसकी बहनने रात्रिमें शरीर छोड दिया अनन्तर चिरकालके पीछे

पत्नी तस्य सती जाता सत्यलोको ह्यभूत्तदा । वर्षकोटित्रयं देवि सत्यलोकेऽवसत्पुनः ॥ ८ ॥ मर्त्यलोके मनुष्यत्वं लभेत् पुण्यक्षये सति । धनधान्यसमायुक्तो विद्यावाञ्छास्त्रपारगः ॥९॥ कृतं सर्वं पुराऽशुद्धं भगिनीवधकारणात् । पुत्रो न जायते देवि कन्याजन्मनि संशयः ॥ १० ॥ शरीरे सततं दुःखं मध्ये तस्य प्रजायते । काकवन्ध्या भवेद्भार्या मृतवत्सा सुदुःखिता ॥११॥ अस्य शान्तिं प्रवक्ष्यामि तत्सर्वं शृणु पार्वति । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ १२ ॥ वापीकूपतडागानां जीर्णोद्धारं प्रयत्नतः । वाटिकां पथिमध्ये तु सिक्तां वै शीतवारिणा ॥१३॥ गायत्रीजातवेदोभ्यां जपं वै कारयेत् ततः । लक्षद्वयं विशालाक्षि हवनं तद्दशांशतः । तर्पणं मार्जनं तद्वद्गोदानं विधिवत्ततः ॥ १४ ॥ एवं कृते वरारोहे तस्य पुत्रः प्रजायते । गुणज्ञः सर्ववस्तूनां साधूनां सम्मतस्तथा ॥ १५ ॥

---

इसकी मृत्यु हो गई ॥ ७ ॥ हे देवि ! तब इसकी स्त्री सती हो गई, सतीके प्रभावसे तीन करोड वर्षतक इसने सत्यलोकमें वास किया ॥ ८ ॥ फिर पुण्य क्षीण होनेपर धनधान्यसे युक्त विद्वान् और शास्त्री होकर मनुष्ययोनिको प्राप्त हुआ ॥ ९ ॥ हे देवि ! पूर्वजन्ममें बहनके मारनेके कारण इसके पुत्र नहीं उत्पन्न होता है परन्तु कन्या उत्पन्न होती है ॥ १० ॥ इसके शरीरमें निरंतर दुःख होता है इसकी स्त्री काकवंध्या और मृतवत्सात्वदोषसे दुःखी रहती है ॥११॥ हे पार्वति ! अब इसकी शांतिको कहता हूँ तुम सुनो-प्रथम तो यह अपने घरका छठा भाग पुण्यकार्यमें लगावै ॥ १२ ॥ यत्नके साथ टूटेफूटे कुँए, बावडी और तालावोंको सुधरा देवे, मार्गमें एक शीतल जलसे सींचवाकर बगीचा लगवावै ॥ १३ ॥ फिर गायत्री, 'जातवेदसे' इन मंत्रोंका दो लाख जप करावे जपका दशांश हवन, हवनका दशांश मार्जन और मार्जनका दशांश तर्पण करावे अनंतर विधिपूर्वक गोदान करै ॥ १४ ॥ हे वरारोहे ! ऐसा करनेसे सब वस्तुओंके गुणको जाननेवाला, साधुसम्मत पुत्र उत्पन्न होता है॥१५॥

स्वर्णदानं विशालाक्षि पलपञ्चमितं तथा। ब्राह्मणाय ततो दद्यात् पूजयेद्युवतीं ततः ॥ १६ ॥ वस्त्रालङ्कारसिन्दूरैर्गन्धाद्यैः सुमनोहरैः। ताटङ्कमुद्रिकाभिश्च गन्धमाल्यैस्तथैव च ॥ १७ ॥ सर्वं पापं क्षयं याति व्याधिनाशो भवेद् ध्रुवम् ॥ १८ ॥ ब्राह्मणीं पार्वतीरूपां ब्राह्मणं शिवरूपिणम् । भोजयेद्विविधैश्चान्नैर्मोदकैः शतसंख्यकैः ॥ १९ ॥ काकवन्ध्या लभेत्पुत्रं मृतवत्सा च पुत्रिणी। कन्यकाजननी या तु पुत्रवत्यपि जायते ॥ २० ॥ एवं न क्रियते देवि सप्तजन्मस्वपुत्रकः ॥ २१ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराषाढानक्षत्रतृतीयचरणप्रायश्चित्त-कथनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

---

## अथ सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

शिव उवाच ॥ गुर्जरे नगरे देवि द्विजो वसति ज्ञानवान् ।
बलभद्रः समाख्यातो वेदान्वै पाठयंस्ततः ॥ १ ॥

---

हे विशालाक्षि ! फिर बीस तोले सुवर्ण दान करके ब्राह्मणोंको दे और युवतीका पूजन करै ॥ १६ ॥ वस्त्र, आभूषण, सिन्दूर, गंध, पुष्प, गंधमाला और ताटंक ( कानका आभूषण ) आदिसे युवतीका पूजन करै ॥ १७ ॥ तो सम्पूर्ण पाप और व्याधियें शीघ्र नष्ट होजाती हैं ॥ १८ ॥ पार्वतीरूपी ब्राह्मणी और शिवरूपी ब्राह्मणको नाना प्रकारके अन्न और सौ लड्डुओसे भोजन करावै ॥ १९ ॥ ऐसा करनेसे काकवंध्या और मृतवत्सा नारी शीघ्र पुत्रवती होती है और कन्या उत्पन्न करनेवाली स्त्रीभी पुत्रको प्राप्त करतीहै ॥२०॥ हे देवि ! ऐसा न करनेसे सात जन्मोंतक पुत्रहीन रहता है ॥ २१ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराषाढानक्षत्रतृतीयचरण-प्रायश्चित्तकथनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

---

शिवजी बोले—हे देवि ! गुर्जरनगरमे एक वेदोंको पढानेवाला बलभद्र-

ऋग्वेदं च यजुर्वेदं सामवेदमथर्वणम् । पठनं चैव कुरुते चतुर्वेदी द्विजोत्तमः ॥ २ ॥ एकस्मिन् दिवसे देवि कश्चिद्देशे मृतः खलु । भोजनं तेन वै तत्र संस्कारं वै विना कृतम् ॥ ३ ॥ म्लेच्छद्रव्यं च स्वीकृत्य भुक्तं पुत्रेण संयुतम् । पत्न्या सह वरारोहे ततो वृद्धं वयो गतम् ॥ ४ ॥ मरणं तस्य वै जातं शंकेश्वरपुरे तदा । यमाज्ञया तदा देवि यमदूतैरितस्ततः ॥ ५ ॥ नरका दर्शितास्तस्य मर्त्यलोके ततोऽभवत् । कुक्कुटत्वं विशालाक्षि काकः पारावतस्ततः ॥ ६ ॥ मानुषत्वं पुनर्लेभे शुभे देवि कुले महत् । स पंडितो यदा विद्वान् ज्ञातिधर्मविचक्षणः ॥ ७ ॥ पूर्वजन्मनि देवेशि म्लेच्छान्नभोजनं कृतम् । तेन पापेन भो देवि पुत्रः कन्या न जायते ॥ ८ ॥ प्रेतान्नं भुक्तमज्ञानात्संस्कारो न कृतः पुरा । तेन पापेन भो देवि शरीरे रोगसम्भवः ॥ ९ ॥

---

नामक ज्ञानवान् ब्राह्मण रहता था ॥ १ ॥ और स्वयं भी ऋग्, यजु, साम एवं अथर्ववेदका पाठ करता था इसी कारणसे ब्राह्मणोंमें श्रेष्ठ चतुर्वेदी कहाता था ॥ २ ॥ हे देवि ! एक दिन देशमे कोई मरगया तब इसने उसके यहां विना संस्कार हुएही भोजन कर लिया ॥ ३ ॥ हे वरारोहे ! और इसने म्लेच्छसे धन लेके स्त्रीपुत्रसमेत भोगा पीछे वृद्धावस्थाको प्राप्त हुआ ॥ ४ ॥ तब शंकेश्वरपुरमें इसकी मृत्यु होगई, यमराजकी आज्ञासे यमदूतोंने इसे जहाँ तहाँ नरकमें गिराय दिया फिर हे विशालाक्षि ! मृत्युलोकमें मुरगेकी योनिको प्राप्त होकर काक और कबूतरकी योनिको प्राप्त हुआ ॥ ५ ॥ ६ ॥ हे देवि ! अनन्तर सुंदर महान् कुलमें पंडित, विद्वान् और ज्ञातिधर्ममें निपुण होकर मनुष्ययोनिको प्राप्त हुआ है ॥ ७ ॥ हे देवेशि ! हे देवि ! पूर्वजन्ममें जो इसने म्लेच्छका अन्न भोजन किया था तिस पापसे इसके पुत्र कन्या नही होते है॥८॥ हे देवि ! इसने विना संस्कारके प्रेतके अन्नको खाया था तिस पापसे इसके

अस्य शान्तिं शृणुष्वादौ पूर्वपापप्रणाशिनीम् । गृहवित्ताष्टमं भागं ब्राह्मणाय प्रकल्पयेत् ॥ १० ॥ गायत्रीमूलमंत्रेण दशायुतजपं ततः । हवनं तद्दशांशेन मार्जनं तर्पणं तथा ॥ ११ ॥ दशवर्णां ततो दद्याच्छय्यादानं विशेषतः ॥ १२ ॥ कूष्माण्डं नारिकेलं च पञ्चरत्नसमन्वितम् । गङ्गामध्ये प्रदातव्यं पूर्वपापप्रणाशनम् ॥ १३ ॥ एवं कृते वरारोहे शीघ्रं पुत्रः प्रजायते । व्याधयः संक्षयं यांति काकवन्ध्या लभेत्सुतम् ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराषाढानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

## अथाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

### श्रवणनक्षत्रफलम् ।

श्रीशिव उवाच ॥ यवनस्य महादेशे मारुते नगरे शुभे ।
गौतमो नाम विख्यातो ब्राह्मणो वेदपारगः ॥ १ ॥

---

शरीरमें रोग उत्पन्न होते हैं ॥ ९ ॥ अब इसके पूर्वपापोंको नष्ट करनेवाली शान्तिको कहता हूँ तुम सुनो—प्रथम यह अपने घरका आठवां भाग ब्राह्मणको दान करै ॥ १० ॥ अनंतर गायत्रीमूलमंत्रका एक लाख जप करावै और जपका दशांश हवन, मार्जन, तर्पणादि करावै ॥ ११ ॥ फिर दशवर्णवाली गौ और विशेष करके शय्याका दान करै ॥ १२ ॥ पूर्वजन्मके पाप दूर होनेके निमित्त पंचरत्नके सहित नारियल और कूष्मांडको गंगाजीके बीचमें स्थित हो दान करै ॥ १३ ॥ हे वरारोहे ! ऐसा करनेसे शीघ्र पुत्र प्राप्त होता है, समस्त व्याधियें नष्ट होजाती है और काकवंध्या नारी सुतको प्राप्त करती है ॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराषाढानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

श्रीशिवजी बोले—हे देवि ! यवनके विशाल देशमें सुन्दर मारुतनामक नग-

तस्य भार्या विशालाक्षि मालिनी मातृपालिनी । धनं च बहु संगृह्य म्लेच्छसेवारतो हि सः ॥ २ ॥ तस्य मित्रं द्विजः कश्चित्तपस्वी सत्यवाक्छुचिः । आगतस्तस्य निकटे प्रेम्णा तत्राकरोत्तपः ॥ ३ ॥ वर्षमेकं ततो यातं पुनः काश्यां गतो हि सः । स्वर्णरत्नं महादेवि गौतमाय समर्पितम् ॥ ४ ॥ रक्षार्थं तेन द्रव्यं च गृहीतं गौतमेन च । वाराणस्यां ततो गत्वा तपस्वी प्राणमत्यजत् ॥ ५ ॥ गौतमेन स्वद्रव्यं तु स्थापितं भूमिमध्यतः । तद्द्रव्यं ब्राह्मणस्यैव पुत्रदारेण संयुतम् ॥ ६ ॥ विक्रीय भक्षितं रत्नं बहुवर्षं गतं शिवे । गौतमस्य ततो मृत्युर्वृद्धे जाते वरानने ॥ ७ ॥ गन्धर्वस्य ततो लोकं विंशतिं वै सहस्रकम् । वर्षं भुक्तं विशालाक्षि गन्धर्वैः सह किन्नरैः ॥ ८ ॥ ततः पुण्यक्षये जाते हंसयोनिस्ततोऽभवत् । मृगयोनिं ततो भुक्त्वा मानुषत्वं ततोऽलभत् ॥ ९ ॥

---

रमें एक गौतमनामसे विख्यात वेदवेदांगको जाननेवाला ब्राह्मण रहता था॥१॥ हे विशालाक्षि ! इसकी मालिनीनामक स्त्री माताके कुलको पालनेवाली थी, इस गौतमने बहुत धन संचय किया और म्लेच्छकी सेवा करने लगा ॥ २ ॥ गौतमका मित्र एक तपस्वी, सत्यवादी, पवित्र ब्राह्मण प्रेमभावसे गौतमके समीप आया और तप करने लगा ॥ ३ ॥ हे महादेवि ! वहाँ इस तपस्वीने एक वर्षतक तप किया फिर वह अपना सोना रत्न आदि गौतमको देकर काशीको चलागया ॥ ४ ॥ गौतमनेभी उसका धन रक्षाके लिये रखलिया काशीजीमें जाकर उस तपस्वीने अपने प्राण छोड दिये ॥ ५ ॥ गौतमने अपना धन तो पृथ्वीमें गाड दिया और उस तपस्वीका धन स्त्रीपुत्रके साथ ॥ ६ ॥ हे शिवे ! बेचकर खाने लगा, हे वरानने ! इस भांति चिरकालके पीछे वृद्ध होकर गौतम मरगया ॥ ७ ॥ हे विशालाक्षि ! पीछे गौतम ब्राह्मणने गंधर्व किन्नरोंसमेत बीस हजारवर्षतक गन्धर्वलोकमें वास किया ॥ ८ ॥ जब पुण्य

स भाग्यवान्महावीरः पुण्याचारे सदा मतिः ॥ १० ॥ पूर्वजन्मनि देवेशि मित्रद्रव्यं च भक्षितम् । न दत्तं यद्विशालाक्षि तद्दोषेण मृतार्भकः ॥ ११ ॥ वंध्या भवति वै नारी काकवन्ध्या च जायते । रोगयुक्तो भवेद्देहो ज्वराश्च विविधास्तथा ॥ १२ ॥ अस्य शांतिं प्रवक्ष्यामि शृणु देवि सुशोभने । वापीकूपतडागानां जीर्णोद्धारं च कारयेत् ॥ १३ ॥ गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् । गायत्रीमूलमंत्रेण दशायुतजपं ततः । हवनं तद्दशांशेन तर्पणं मार्जनं तथा ॥ १४ ॥ गामेकां तरुणीं शुभ्रां कांस्यदोहां सवत्सकाम् । सतीं सवस्त्रां विप्राय दद्याद्वेदविदे ततः ॥ १५ ॥ ब्राह्मणान्भोजयेच्चैव यथाशक्त्या तु दक्षिणाम् । ज्ञातिभिः सह भुंजीत ततो दानं तु कारयेत् ॥ १६ ॥ पुराणश्रवणं देवि चण्डिकाचरितानि तु । अन्नदानं च भो देवि घटदानं विशेषतः ॥ १७ ॥

---

क्षीण हुआ तब हंसयोनि और मृगयोनिको भोगकर फिर मनुष्ययोनिको प्राप्त हुआ ॥ ९ ॥ यहां यह भाग्यवान् महावीर और पुण्याचारमें सदा मति रखनेवाला हुआ ॥ १० ॥ हे देवेशि ! हे विशालाक्षि ! पूर्वजन्ममे इसने मित्रका धन न देकर स्वयं भक्षण किया था तिस दोषसे इसके बालक मरजाते है ॥ ११ ॥ इसकी स्त्री वंध्या तथा काकवन्ध्याके दोषसे युक्त होगई है और इसका शरीर रोगसे युक्त तथा अनेक प्रकारके ज्वरोंसे पीडित रहता है॥१२॥ हे देवि ! हे सुशोभने ! अब इसके पापोंकी शान्तिको कहता हूं तुम सुनो—प्रथम तो यह अपने घरका छठा भाग पुण्य कार्यमें लगावै और बावडी कुआ एवं तालावोंका जीर्णोद्धार करादे, फिर गायत्रीमूलमंत्रका एक लाख जप करावै जपका दशांश हवन, मार्जन और तर्पण करावै॥१३॥१४॥अनन्तर सफेद बछडेवाली तरुण गौको वस्त्र उढाय कांसीके पात्रसहित वेदपाठी ब्राह्मणको देवै ॥१५॥ ब्राह्मणको भोजन करावै और यथाशक्ति दक्षिणा दे और कुटुम्बके मनुष्योंके साथ भोजन करे पीछे दान करै ॥१६॥ हे देवि ! पुराणका पाठ सुनै चंडिकाचरित्र

एवं कृते न सन्देहो वंशवृद्धिर्भविष्यति ।
रोगाः सर्वे क्षयं यान्ति सुखानि विविधानि च ॥ १८ ॥

इति श्रीकर्मविपाकसंहितायां श्रवणनक्षत्रप्रथमचरणप्रायश्चित्त-
कथनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

## अथैकोननवतितमोऽध्यायः ॥ ८९ ॥

श्रीशिव उवाच ॥ गान्धारदेशे वै सुभ्रूर्गान्धारस्य पुरे शुभे । वसन्ति तत्र बहवो जनाः पण्योपजीविनः ॥ १ ॥ तन्मध्ये ब्राह्मणोऽप्येको लक्ष्मीवान् गुणवर्जितः । यवनानां महाप्रीतिः सार्धं म्लेच्छेन तिष्ठति ॥ २ ॥ ऊर्णादेस्तु वरारोहे विक्रयं कुरुते सदा। म्लेच्छान्नं भुज्यते तेन म्लेच्छभार्यासुसेवितः ॥ ३॥ एवं बहु वयो यातं ततो वै मरणं खलु । यमदूतैर्महाघोरे नरके नाम्नि दारुणे ॥ ४ ॥

---

सुनै अन्नदान और विशेष करके घटदान करै ॥ १७ ॥ ऐसा करनेसे निःसन्देह वंशकी वृद्धि होगी सम्पूर्ण रोग नष्ट होकर अनेक भांतिके सुख प्राप्त होते हैं ॥ १८ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां श्रवणनक्षत्रप्रथमचरणप्राय-
श्चित्तकथनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

श्रीशिवजी बोले-हे सुभ्रु ! गांधारदेशीय सुन्दर गांधार नगरमें बहुतसे दुकानदार रहते थे ॥ १ ॥ उनमें एक ब्राह्मण धनी और निर्गुणी था. इस ब्राह्मणकी यवनोसे प्रीति थी और यह सदा यवनोंके पासही बैठता था ॥ २॥ हे वरारोहे ! यह सदा ऊन आदिको बेचता था, नित्य म्लेच्छोंके अन्नको खाता और म्लेच्छोंके स्त्रियोंसे सेवा कराता था ॥ ३ ॥ इस भांतिसे बहुत

निक्षिप्तः स तु वै देवि षष्टिवर्षसहस्रकम् । भुक्तं सुदुःसहं कर्म विविधं नारकं फलम् ॥ ५ ॥ नरकान्निःसृतो देवि वृकयोनि-रभूत्पुरा । रासभस्य ततो योनिमृक्षत्वं जायते पुनः ॥ ६ ॥ मानुषत्वं पुनर्लेभे मध्यदेशे सुरेश्वरि ॥ ७ ॥ पूर्वजन्मनि म्लेच्छान्नं भुक्तं पुत्रेण वै सह । अतो वंशस्य विच्छेदो व्याधीनां चोद्भवस्तथा ॥ ८ ॥ अस्य दोषस्य वै शान्तिं शृणु मे परमे-श्वरि । गायत्रीमूलमन्त्रेण लक्षजाप्यं वरानने । हवनं तद्दशांशेन तर्पणं मार्जनं तथा ॥ ९ ॥ सवृषं पञ्चगोदानं वस्त्रदानं विशेषतः । सहस्रघटदानं च गोदानं च सुरेश्वरि ॥ १० ॥ एवं कृते न सन्देहो वंशवृद्धिर्भविष्यति । रोगा विनाशमायान्ति नात्र कार्या विचारणा ॥ ११ ॥

इति श्रीकर्मविपाकसंहितायां श्रवणनक्षत्रद्वितीयचरणप्रायश्चित्त-कथनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥

---

दिनोंके पीछे इसकी मृत्यु होगई, तब यमदूतोंने महाघोर दारुण नामक नरकमें ॥ ४ ॥ हे देवि ! साठ हजार वर्षोंके लिये डाल दिया वहां इसने दुःसह कर्मफलको भोगा ॥ ५ ॥ हे देवि ! नरकसे निकलनेपर भेडियेकी योनि मिली फिर गधेकी और रीछकी योनिको भोगा ॥ ६ ॥ हे सुरेश्वरि ! फिर मध्यदेशमें मनुष्ययोनिको प्राप्त हुआ ॥ ७ ॥ पूर्वजन्ममें म्लेच्छका अन्न पुत्रसहित खाया था इससे इसका वंश हीन हुआ और व्याधियें उत्पन्न होती हैं ॥ ८ ॥ हे परमेश्वरि ! अब इसके पापोंकी शान्तिको तुम मुझसे सुनो— हे वरानने ! प्रथम यह गायत्रीके मंत्रका एक लाख जप करावै जपका दशांश हवन तर्पण और मार्जन करावै ॥ ९ ॥ हे सुरेश्वरि ! बैलसमेत पांच गौओंका दान करै, विशेष करके वस्त्रोंका दान करै फिर हजार घटदान करके गौदान करै ॥ १० ॥ ऐसा करनेसे निःसंदेह वंशकी वृद्धि होगी और समस्त रोग नष्ट हो जायँगे इसमें कुछ विचार नहीं करना चाहिये ॥ ११ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां श्रवणनक्षत्रद्वितीयचरण-प्रायश्चित्तकथनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥

## अथ नवतितमोऽध्यायः ॥ ९० ॥

शिव उवाच ॥ काश्मीरनगरे देवि ब्राह्मणो वसति प्रिये । खण्डशर्मेति विख्यातो गङ्गा भार्याऽतिकर्कशा ॥ १ ॥ पतिवाक्यं न सा कुर्याद्विक्रयं कुरुते सदा । घृतं तैलं च देवेशि दधि तक्रं पुनर्गुडम् ॥ २ ॥ अश्वं च वृषभं चैव चामरं धातुसंयुतम् । प्रत्यहं विक्रयं कृत्वा व्ययं कुर्याद्दिनेदिने ॥ ३ ॥ एवं सर्वं वयो यातं वृद्धे सति वरानने । मरणं तस्य वै जातं ब्राह्मणस्य तदा शिवे ॥ ४ ॥ यमाज्ञया याम्यदूतैर्नरके कर्दमे तथा । निक्षिप्तः षष्टिसाहस्रं भुक्त्वा वै यातनां तथा ॥ ५ ॥ नरकान्निःसृतो देवि वृकयोनिस्ततोऽभवत् । रासभस्य पुनर्योनिर्मेषयोनिस्ततोऽभवत् ॥ ६ ॥ मानुषत्वं पुनर्लेभे मध्यदेशे वरानने । धनधान्यसमायुक्तः पुत्रकन्याविवर्जितः ॥ ७ ॥ पुनर्विवाहिता सा तु पूर्वजन्मफलाच्छुभे । शरीरे सततं रोगो वायोः सञ्जायते शिवे ॥ ८ ॥

---

शिवजी बोले–हे देवि ! हे प्रिये ! काश्मीरनगरमे खंडशर्मानामक एक ब्राह्मण रहता था और कठोर स्वभाववाली गंगानामसे विख्यात उसकी स्त्री थी ॥ १ ॥ हे देवेशि ! यह अपने पतिके वचनको न मानकर सदा घी, तेल, दही, मट्ठा और गुड बेचती थी ॥ २ ॥ इधर खंडशर्मा भी घोडा, बैल, चँवर और धातुओंको प्रतिदिन बेचकर अपना निर्वाह करता था ॥ ३ ॥ हे शिवे ! इस भांति सब आयु बीती वृद्धावस्थाको प्राप्त होकर खंडशर्माकी मृत्यु हो गई ॥ ४ ॥ तब यमराजकी आज्ञासे यमदूतोंने कर्दम नामक नरकमें डाल दिया, वहाँ साठ हजार वर्षतक नरककी पीडा भोगी ॥ ५ ॥ हे देवि ! जब नरकसे निकला तब भेडियेकी योनि मिली फिर गधे और बकरेकी योनिको प्राप्त हुआ ॥ ६ ॥ हे वरानने ! फिर धनधान्यसे युक्त और पुत्रकन्याओंसे रहित होकर मध्यदेशमे मनुष्ययोनिको प्राप्त हुआ ॥ ७ ॥ हे शुभे ! हे शिवे ! पूर्वजन्मके फलसे इसे पूर्वजन्मवाली ही स्त्री मिली, अब

ब्राह्मणस्य स्वयं धर्मो यतस्त्यक्तः पुरा शुभे । अतः पुत्रविहीनो-ऽयं मृतवत्सत्वमाप्तवान् ॥ ९ ॥ अस्य शान्तिमहं वक्ष्ये शृणु देवि सुशोभने । गृहवित्तषडंशं च ब्राह्मणाय समर्पयेत् ॥ १० ॥ गायत्रीं चायुतं जप्त्वा मूलमन्त्रं शिवस्य तु । षडक्षरं सप्रणवं लक्षकं च वरानने ॥ ११ ॥ हवनं तद्दशांशेन मार्जनं तर्पणं तथा । ब्राह्मणान् भोजयेत्सम्यग्घविषा पायसेन तु ॥ १२ ॥ पंचाश-त्संख्यया देवि यथाशक्त्या तु दक्षिणाम् । प्रयागे माघमासे तु स्नायाद्भार्यासमन्वितः ॥ १३ ॥ कूष्माण्डं नारिकेलं च पञ्च-रत्नसमन्वितम् । गंगामध्ये प्रदातव्यं विधिपूर्वं वरानने ॥ १४ ॥ एवं कृते न सन्देहो वंशवृद्धिर्भवेदनु । रोगाः सर्वे क्षयं यान्ति वन्ध्या भवति पुत्रिणी ॥ १५ ॥

इति श्रीकर्मविपाकसंहितायां श्रवणनक्षत्रतृतीयचरणप्रायश्चित्त-कथनं नाम नवतितमोऽध्यायः ॥ ९० ॥

---

उसके शरीरमें निरन्तर वातरोग रहता है ॥ ८ ॥ हे शुभे ! इसने ब्राह्मण होकर अपने धर्मको त्यागा था इस कारणसे यह पुत्रहीन और इसकी स्त्री मृतवत्सा हुई ॥ ९ ॥ हे देवि ! हे सुशोभने ! अब इसके पापोंकी शान्तिको कहता हूँ तुम सुनो—प्रथम यह अपने घरका आठवां भाग ब्राह्मणको देदे ॥ १० ॥ हे वरानने ! गायत्रीमंत्रका दश हजार और शिवके षडक्षरमंत्र ( ॐ नमः शिवाय ) का एक लाख जप करावै ॥ ११ ॥ जपका दशांश हवन, मार्जन और तर्पण करावै, घृत और खीरसे पचास ब्राह्मणोंको भोजन कराकर अपनी शक्तिके अनुसार दक्षिणा दे फिर स्त्रीसमेत माघके महीनेमें प्रयागराजमें स्नान करै ॥ १२ ॥ १३ ॥ हे वरानने ! पंचरत्नके साथ कूष्मांड और नारियलको गंगाजीके बीचमें स्थित होकर विधिपूर्वक दान करै ॥ १४ ॥ ऐसा करनेसे

## अथैकनवतितमोऽध्यायः ॥ ९१ ॥

श्रीशिव उवाच ॥ अटकस्य प्रतीच्यां तु यादवं नाम वै पुरम्। वसन्ति बहवो देवि जनाः कर्मविचक्षणाः ॥ १ ॥ तन्मध्ये ब्राह्मणोऽप्येकः सिद्धलाल इति श्रुतः। तस्य भार्या विशालाक्षि देवी नाम सदाशिवे ॥ २ ॥ पतिव्रता गुणोपेता मिष्टवाक्यप्रवादिनी। सिद्धलालो महाचोरश्चौर्यवृत्तिरतः सदा ॥ ३ ॥ दारपुत्रादिभृत्यांश्च चौर्यं कृत्वा प्रपोषयन्। एवं सर्वं वयो यातं ततो वै मरणं भवेत् ॥ ४ ॥ तस्य भार्या सती जाता सत्यलोकोऽभवत्तदा। सत्यलोके वरारोहे सततं विविधं सुखम् ॥५॥ भुक्तं पूर्वकृतं पुण्यं ततः पुण्यक्षये सति। मानुषत्वं पुनर्जन्म दुर्लभं सर्वदेहिनाम् ॥ ६ ॥

---

निःसन्देह वंशकी वृद्धि होती है, संपूर्ण रोग नष्ट हो जाते हैं और वंध्यानारी पुत्रको प्राप्त करती है ॥ १५ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां श्रवणनक्षत्रतृतीयचरण-
प्रायश्चित्तकथनं नाम नवतितमोऽध्यायः ॥ ९० ॥

---

शिवजी बोले-हे देवि ! अटकके पश्चिम यादवपुरनगरमें बहुतसे चतुर मनुष्य बसते थे ॥ १ ॥ हे विशालाक्षि ! हे सदाशिवे ! उनमें एक सिद्धलाल नामक ब्राह्मण था और उसकी स्त्रीका नाम देवी था ॥ २ ॥ देवी पतिव्रता, गुणी, मीठी और प्रिय बोलनेवाली थी, सिद्धलाल महाचोर और चोरी करनेमें सदा तत्पर रहता था ॥ ३ ॥ सिद्धलाल चोरी करके ही स्त्रीपुत्रादि सेवकोंका पालन पोषण करता था, इसी प्रकार उसकी आयु बीत जानेपर मृत्यु हो गई ॥ ४ ॥ हे वरारोहे ! तब सिद्धलालकी स्त्री अपने पतिके साथ सती हो गई इस कारण सत्यलोकमें जाकर विविध प्रकारके निरन्तर सुख भोगे,

धनधान्येन संयुक्तः कन्यापुत्रविवर्जितः । ब्राह्मण्यं च यत-स्त्यक्त्वा शूद्रकर्म समाचरत् ॥ ७ ॥ परद्रव्यं हृतं देवि तस्माद्व्याधिश्च जायते । अस्य शान्तिं प्रवक्ष्यामि यत्कृतं पूर्वजन्मनि ॥ ८ ॥ गृहवित्ताष्टमं भागं पुण्यकार्यं च कारयेत् । दशवर्णां च गां दद्यात् पूर्वपापविशुद्धये ॥ ९ ॥ शय्यादानं ततः कुर्याद्व्रतमेकादशीं शुभाम् ॥ १० ॥ गायत्रीमूलमंत्रेण विष्णुमंत्रं तथैव च । लक्षजाप्यं प्रयत्नेन मूले अश्वत्थबिल्वके ॥ ११ ॥ दशांशं हवनं कुर्यात्तर्पणं मार्जनं तथा । विप्राणां भोजनं देवि घटदानं विशेषतः ॥ १२ ॥ एवं कृते न सन्देहो वंशो भवति नान्यथा । व्याधयः संक्षयं यान्ति मम वाक्यं न चान्यथा ॥ १३

इति श्रीकर्मविपाकसंहितायां श्रवणनक्षत्रचतुर्थचरणप्रायश्चित्त-कथनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥

---

पूर्वजन्मके पुण्य क्षीण होनेपर समस्त देहधारियोंमें दुर्लभ ब्राह्मणकुलमें जन्म लिया ॥ ५ ॥ ६ ॥ यह धनधान्यसे युक्त पुत्रकन्याओंसे रहित होकर जिस कारण ब्राह्मणके कर्मको छोड शूद्रकर्मको करने लगा ॥७॥ हे देवि ! तथा इसने पराये धनको हरा था अतएव शरीरमें व्याधियें उत्पन्न होती हैं, अब इसके पूर्वजन्ममे किये पापोंकी शान्तिको कहता हूँ ॥ ८ ॥ प्रथम यह अपने पूर्व किये पापोंकी शुद्धिके लिये घरके धनके आठवें भागको पुण्यकार्यमें लगावै और दशवर्णवाली गौका दान करै ॥ ९ ॥ अनन्तर शय्यादान करके एकादशीका व्रत करै ॥ १० ॥ गायत्रीमूलमंत्रका और विष्णुमंत्रका यत्नके साथ पीपल और बेलके नीचे बैठकर एक लाख जप करै ॥ ११ ॥ जपका दशांश हवन, तर्पण और मार्जन करावै हे देवि ! फिर ब्राह्मणोंको भोजन कराकर विशेष करके घटदान करै ॥ १२ ॥ ऐसा करनेसे निःसन्देह वंशकी वृद्धि

## अथ द्विनवतितमोऽध्यायः ॥ ९२ ॥

धनिष्ठानक्षत्रफलम् ।

शिव उवाच ॥ देशे पंचनदे देवि गंगानाम्नी पुरी शुभा । वसन्ति सर्वे वै वर्णा ब्राह्मणाः क्षत्रिया विशः ॥ १ ॥ स्वकर्मनिरताः सर्वे वर्णाचारसमाश्रिताः । तन्मध्ये ब्राह्मणोऽप्येकः कृषिकर्मरतः सदा ॥ २ ॥ एकस्मिन्समये देवि सिद्धमन्नं च तैः कृतम् । रात्रिस्तत्र समायाता क्षेत्रे चान्नं तदा कृतम् ॥ ३ ॥ भागिनेयस्तदा रात्रौ चतुर्थांशमचूचुरत् । उषःकाले ततो जाते भागिनेयस्य वै तदा ॥ ४ ॥ मातुलेन तदा देवि यष्टिनाऽस्य कृतो वधः । ततो बहुगते काले तस्य विप्रस्य पंचता ॥ ५ ॥ यमदूतैर्महादेवि निक्षिप्तो नरकार्णवे । अष्टाशीतिसहस्राणि वर्षाणि च सदाशिवे ॥ ६ ॥

---

होगी अन्यथा नहीं और समस्त व्याधियें नष्ट हो जाती हैं, यह मेरा सत्य वचन कभी मिथ्या नहीं हो सकता ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां श्रवणनक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥

---

शिवजी बोले—हे देवि ! पंचनददेशमें सुन्दर गंगानामक नगरी थी उसमें ब्राह्मण, क्षत्रिय, वैश्य आदि सभी वर्ण वसते थे ॥ १ ॥ वहांके निवासी वर्णके आचारसे अपने अपने कर्ममें तत्पर थे उनमे एक ब्राह्मण सदा खेती लोग करता था ॥ २ ॥ हे देवि ! एक समय इसने अपना भोजन रात्रि होजानेपर क्षेत्रमें बनाया ॥ ३ ॥ उस अन्नके चौथे भागको इसके भानजेने चुरालिया प्रातःकाल होनेपर इसने अपने भानजेको ॥ ४ ॥ हे देवि ! लाठीसे मारडाला फिर चिरकालके उपरान्त इस ब्राह्मणकी मृत्यु हो गई ॥ ५ ॥ हे महादेवि ! हे सदाशिवे ! यमदूतोंने इसे अस्सी हजार वर्षोंके लिये नरकरूपी समुद्रमें

भुज्यते विविधं कष्टं नरकं चैव दारुणम् । नरकान्निःसृतो देवि मार्जारत्वं भवेत्किल ॥ ७ ॥ व्याघ्रस्य च पुनर्योनिः कुक्कुटत्वं ततोऽभवत् । पुनर्मानुषयोनिश्च धनधान्यसमन्विता ॥ ८ ॥ स प्रवीणो महावक्ता कुलाचाररतः सदा । पूर्वजन्मनि भो देवि भागिनेयस्य वै वधः ॥ ९ ॥ कृतो वै मन्दमतिना तत्पापेनैव तस्य हि । पुत्रो न जायते देवि व्याधिश्चैव पुनः पुनः ॥ १० ॥ अस्य शान्तिं प्रवक्ष्यामि शृणु मत्तो वरानने । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ ११ ॥ गायत्रीत्र्यंबकाभ्यां च द्यौः शांतीति मनुत्रयम् । लक्षत्रयं वरारोहे प्रजपेत्प्रयतः सुधीः ॥ १२॥ दशांशं हवनं देवि तर्पणं मार्जनं तथा । ब्राह्मणान्भोजयेच्चैव पञ्चाशच्च वरानने । हविषा पायसेनापि खंडेन मोदकेन वै ॥ १३॥ दशवर्णां ततो दद्यात्तिलधेनुं प्रदापयेत् । पञ्चपात्रप्रदानं तु पिण्डदानं च कारयेत् ॥ १४ ॥

---

डाल दिया ॥ ६ ॥ हे देवि ! यहां अनेक प्रकारके नारकीय कष्ट भोगे, जब नरकसे निकला तब बिल्लीकी योनि मिली ॥ ७ ॥ फिर व्याघ्रकी और मुरगेकी योनि मिली अनन्तर धनधान्यसे युक्त होकर मनुष्ययोनिको प्राप्त हुआ ॥ ८ ॥ यहां यह चतुर महावक्ता और अपने आचारमें तत्पर रहता है, हे देवि ! पूर्वजन्ममें इस मंदबुद्धिने जो अपने भानजेको मारडाला था तिस पापसे हे देवि ! इसके पुत्र नहीं हुआ और व्याधियें उत्पन्न हुईं ॥ ९ ॥ १० ॥ हे वरानने ! अब इसके पापोंकी शान्तिको कहता हूँ तुम सुनो—प्रथम तो यह अपने घरका छठा भाग पुण्यकाममें लगावै ॥ ११ ॥ हे वरारोहे ! प्रसन्नतासे बुद्धिमान् गायत्री, त्र्यंबक और द्यौःशान्ति इन तीन मंत्रोंका तीन लाख जप करावे ॥ १२ ॥ हे देवि ! हे वरानने ! जपका दशांश हवन, मार्जन और तर्पण करावे फिर घी, खीर, खांड और लड्डुओंसे पचास ब्राह्मणोंको भोजन करावै ॥ १३ ॥ पीछे दशवर्णवाली गौका, तिल धेनुका, पांच

भागिनेयस्य वै मूर्तिं सुवर्णरजतान्विताम् । हेम्ना दशपलेनैव सवत्सां पीठसंयुताम् ॥ १५ ॥ पूजयेत्सुविधानेन मन्त्रेणानेन वै शिवे ॥ १६ ॥ सुराराध्य जगत्स्वामिंश्चराचरगुरो हरे । मम पूर्वकृतं पापं तत्क्षमस्व दयानिधे ॥ १७ ॥ अज्ञानाद्वा प्रमादाद्वा भागिनेयवधः कृतः । तत्क्षमस्व दयापूर्ण त्र्यंबक त्रिपुरान्तक ॥ १८ ॥ ततो वै पूजयेच्चैव लोकपालान्पृथक्पृथक् । पश्चान्माषबलिं दद्यात् प्रतिमां दापयेत्ततः । ब्राह्मणाय तदा देवि पूर्वपापविशुद्धये ॥ १९ ॥ एवं कृते वरारोहे पुत्रः संजायते खलु । व्याधयः संक्षयं यान्ति न कन्या जायते खलु ॥२०॥ यदि न क्रियते देवि सप्तजन्मस्वपुत्रकः ॥ २१ ॥

इति श्रीकर्मविपाकसंहितायां धनिष्ठानक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

पात्रोंका और पिंडोंका दान करै ॥ १४ ॥ चालीस तोले सोनेकी भानजेकी मूर्त्ति बनवाकर चांदी सोनेकी चौकीपर स्थित कर हे शिवे ! इन मंत्रोंसे पूजन करै ॥ १५ ॥ १६ ॥ मंत्र—हे सुराराध्य ! हे जगत्स्वामिन् ! हे चराचरगुरो ! हे हरे ! हे दयानिधे ! मेरे पूर्वजन्ममें किये हुए पापोंको क्षमा करो ॥ १७ ॥ हे दयापूर्ण त्र्यंबक ! हे त्रिपुरान्तक ! अज्ञानसे अथवा प्रमादसे जो मैंने अपने भानजेको मारडाला उस पापको क्षमा करो ॥ १८ ॥ अनंतर पृथक् २ लोकपालोंका पूजन करै माष (उडद) की बलि दे फिर हे देवि ! पूर्वपापोंकी शान्तिके अर्थ उस पूजन की हुई प्रतिमाको ब्राह्मणके लिये दे दे ॥ १९ ॥ हे वरारोहे ! ऐसा करनेसे निश्चय पुत्र होता है और समस्त व्याधियें नष्ट होजाती हैं फिर कन्या उत्पन्न नहीं होती है ॥ २० ॥ हे देवि ! जो इस प्रायश्चित्तको न करेगा तो सात जन्मोंतक पुत्रसे हीन रहेगा ॥ २१ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां धनिष्ठानक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

## अथ त्रिनवतितमोऽध्यायः ॥ ९३ ॥

शिव उवाच ॥ पश्चिमायां महादेवि यवनस्य पुरं महत् । महानन्देति विख्यातं सर्वदेशे सुरेश्वरि ॥ १ ॥ वसन्ति बहवो म्लेच्छाः स्वविद्यायां विचक्षणाः । ब्राह्मणस्तत्र वै देवि विद्यावान्निपुणस्तथा ॥ २ ॥ तिष्ठत्यशंको नित्यं हि म्लेच्छान्नं स भुनक्त्यपि । संध्यया रहितो विप्रः पिशुनो दुर्मतिः शठः ॥ ३॥ सञ्चितं बहुसाहस्रं स्वर्णरत्नगजादिकम् । ततो बहुदिने याते तस्य मृत्युरभूत्पुरा ॥ ४ ॥ सर्पेण दष्टो देवेशि पंचके निर्जलेऽपि वा । यमदूतैर्महादेवि यमाज्ञां गृह्य वै द्विजः ॥ ५ ॥ रौरवे नरके क्षिप्तो महाकष्टं स्म भुज्यते । षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ ६ ॥ नरकान्निःसृतो देवि ग्राहयोनिरभूत्पुरा । पुनः कच्छपयोनिं च मानुषत्वं ततोऽलभत् ॥ ७ ॥

---

श्रीशिवजी बोले—हे महादेवि ! हे सुरेश्वरि ! पश्चिममें महानंदनामक यवनका एक बडा विख्यात पुर था ॥ १ ॥ अपनी विद्यामें चतुर बहुतसे म्लेच्छ वहां रहते थे वहांपर हे देवि ! एक विद्वान् चतुर ब्राह्मण रहता था. यह निःशंक होकर सदा म्लेच्छके अन्नको भोजन करता और संध्योपासन न करके चुगली एवं अपनी दुर्मतिसे शठता करता था ॥ २ ॥ ३ ॥ इस ब्राह्मणने बहुत धन रत्न और हाथी आदिका संग्रह किया फिर बहुत दिनोंके पीछे इसकी मृत्यु हो गई ॥ ४ ॥ हे देवेशि ! हे महादेवि ! यह सर्पके द्वारा पंचकोमें निर्जल देशमें मरा, तब यमराजकी आज्ञासे यमदूतोंने इस ब्राह्मणको पकडकर ॥ ५ ॥ रौरवनामक नरकमें डाल दिया, वहां साठ हजार वर्षतक नरककी पीडा भोगनी पडी ॥ ६ ॥ हे देवि ! नरकसे निकलने पर ग्राहकी योनि मिली, फिर कच्छपयोनिको प्राप्त होकर मनुष्य हुआ ॥७॥

पूर्वजन्मनि भो देवि ब्राह्मणत्वं यतोऽत्यजत् । अपुत्रत्वं ततो देवि कन्यका नापि जायते ॥ ८ ॥ म्लेच्छान्नं देवि भुक्तं तु सन्ध्यां वै तर्पणं विना । अतो व्याधियुतो नित्यं न सुखं लभते क्वचित् ॥ ९ ॥ शान्तिं शृणु वरारोहे पूर्वपापप्रणाशिनीम् । गृहं शुभ्रं वरारोहे धनधान्यसमन्वितम् । संचितान्नं वरारोहे ब्राह्मणाय प्रदापयेत् ॥ १० ॥ गायत्रीमूलमंत्रेण लक्षजाप्यं तु कारयेत् । जातवेदेति मंत्रेण लक्षजाप्यं तु कारयेत् ॥ ११ ॥ हवनं तद्दशांशेन मार्जनं तर्पणं तथा । त्रैमासिकव्रतं कुर्याद्व्रतं च रविसप्तमीम् ॥ १२॥ ततो गां कपिलां देवि स्वर्णवस्त्रविभूषिताम् । दद्यात्सवत्सां विधिवद्ब्राह्मणाय शिवात्मने ॥ १३ ॥ अश्वदानं च कर्तव्यं चामरं छत्रमेव च ॥ १४ ॥

---

हे देवि ! पूर्वजन्ममें इसने ब्राह्मणकर्मको छोडादिया था तिस कारण यह पुत्रकन्याओंसे हीन हुआ है ॥ ८ ॥ हे देवि ! संध्यातर्पणको छोडकर इसने म्लेच्छके अन्नको भोजन किया था इस कारण इसके शरीरमें नित्य व्याधियें उत्पन्न होती है और सुख कभी नहीं प्राप्त होता है ॥ ९ ॥ हे वरारोहे ! अब पूर्वजन्मके पापोकी नष्ट करनेवाली शान्तिको सुनो—हे वरारोहे ! यह धनधान्यसे युक्त सुंदर घरको अन्नसे पूर्ण करके ब्राह्मणको देवे ॥ १० ॥ गायत्रीके मूलमंत्रका एक लाख और जातवेदसे मंत्रका एक लाख जप करावै ॥११॥ जपका दशांश हवन, मार्जन और तर्पण करावै फिर त्रैमासिक एवं रविवारी सप्तमीका व्रत करै ॥ १२ ॥ हे देवि ! अनन्तर बछडेवाली कपिला गौको सुवर्ण और वस्त्रसे भूषित करके शिवरूपी ब्राह्मणको विधिपूर्वक दान करै॥१३॥ फिर छत्र और चँवरके साथ घोडेका दान करै ॥ १४ ॥

एवं कृते न संदेहो व्याधिनाशो भवेद् ध्रुवम् ।
पुत्रोऽपि जायते देवि वंध्यात्वं च प्रशाम्यति ॥ १५ ॥

इति श्रीकर्मविपाकसंहितायां धनिष्ठानक्षत्रद्वितीयचरणप्रायश्चित्त-कथनं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥

---

## अथ चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

शिव उवाच ॥ यत्किंचित्क्रियते कर्म वैदिकं चापि लौकिकम् । तत्तत्कर्मफलं भोग्यमिह लोके परत्र च ॥ १ ॥ सौराष्ट्रनगरे देवि क्षत्रियो वसति प्रिये । क्षात्रधर्मरतो नित्यं मृगपक्षिप्रहारकः ॥ २ ॥ एकस्मिन्समये दैवाद्वनं यातः स दुर्मतिः । मृगीं सगर्भां हतवान् बालकद्वयसंयुताम् ॥ ३ ॥ पुत्रेण भार्यया सार्धं भुक्तं तेन दुरात्मना । ततो वृद्धत्वमापन्ने तस्य मृत्युरभूत्किल ॥ ४ ॥

---

हे देवि ! ऐसा करनेसे शीघ्रही समस्त व्याधियें नष्ट होजाती है और स्त्रीका वंध्यात्वदोष दूर होकर पुत्र प्राप्त होता है ॥ १५ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां धनिष्ठानक्षत्रद्वितियचरण-प्रायश्चित्तकथनं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥

---

श्रीशिवजी बोले—हे देवि ! जो कुछ वैदिक वा लौकिक कर्म किया जाता है उस कर्मके फलको मनुष्य इस लोक और परलोकमें भोगता है ॥ १ ॥ हे देवि ! हे प्रिये ! सौराष्ट्रदेशमें एक क्षत्रिय रहता था यह अपने धर्ममें तत्पर होकर मृगपक्षियोंको मारता था ॥ २ ॥ एक समय वह दुर्मति वनमें गया और वहां जाकर इसने गर्भवती हरिणीको दो बच्चों समेत मार डाला ॥ ३ ॥ और उसको लाकर पुत्र स्त्री समेत इस दुरात्माने भक्षण किया

यमदूतैर्महादेवि निक्षिप्तो नरके तदा । षष्टिवर्षसहस्राणि भुक्त्वा नरकयातनाम् ॥ ५ ॥ नरकान्निःसृतो देवि महिषो जायते स्म सः । वराहत्वं पुनर्जातं मानुषत्वमवाप्तवान् ॥ ६ ॥ देशे पुण्यतमे देवि धनधान्यसमन्वितः । विद्यावान्गुणवान्वक्ता राजसेवासु तत्परः ॥ ७ ॥ पूर्वजन्मनि देवेशि हत्वा मृगगणान् बहून् । प्रसवोन्मुखी मृगी नष्टा मृगवृन्दसमन्विता ॥ ८ ॥ तत्पापेन महादेवि मृतवत्सत्वमाप्तवान् । शरीरे बहवो रोगा ज्वराश्चातुर्थिकास्तथा ॥९॥ शान्तिं शृणु वरारोहे मृतवत्सत्वशान्तये । गृहवित्ताष्टमं भागं पुण्यकार्ये नियोजयेत् ॥ १० ॥ गायत्रीमूलमंत्रेण लक्षजाप्यं तु कारयेत् । हवनं तद्दशांशेन मार्जनं तर्पणं ततः ॥ ११ ॥ पलपंचसुवर्णस्य मृगीं वत्ससमन्विताम् । कृत्वा समर्पयेच्चैव ब्राह्मणाय शिवात्मने ॥ १२ ॥

---

अनंतर वृद्धावस्थाको प्राप्त होकर इसकी मृत्यु हो गई ॥ ४ ॥ हे महादेवि ! तब यमदूतोने नरकमें डाल दिया, वहां साठ हजार वर्षतक नरकयातना भोगी ॥ ५ ॥ हे देवि ! जब नरकसे निकला तब महिषयोनिको प्राप्त हुआ फिर सूकरयोनिको पाकर मनुष्य हुआ ॥ ६ ॥ हे देवि ! अब धनधान्यसे युक्त, विद्वान्, गुणी, वक्ता और राजसेवक होकर पवित्रदेशमें बसता है ॥ ७ ॥ हे देवेशि ! पूर्वजन्ममें इसने बहुतसे मृगोंको और बहुतसी गर्भवती मृगियोंको मारा है ॥ ८ ॥ हे महादेवि ! तिस पापसे इसकी संतति नष्ट हो जाती है और इसके शरीरमें अनेक रोग एवं चातुर्थिकज्वर रहता है ॥ ९ ॥ हे वरारोहे ! अब संतति नष्ट होनेकी शांतिको सुनो-प्रथम यह अपने घरका आठवां भाग पुण्यकार्यमें लगावै ॥ १० ॥ गायत्रीमूलमंत्रका एक लाख जप करावै, जपका दशांश हवन, मार्जन और तर्पण करावै ॥ ११ ॥ फिर बीस तोले सुवर्णकी बच्चेसहित मृगी बनवाय शिवरूपी ब्राह्मणको देदे ॥ १२ ॥

दशवर्णां ततो दद्याच्छय्यादानं विशेषतः । वाटिकां रोपयेच्चैव
पथि कूपं तथा शिवे ॥ १३ ॥ ब्राह्मणान्भोजयेत्तद्वच्छतसंख्यान्
सुमोदकैः ॥ १४ ॥ एवं कृते वरारोहे पुत्रः संजायते खलु ।
व्याधयः संक्षयं यान्ति वन्ध्यात्वं च प्रशाम्यति ॥ १५ ॥
मृतवत्सा तु या नारी सुतं सानुग्रहं लभेत् । काकवन्ध्या पुनः
पुत्रं लभते नात्र संशयः ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायां धनिष्ठानक्षत्रतृतीयचरणप्रायश्चित्त-कथनं नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

## अथ पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

शिव उवाच ॥ मथुरादक्षिणे भागे योजनानां त्रयोपरि ।
पुरं सिद्धमिति ख्यातं वसन्ति बहवो जनाः ॥ १ ॥
छीपकारो वसत्येको धनधान्यसमन्वितः ।
बलभद्र इति ख्यातो वैष्णवो ज्ञानवल्लभः ॥ २ ॥

---

हे शिवे ! दशवर्णवाली गौका दान करै, विशेषकरके शय्याका दान करै, मार्गमें बगीचा लगावै, कुआँ खुदावै और सौ ब्राह्मणोंको लड्डुओंका भोजन करावै ॥१३॥१४॥ हे वरारोहे! ऐसा करनेसे निश्चय पुत्र होता है, समस्त व्याधियें नष्ट होजाती हैं और नारीका वंध्यात्व दोष दूर होजाता है ॥ १५ ॥ मृतवत्सा नारी अनुग्रहसहित पुत्रको प्राप्त करती है और काकवंध्या नारी भी निःसन्देह पुत्रको प्राप्त होती है ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां धनिष्ठानक्षत्रतृतीयचरण-प्रायश्चित्तकथनं नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

श्रीशिवजी बोले—हे देवि ! मथुरासे दक्षिण तीन योजनपर विख्यात सिद्ध-पुर नगरमे बहुतसे मनुष्य वसते थे ॥ १ ॥ वहीं धनधान्यसे युक्त वैष्णव,

तस्य पुत्रत्रयं जातं कनीयस्यस्य चादरः। नादरो ज्येष्ठपुत्रस्य मध्यमस्य तथैव च ॥ ३ ॥ धनं बहु चितं तेन महाशूद्रेण चानघे। भ्रातॄणां विग्रहो जातो विभागार्थे धनस्य तु ॥ ४ ॥ ब्राह्मणस्तस्य वै मित्रं विग्रहस्तेन वै श्रुतः। आगतः सोऽस्य निकटे छीपकारस्य वै शिवे ॥ ५ ॥ ब्राह्मणस्य वधो जातः शूद्राणां विग्रहे सति। सर्वं द्रव्यं कनिष्ठाय छीपकारो ददौ स्वयम् ॥ ६ ॥ एवं बहुगते काले शूद्रस्य मरणं त्वभूत्। रौरवं नरकं जातं छीपकाराय वै स्वयम् ॥ ७ ॥ लक्षवर्षं वरारोहे भुक्त्वा नरकयातनाम्। नरकान्निःसृतो देवि व्याघ्रयोनिस्ततोऽभवत् ॥८॥ ततो गृध्रस्य वै योनिं काकयोनिं ततोऽलभत्। मानुषत्वं पुनर्जातं मध्यदेशे सुरेश्वरि। धनधान्यसमायुक्तो रोगवान् पुत्र-वर्जितः ॥ ९ ॥ अस्य शान्तिं प्रवक्ष्यामि शृणु मे परमेश्वरि ॥ १० ॥

---

ज्ञानवल्लभ बलभद्रनामक एक छीपी रहता था ॥ २ ॥ इस छीपीके तीन पुत्र हुए उनमें यह केवल छोटे पुत्रकाही आदर करता बडे और मझले पुत्रका आदर नही करता था ॥ ३ ॥ हे अनघे ! इस महाशूद्रने बहुत धन संचय किया फिर भाग करनेके समय भाइयोंमें क्लेश हो गया ॥ ४ ॥ हे शिवे ! एक ब्राह्मण इस छीपीका मित्र था वह इस क्लेशको सुनकर छीपीके घर आया॥५॥ इनका क्लेश होनेपर ब्राह्मणकी मृत्यु हो गई तब छीपीने अपना समस्त धन छोटे पुत्रको देदिया॥६॥ऐसे बहुत कालके बीतनेपर छीपी मरगया और रौरवनामक नरकमें प्राप्त हुआ ॥ ७ ॥ हे वरारोहे ! हे देवि ! वहां एक लाख वर्षतक नरक भोगा फिर नरकसे निकल व्याघ्रकी योनिको प्राप्त हुआ ॥ ८ ॥ हे सुरेश्वरि ! अनन्तर गीध और काककी योनिको प्राप्त हुआ फिर मध्यदेशमें धनधान्यसे युक्त रोगी पुत्ररहित होकर मनुष्ययोनिको प्राप्त हुआ ॥ ९ ॥ हे परमेश्वरि ! अब इसके पापोंकी शांतिको कहता हूं तुम इसको सुनो ॥ १० ॥

गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् । पूर्वपाप विशुद्ध्यर्थं दशवर्णां ततो ददेत् ॥ ११ ॥ गायत्रीसूर्यमन्त्राभ्यां लक्षजाप्यं वरानने । दशांशं हवनं देवि मार्जनं तर्पणं तथा ॥ १२ ॥ दशांशं भोजयेद्विप्रान्ब्राह्मणान्वेदपारगान् ॥ १३ ॥ कूष्माण्डं नारिकेरं च पञ्चरत्नसमन्वितम् । गंगामध्ये प्रदातव्यं देवि सत्यव्रताय च ॥ १४ ॥ एवं कृते वरारोहे सर्वरोगक्षयो भवेत् । वंशवृद्धिर्भवेत्तस्य नात्र कार्या विचारणा ॥ १५ ॥

इति श्रीकर्मविपाकसंहितायां धनिष्ठानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नाम पंचनवतितमोऽध्यायः ॥ ९५ ॥

---

## अथ षण्णवतितमोऽध्यायः ॥ ९६ ॥

शतभिषानक्षत्रफलम् ।

शिव उवाच ॥ मथुरायां विशालाक्षि आभीरस्तत्र तिष्ठति ।
गोपालेति समाख्यातः सदा गोधनजीवितः ॥
तस्य भार्या विशालाक्षि सतीनामातिसुन्दरी ॥ १ ॥

---

प्रथम तो यह अपने घरका धनका छठा भाग पुण्यकार्यमें लगावै फिर पापकी शुद्धिके अर्थ दशवर्णवाली गौका दान करै ॥ ११ ॥ गायत्री और सूर्यनारायणके मंत्रका एक लाख जप करावै, जपका दशांश हवन, मार्जन और तर्पण करावै १२ और तर्पणकी दशांशसंख्याके अनुसार वेदपाठी ब्राह्मणोको भोजन करावै ॥ १३ ॥ हे देवि ! फिर पंचरत्नोंके साथ कूष्मांड और नारियलको गंगाजीके बीचमें खडे होकर सत्यव्रतवाले ब्राह्मणको देवै ॥ १४ ॥ हे वरारोहे ! ऐसा करनेसे सम्पूर्ण रोग नष्ट हो जाते है और वंशकी वृद्धि होती है, इसमें कुछ विचार करनेकी आवश्यकता नही है ॥ १५ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां धनिष्ठानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नाम पंचनवतितमोऽध्यायः ॥ ९५ ॥

---

श्रीमहादेवजी बोले—हे विशालाक्षि! मथुरामें गोधनसे आजीविका करनेवाला,

गोधनं बहुसाहस्रं गोपालस्य सुरेश्वरि। वत्सानां वृषभाणां च पालनं क्रियते सदा ॥ २ ॥ शीतकाले महादेवि वृष्टिर्जाता वरानने। गौः सवत्सा महादेवि पीडिता भोजनं विना ॥ ३ ॥ गृहाभावे मृता बाह्ये वृषवत्ससमन्विता। ततो बहुगते काले गोपालस्य मृतिस्तदा ॥ ४ ॥ यमदूतैर्महाघोरे नरके कर्दमाऽभिधे। क्षिप्तो यमाज्ञया देवि षष्टिवर्षसहस्रकम् ॥ ५ ॥ नरकान्निःसृतो देवि भेकयोनिं ततोऽलभत्। सरटस्य ततो देवि मानुषत्वं ततोऽलभत् ॥ ६ ॥ धनधान्यसमायुक्तो व्याधिभिः पीडितः सदा। अपुत्रत्वं ततो लेभे कन्यका जायते खलु ॥ ७ ॥ निर्बीजो वृषभस्तेन कृतो योगेन वै शिवे। तेन पापेन भो देवि गर्भपातः पुनः पुनः ॥ ८ ॥ तस्य शान्तिमहं वक्ष्ये शृणु देवि सुशोभने। वसन्ते मासि वै कुर्याद्वृददानं सहस्रशः ॥ ९ ॥

---

गोपाल नामक एक अहीर रहता था, हे विशालाक्षि! उसकी स्त्री सती॰ नामक परमसुन्दरी थी ॥ १ ॥ हे सुरेश्वरि! इस गोपालके यहां हजारों गौओं बछडों और बैलोंका सदा पालन होता था ॥ २ ॥ हे देवि! हे वरानने! हे महादेवि! एक समय शीतकालमें वर्षा हुई तो घरके अभावसे बछडेसहित गौयें कष्ट पाती हुईं और भोजन न मिलनेसे बछडे और बैल सहित गौयें मरगईं इसके उपरान्त बहुत दिनोंके पीछे गोपालकी भी मृत्यु होगई ॥ ३ ॥ ४ ॥ हे देवि! तब यमराजाकी आज्ञासे यमदूतोंने साठ हजार वर्षके लिये महाघोर कर्दम नरकमें डालदिया ॥ ५ ॥ हे देवि! जब नरकसे निकला तब इसे मेंढककी योनि मिली हे देवि! फिर सरटकी योनिको प्राप्त होकर मनुष्ययोनिको प्राप्त हुआ ॥ ६ ॥ यहां यह धनधान्यसे युक्त होकर व्याधिरोगोंसे पीडित रहता है और पुत्र इसके न होकर कन्याही उत्पन्न होती है ॥ ७ ॥ हे शिवे! हे देवि! इसने पूर्वजन्ममें बैलोंको निर्बीज अर्थात् बधिया बनाया था तिस पापसे इसकी स्त्रीके वारंवार गर्भ गिरजाते हैं ॥ ८ ॥ हे देवि! हे सुशोभने! अब इसके पापकी शांतिको कहता हूँ सुनो, प्रथम यह माघके मही-

एकादशीव्रतं नित्यं वेण्यां स्नानं समाचरेत् । दशवर्णांगोप्रदानं शय्यादानं तथैव च ॥ १० ॥ आकृष्णेति जपं कुर्याल्लक्षसंख्यं वरानने । दशांशं हवनं तद्वन्मार्जनं तर्पणं तथा ॥ ११ ॥ भोजयेच्चैव देवेशि ब्राह्मणाञ्छ्रोत्रियाञ्छतम् । पायसान्नेन खण्डेन तथा दध्ना घृतेन च ॥ १२ ॥ एवं कृते न संदेहो ज्वरमोक्षः प्रजायते ॥ १३ ॥ वंशवृद्धिर्भवेत्तस्य मृतवत्सा च पुत्रिणी । काकवन्ध्या पुनः पुत्रं लभते नात्र संशयः ॥ १४ ॥

इति श्रीकर्मविपाकसंहितायां शतभिषानक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

---

## अथ सप्तनवतितमोऽध्यायः ॥ ९७ ॥

श्रीशिव उवाच ॥ मध्यदेशे महेशानि लुब्धको वसति प्रिये ।
मृगारिर्नाम विख्यातो मृगमांसेन जीवति ॥ १ ॥

---

नेमे हजार घट दान करै ॥ ९ ॥ एकादशीका निरन्तर व्रत करके त्रिवेणीमें स्नान करै, फिर दशवर्णवाली गौ और शय्याका दान करे ॥१०॥ हे वरानने ! "आकृष्णेन" इस सूर्यमन्त्रका एक लाख जप करावै जपका दशांश हवन, मार्जन और तर्पण करावै ॥ ११ ॥ फिर देवरूपी श्रोत्रिय सौ ब्राह्मणोको खीर, खांड, घी और दहीसे भोजन करावै ॥ १२ ॥ ऐसा करनेसे निःसन्देह मनुष्य ज्वरसे मुक्त होजाता है और वंशकी वृद्धि होती है मृतवत्सा नारी और काकवन्ध्या नारी निःसन्देह पुत्रको प्राप्त करती है ॥ १३ ॥ १४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां शतभिषानक्षत्रप्रथमचरणप्रायश्चित्तकथनं नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

---

श्रीशिवजी बोले-हे प्रिये ! हे महेशानि ! मध्यदेशमें मृगारि नामसे विख्यात

प्रत्यहं मृगयां याति पक्षिणां मारणे रतः। मांसविक्रयतो नित्यं कुटुम्बभरणो ह्यभूत् ॥ २ ॥ एवं वयो गतं सर्वं वार्धके तु वरानने। मरणं तस्य वै जातं यमदूतैर्यमाज्ञया ॥ ३॥ रौरवे नरके क्षिप्तस्तत्र कष्टं मुहुर्मुहुः। सप्ततिं वै सहस्राणि नरके परिभुक्तवान् ॥ ४ ॥ नरकान्निःसृतो देवि श्येनयोनौ स्म जायते। उष्ट्रस्य च पुनर्योनिं शृगालत्वं स लब्धवान् ॥ ५ ॥ मानुषत्वं ततो जातं धनधान्यादिसंयुतम् ॥ ६ ॥ पूर्वजन्मनि देवेशि पक्षिणो बहवो हताः। तेन पापेन भो देवि व्याधिसंछादिता तनुः ॥ ७ ॥ मृगं हत्वा वरारोहे हताश्च मृगशावकाः। एतद्दोषेण भो देवि पुत्राणां मरणं खलु ॥ ८ ॥ काकवंध्या भवेन्नारी कन्यका जायते सदा। वन्ध्या भवति वै नारी शान्तिं शृणु वरानने ॥ ९ ॥ गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् १०

---

एक लोभी शिकारी रहता था॥ १ ॥ वह प्रतिदिन शिकार खेलकर पक्षियोंको मारा करता और सदा उस मांसको बेचकर अपने कुटुम्बका पालन करता था ॥ २ ॥ हे वरानने! इस प्रकार उसकी आयु बीती और वृद्ध होकर वह मृत्युको प्राप्त हुआ, तब यमराजकी आज्ञासे यमदूतोंने ॥ ३ ॥ रौरव नामक नरकमें सत्तर हजार वर्षोंके लिये डाल दिया उस नरकमें वारंवार कष्ट भोगना पडा ॥ ४ ॥ हे देवि! जब नरकसे निकला तब बाजकी योनिको प्राप्त हुआ फिर ऊंटकी योनिको प्राप्त होकर शृगालकी योनिको प्राप्त हुआ ॥ ५ ॥ अनन्तर धनधान्यसे युक्त होकर मनुष्ययोनिको प्राप्त हुआ ॥ ६ ॥ हे देवेशि! हे देवि! पूर्वजन्ममे इसने बहुतसे पक्षियोंको मारा था उसी पापसे इसके शरीरमें व्याधियें उत्पन्न होती हैं ॥ ७ ॥ हे वरारोहे! पूर्वजन्ममे इसने मृगोंको और मृगोंके बच्चोको मारा था, हे देवि! तिस पापसे इसके पुत्रोंकी मृत्यु हुई है ॥ ८ ॥ और इसकी स्त्री काकवन्ध्या होकर कन्या उत्पन्न करती है एवं वंध्यात्वदोषको प्राप्त हुई, हे वरानने! अब उसके पापकी शांतिको सुनो ॥९॥ प्रथम यह अपने घरके छठे अंशको पुण्यकार्यमें लगावै ॥ १० ॥

गायत्रीजातवेदोभ्यां लक्षजाप्यं वरानने । दशांशं हवनं तद्वन्मार्जनं तर्पणं तथा ॥ ११ ॥ दश धेनूस्ततो दद्यात्स्वर्णदानं विशेषतः । हरिवंशश्रवणं देवि व्रतं च हरिवासरम् ॥ १२॥ ब्राह्मणान्भोजयेच्चैव यथाशक्त्या तु दक्षिणाम् । एवं कृते वरारोहे वंशस्तस्य भविष्यति ॥ १३ ॥ वन्ध्यात्वं प्रशमं याति काकवन्ध्या पुनः सुतम् । मृतवत्सा लभेत् पुत्रं चिरंजीविनमुत्तमम् ॥ १४ ॥ व्याधयः संक्षयं यान्ति ज्ञानं च लभते महत् ॥ १५ ॥

इति श्रीकर्मविपाकसंहितायां शतभिषानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

## अथाष्टनवतितमोऽध्यायः ॥ ९८ ॥

शिव उवाच ॥ गोमतीनिकटे देवि पुरं ख्यातं धुरंधरम् ।
वसन्ति बहवो देवि जना धर्मविचक्षणाः ॥ १ ॥
तन्मध्ये ब्राह्मणो ह्येको ब्रह्मकर्मविवर्जितः ।
द्यूतकर्मरतः सोऽपि वेश्यासुरततत्परः ॥ २ ॥

---

हे वरानने ! गायत्री और जातवेद्से इन मंत्रोंका एक लाख जप करावै जपका दशांश हवन मार्जन और तर्पण करावै ॥११॥ दश गौओंका दान करै और विशेष करके सुवर्णका दान करै हरिवंशपुराणकी कथा सुने, एकादशीका व्रत करै ॥१२॥ सौ ब्राह्मणोंको भोजन करावै और यथाशक्ति दक्षिणा दे, ऐसा करनेसे हे वरारोहे ! वंशकी वृद्धि होती है और वंध्यात्व दोष दूर होजाता है, काकवंध्या नारी सुतको प्राप्त करती है ॥ १३ ॥ १४ ॥ संपूर्ण व्याधियें नष्ट हो जाती हैं और श्रेष्ठ ज्ञान प्राप्त होताहै ॥ १५ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां शतभिषानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

शिवजी बोले—हे देवि ! गोमतीके निकट धुरंधर नगरमें बहुतसे धर्मात्मा मनुष्य निवास करते थे ॥ १ ॥ उनके बीचमे एक ब्रह्मकर्मसे रहित ब्राह्मण

मद्यपानरतो नित्यं वेदशास्त्रविनिन्दकः । ततो बहुदिने देवि तस्य मृत्युरभूत्पुरा ॥ ३ ॥ यमदूतैर्महाघोरनरकेषु निपातितः । पतितो नरके घोरे लक्षवर्षं महेश्वरि ॥ ४ ॥ नरकान्निःसृतो देवि वृकयोनिरभूत्पुरा । वराहस्य पुनर्योनिं गर्दभत्वं ततोऽलभत् ॥ ५ ॥ मानुषत्वं ततो लेभे देशे पुण्यतमे शुभे ॥ ६ ॥ पूर्वजन्मनि देवेशि मद्यपानरतः सदा । तेन पापेन भो देवि शरीरे रोगसंभवः ॥ ७ ॥ द्यूतवेश्यारतो नित्यं यस्माद्वै पूर्वजन्मनि । तेन पापेन भो देवि वंशच्छेदश्च जायते ॥ ८ ॥ शान्तिं शृणु वरारोहे पूर्वपापप्रणाशिनीम् । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ ९ ॥ विष्णोरराटमन्त्रेण लक्षजाप्यं वरानने । दशांशं हवनं तद्वन्मार्जनं तर्पणं तथा । ब्राह्मणान्भोजयेत्पश्चात्पंचाशच्च वरानने ॥ १० ॥

---

बसता था और वह जुआरी वेश्यागामी मद्य पीनेवाला शास्त्रनिन्दक था. हे देवि ! चिरकालके उपरान्त इस ब्राह्मणकी मृत्यु होगई ॥ २ ॥ ३ ॥ हे महेश्वरि ! घोररूप यमदूतोंने इसको लाख वर्षके लिये महाघोर नरकमें डाल दिया ॥ ४ ॥ हे देवि ! जब नरकसे निकला तब वृकयोनिको प्राप्त हुआ, फिर सूकरकी योनिको प्राप्त होकर गधेकी योनिको प्राप्त हुआ ॥ ५ ॥ पीछे अतिपवित्र देशमें मनुष्ययोनिको प्राप्त हुआ ॥ ६ ॥ हे देवि ! पूर्वजन्ममें इसने जो मद्यपान किया तिस पापसे इसके शरीरमें रोग रहते हैं॥७॥ हे देवि ! पूर्वजन्ममें इसने नित्य जुआ खेला और वेश्याका प्रसंग किया उसी पापसे इसका वंश नष्ट हुआ है ॥ ८ ॥ हे वरारोहे ! अब इसके पूर्वजन्मोंके पापोंकी नाश करनेवाली शांतिको सुनो-प्रथम वह अपने घरके छठे अंशको पुण्यकार्यमें लगावै ॥ ९ ॥ हे वरानने ! "विष्णोरराट" इस मंत्रका लाख जप करावै, जपका दशांश हवन, मार्जन और तर्पण करावै, फिर हे वरा-

ततो गां कृष्णवर्णां च स्वर्णशृङ्गीं विभूषिताम् । पट्टवस्त्रां सवत्सां च दद्याद्द्विजवराय च ॥ ११ ॥ प्रतिमां तु ततः कुर्याद्विष्णोः सांबस्य वा शिवे । पलदशसुवर्णस्य विष्णोर्मुक्ताविभूषिताम् ॥ १२ ॥ तद्वदेव शिवस्यैव रजतस्य वरानने । नानावस्त्ररलंकारैः पूजयित्वा यथाविधि ॥ १३ ॥ मन्त्रेणानेन देवेशि तद्वदेव गणं नमेत् । गरुडध्वज देवेश भूतनाथ दयानिधे ॥ मम पूर्वकृतं पापं तत्क्षमस्व दयानिधे ॥ १४ ॥ ॐ सुदर्शनाय नमः ॥ ॐ त्रिशूलाय नमः ॥ ॐ गरुडाय नमः ॥ ॐ भैरवाय नमः ॥ ॐ जयाय नमः ॥ ॐ विजयाय नमः ॥ ॐ बटुकाय नमः ॥ ॐ कालभैरवाय नमः ॥ गन्धधूपादिभिर्देवि पूजयित्वा पृथक् पृथक् ॥ १५ ॥ प्रतिमां पूजितां तां तु दद्याद्विप्राय वै स्वयम् । ततो विष्णुं नमस्कृत्य शिवं सर्वसुखप्रदम् ॥ १६ ॥

---

नने ! पचास ब्राह्मणोंको भोजन करावै ॥ १० ॥ अनन्तर बछडे सहित गौका सुवर्णसे सींग मढाकर रेशमीवस्त्र उढाय श्रेष्ठ ब्राह्मणको देवे ॥ ११ ॥ हे शिवे ! चालीस तोले सुवर्णकी लक्ष्मीसहित विष्णुकी मूर्ति बनवावै और उस मूर्तिको माणि मोती आदिसे विभूषित करै ॥ १२ ॥ हे वरानने ! चालीस तोले चांदीकी शिवजीकी मूर्ति बनवावै और अनेक प्रकारके वस्त्रालंकारोंसे भूषित करके विधिपूर्वक पूजन करै ॥ १३ ॥ हे देवेशि ! आगे कहे मंत्रसे शिवजीके गणको नमस्कार करै । मंत्र–हे गरुडध्वज ! हे देवेश ! हे भूतनाथ ! हे दयानिधे ! हे दयासागर ! मेरे पूर्वजन्मके कियेहुए पापोंको क्षमा करो ॥ १४ ॥ ॐ सुदर्शनाय नमः, ॐ त्रिशूलाय नमः, ॐ गरुडाय नमः, ॐ भैरवाय नमः, ॐ जयाय नमः, ॐ विजयाय नमः, ॐ बटुकाय नमः, ॐ कालभैरवाय नमः । हे देवि ! इत्यादि मंत्रोंसे गंध धूपादिद्वारा पृथक् २ पूजा करै ॥ १५ ॥ पूजन कीहुई प्रतिमाओंको अपने हाथसे ब्राह्मणको दे देवै अनन्तर सम्पूर्ण सुखोंके देनेवाले विष्णु भगवान् और शिव-

एवं कृते न सन्देहः सर्वपापक्षयो भवेत् ।
वंशवृद्धिर्भवेत्तस्य व्याधिनाशो भवेद् ध्रुवम् ॥ १७ ॥

इति श्रीकर्मविपाकसंहितायां शतभिषानक्षत्रतृतीयचरणप्रायश्चित्त-
कथनं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥

---

## अथैकोनशततमोऽध्यायः ॥ ९९ ॥

श्रीशिव उवाच ॥ पंचक्रोशमिते देवि मथुरायास्तथोत्तरे । हेमन्तनामकपुरे वसन्ति बहवो जनाः ॥ १ ॥ तन्मध्ये वैश्य एको हि क्रयविक्रयतत्परः । स सुकर्मेति विख्यातो धनं च बहु सञ्चितम् । तस्य स्त्री पार्वतीनाम्नी रूपयौवनसंयुता ॥ २ ॥ वैश्यश्चैव महादेवि प्रौढिं यातः सुरेश्वरि । दरिद्रस्त्वभवद्देवि दरिद्र-त्वात्सुपीडितः ॥ ३ ॥ शतं पञ्च ऋणं नीतं ब्राह्मणस्य सुरेश्वरि । व्यापारार्थं विशालाक्षि न दत्तं ब्राह्मणाय वै ॥ ४ ॥

---

जीको प्रणाम करै ॥ १६ ॥ ऐसा करनेसे निःसन्देह संपूर्ण पाप नष्ट होजाते हैं और शीघ्रही व्याधियोंसे मुक्त होकर वंशकी वृद्धि होती है ॥ १७ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां शतभिषानक्षत्रतृतीयचरण-
प्रायश्चित्तकथनं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥

---

शिवजी बोले-हे देवि ! मथुरापुरीसे उत्तर पांचकोशपर हेमन्तनगरमें बहुतसे मनुष्य निवास करते थे ॥ १ ॥ उनके बीचमें एक वैश्य रहता था उसका नाम सुकर्मा था और यह क्रयविक्रयमें रहकर बहुतसा धन संचय करता हुआ, इसकी स्त्रीका नाम पार्वती था और वह रूपयौवनवाली थी ॥ २ ॥ हे महादेवि ! हे सुरेश्वरि ! हे देवि ! जब यह वैश्य प्रौढ अवस्थाको प्राप्त हुआ तब इसके दरिद्रता आगई और यह दरिद्र होनेसे अत्यन्त कष्ट पाने लगा ॥ ३ ॥ हे सुरेश्वरि ! तब इसने व्यापारके अर्थ पांच सौ रुपये ब्राह्मणसे कर्ज लिये

सर्वं भुक्तं महादेवि बहुकाले गते सति । वैश्यस्याथाभवन्मृत्युः सभार्यस्य वरानने ॥ ५ ॥ मथुरायां विशालाक्षि लब्धः स्वर्गो वरः शुभः । दशलक्षमितं स्वर्गफलं भुक्तं वरानने ॥ ६ ॥ भुक्त्वा सह कलत्रेण ततः पुण्यक्षये सति ॥ ७ ॥ मानुषत्वं पुनः सुभ्रू-र्लेभे देशे मनोहरे । धनधान्यसमायुक्तो जायते स्म सुरेश्वरि ॥ ८ ॥ पूर्वे जन्मनि देवेशि ब्राह्मणस्य धनं हृतम् । न दत्तं तेन वै देवि ततः पुत्रो न जायते ॥ ९ ॥ अस्य शान्तिं प्रवक्ष्यामि यतः पापस्य संक्षयः । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ १० ॥ आकृष्णेति ततो मन्त्रं लक्षं भक्त्या जपेत्तथा । दशांशं हवनं कुर्याद्दशांशं तर्पणं तथा ॥ ११ ॥ हरिवंशश्रवणं देवि चण्डीपाठं शिवार्चनम् । विधिवत्कारयेच्चैव ब्राह्मणान्भोज-येत्ततः ॥ १२ ॥ दशवर्णां ततो दद्याच्छय्यादानं विशेषतः १३ ॥

---

और हे विशालाक्षि ! फिर वह रुपये इसने ब्राह्मणको नही दिये ॥ ४ ॥ हे महादेवि ! वह रुपये इसने अपने खाने पीनेमे खर्च करलिये, इस प्रकार बहुत समय होनेपर हे वरानने ! इस वैश्यकी मृत्यु होगई ॥५॥ हे विशालाक्षि ! मथुरामें मृत्यु होनेसे इसको स्वर्गमे वास मिला और वहाँ दश लाख वर्षतक कुटुम्बी जनोके साथ स्वर्गीय फलको भोगा फिर पुण्य क्षीण होनेपर ॥६॥७॥ हे सुरेश्वरि ! हे सुभ्रु ! हे मनोहरे ! धनधान्यसे युक्त होकर सुन्दरदेशमें मनुष्य-योनिको प्राप्त हुआ ॥ ८ ॥ हे देवेशि ! हे देवि ! पूर्वजन्ममे इसने ब्राह्मणका धन लेकर नहीं दिया उसी कारणसे इसके पुत्र नही होता है ॥ ९ ॥ अब जिसके करनेसे इसके पाप दूर हों उस शांतिको कहताहूं—प्रथम यह अपने घरके छठे अंशको पुण्यकार्यमे लगावै ॥ १० ॥ पीछे " आकृष्णेन " इस मंत्रका एक लाख जप करावै जपका दशांश हवन, मार्जन और तर्पण करावै ॥ ११ ॥ हरिवंशपुराणकी कथा सुने, दुर्गापाठ और शिवजीका पूजन विधिसे करावै । हे देवेशि ! फिर ब्राह्मणोको भोजन करावै ॥ १२ ॥ और दशवर्णवाली गौका दान

एवं कृते वरारोहे वंशो भवति नान्यथा ।
व्याधिर्नाशं समायाति मम वाक्यं न चान्यथा ॥ १४ ॥

इति श्रीकर्म० शतभिषा० नामैकोनशततमोऽध्यायः ॥ ९९ ॥

## अथ शततमोऽध्यायः ॥ १०० ॥

पूर्वाभाद्रपदानक्षत्रफलम् ।

शिव उवाच ॥ मथुराख्यपूरीमध्ये शूद्र एको हि तिष्ठति ।
शाकानुत्पाद्य क्षेत्रे स्वे विक्रयं कुरुते सदा ॥ १ ॥ विष्णुभक्ति-
रतः शान्तः पुण्यात्मा साधुसम्मतः । सेवादास इति ख्यातस्तस्य
पत्नी तु राधिका ॥ २ ॥ कुलाचारे रतः साधुर्द्विजसेवासु
तत्परः । वाणिज्यं कुरुते साधुः पुरोहितधनेन च ॥ ३ ॥ बहु-
वर्षैर्गतो देवि ब्राह्मणोऽस्य गृहे तदा । आदरं बहुधा कृत्वा कलत्रे-
णास्य वै शिवे ॥ ४ ॥ विषं दत्तं चतुर्थेऽह्नि भोजनावसरे सति ।
न जानाति सदा साधुस्तद्दत्तं ब्राह्मणस्य तु ॥ ५ ॥

---

करै, विशेषरूपसे शय्यादान करै ॥ १३ ॥ हे वरारोहे ! ऐसा करनेसे वंशबेल चलती है, अन्य प्रकारसे नहीं और संपूर्ण व्याधिये नष्ट होजाती है यह मेरा सत्यवचन जानो ॥ १४ ॥

इति श्रीकर्मविपाक० शतभिषानक्षत्र० नामैकोनशततमोऽध्यायः ॥९९॥

शिवजी बोले, हे पार्वति ! मथुरापुरीके बीच एक शूद्र रहता था, यह प्रतिदिन शाक बनाकर बेचता था ॥ १ ॥ इसका नाम सेवादास था, यह विष्णुकी भक्तिमें लीन शान्तस्वभाव पुण्यात्मा साधुओंकी संगति करता था और इसकी स्त्रीका नाम राधिका था ॥ २ ॥ यह अपने कुलके आचारमें रत, साधु और ब्राह्मणोंकी सेवामे तत्पर रहकर अपने पुरोहितके धनसे वाणिज्य करता था ॥ ३ ॥ हे देवि ! हे शिवे ! ऐसे बहुत वर्षोंके उपरांत इसका पुरोहित आया, तब इसने परिवारसहित उसका परम आदर सत्कार किया, पीछे इस सेवादासकी स्त्रीने चौथे दिन भोजनके समय इस ब्राह्मणको

मरणं वै ततो जातं ब्राह्मणस्य सुरेश्वरि । ब्राह्मणस्य वधे जाते हाहाकारं गृहेगृहे ॥ ६ ॥ श्रुत्वा साधुः पुरीं त्यक्त्वा प्रयागे समुपागतः । देहं तत्याज स तदा हठं कृत्वा वरानने ॥ ७ ॥ पश्चात्तस्य गता पत्नी प्राणांस्तत्रैव साऽत्यजत् । प्रयागे मथुरां त्यक्त्वा तदुद्देशेन शोभने ॥ ८ ॥ बहुवर्षसहस्राणि स्वर्गवासस्ततोऽभवत् । ततः पुण्यक्षये जाते मानुषत्वं ततोऽलभत् ॥ ९ ॥ शूद्रयोनौ विशालाक्षि देहजस्य कुलेऽजनि । पुनर्विवाहिता पत्नी पूर्वजन्मप्रपञ्चतः ॥ १० ॥ धनधान्यसमायुक्तो विद्यावान्कुलपूजकः । गौराङ्गो नीचजातीनां मतज्ञो लब्धवान्स्वयम् ॥ ११ ॥ पूर्वजन्मनि भो देवि ब्राह्मणाय विषं ददौ । भार्या तस्य विशालाक्षि तत्पापेनैव दूषिता ॥ तेन पुष्पं गतं तस्याः सन्तानं नैव जायते ॥ १२ ॥ अस्य पापस्य वै शान्तिं शृणु देवि सुशोभने । गृहवित्ताष्टमं भागं पुण्यकार्ये नियोजयेत् ॥ १३ ॥

---

विष दे दिया इस बातको सेवादासने नहीं जाना ॥ ४ ॥ ५ ॥ हे सुरेश्वरि ! तब वह ब्राह्मण मरगया, ब्राह्मणके मरनेसे घरघरमें हाहाकार होने लगा ॥६॥ हे वरानने ! यह सेवादास उस हाहाकारको सुनकर मथुरापुरीको छोड प्रयागराजमें जाय हठके साथ अपने शरीरको छोडता भया ॥ ७ ॥ हे शोभने ! पीछे इस शूद्रकी स्त्री भी मथुरापुरीको छोडकर प्रयागराजमें आई और अपने उद्देश्यसे शरीर त्यागकर सती होगई ॥ ८ ॥ तब इसको हजारों वर्षतक स्त्रीसहित स्वर्गलोकमे वास मिला, फिर पुण्य क्षीण होनेपर मनुष्ययोनिको प्राप्त हुआ ॥ ९ ॥ हे विशालाक्षि ! यहां मृत्यु लोकमें शूद्रजातिके बीच देहजके कुलमें जन्म हुआ और पूर्व जन्मके प्रपंचसे पूर्वजन्मकी स्त्रीही व्याही गई ॥ १० ॥ यहां यह धनधान्यसे युक्त विद्वान् कुलपूज्य अपनी जातिके बीचमें गौरवर्णवाला और बुद्धिमान् हुआ ॥११॥ हे देवि ! पूर्वजन्ममे इसकी स्त्रीने ब्राह्मणको विष दिया था तिस पापसे हे विशालाक्षि ! इसकी स्त्रीको पाप लगा उसके कारण स्त्रीको मासिक धर्म तो होता परन्तु संतान उत्पन्न नहीं होती ॥१२॥ हे देवि ! हे सुशोभने ! अब इसके पापोंकी शांतिको सुनो-प्रथम यह

गायत्रीजातवेदोभ्यां त्र्यंबकस्य वरानने । लक्षत्रयं जपेद्देवि भक्त्या चैव प्रयत्नतः ॥ १४ ॥ हरिवंशश्रवणं देवि भार्यया सह मानिनि ॥ १५ ॥ होमं वै कारयेच्चैव कुण्डे शुद्धे वरानने । चतुष्कोणे विशालाक्षि योनिपल्लवशोभिते । दशांशं विधिवद्देवि तर्पणं मार्जनं ततः ॥ १६ ॥ ब्राह्मणस्य ततो मूर्तिं पलपञ्च-दशस्य तु । विधिवत्कारयेद्देवि पूजयेच्चैव बुद्धिमान् । वस्त्रा-लङ्कारशय्याभिर्भूषणैर्विविधैस्तथा ॥ १७ ॥ मन्त्रेणानेन देवेशि गन्धपुष्पैः पृथक्पृथक् ॥ १८ ॥ सर्वकारणकर्त्ता त्वं साक्षि-भूतो जगत्त्रये । पापं ब्रह्मवधाद्घोरं हर मे भुवनाधिप ॥ १९ ॥ ॐ चक्रधराय नमः ॥ ॐ त्र्यम्बकाय नमः ॥ ॐ गदाधराय नमः ॥ ॐ शूलहस्ताय नमः ॥ ॐ शार्ङ्गहस्ताय नमः ॥ ॐ शंखहस्ताय नमः ॥ सनकं सनत्कुमारं सनन्दनं सनातनम् । पूजयेच्चाथ विविधैर्मोदकैश्च फलैरपि ॥ २० ॥

---

अपने घरका आठवां भाग पुण्यकार्यमें लगावै ॥ १३ ॥ हे वरानने ! हे देवि ! फिर गायत्री जातवेदसे और त्र्यम्बक मंत्रका तीन लाख जप यत्नसे करावै ॥ १४ ॥ हे देवि ! हरिवंशपुराणकी कथा स्त्रीसहित सुने ॥ १५ ॥ हे वरानने ! हे विशालाक्षि ! पीछे योनिपल्लवसे शोभित शुद्ध चौकोनकुण्डमें विधिपूर्वक दशांश हवन, मार्जन और तर्पण करावै ॥ १६ ॥ फिर साठ तोले सोनेकी ब्राह्मणकी मूर्ति बनावै और बुद्धिमान् मनुष्य विधिपूर्वक वस्त्र आभू-षण शय्या आदिसे पूजन करै ॥ १७ ॥ हे देवेशि ! आगे कहे मंत्रोंसे गंध पुष्पद्वारा पृथक् २ पूजन करै ॥१८॥ मंत्र-हे देव ! हे भुवनाधिप ! आप सब कारणोंके कर्त्ता हो, तीनों जगत्के साक्षी हो. ब्रह्महत्यारूपी घोरपापसे मेरी रक्षा करो ॥ १९ ॥ ॐ चक्रधराय नमः, ॐ त्र्यम्बकाय नमः, ॐ गदाधराय नमः, ॐ शूलहस्ताय नमः, ॐ शार्ङ्गहस्ताय नमः, ॐ शंखहस्ताय नमः । इन मंत्रोंसे सनक, सनत्कुमार, सनन्दन और सनातन इन ऋषियोंका अनेक प्रका-

प्रतिमां पूजितां तां तु सुविप्राय प्रदापयेत् ॥ २१ ॥ दशवर्णां सवृषभां पट्टवस्त्रविभूषिताम् । दद्याद्विप्राय विदुषे श्रोत्रियाय तपस्विने ॥ २२ ॥ व्रतं तु रविसप्तम्याः कुर्यात्प्रीत्या विशेषतः ॥ २३ ॥ एवं करोति देवेशि पुत्रयुग्मं प्रजायते । कन्या त्वेका वरारोहे रोगोऽपि किल नश्यति ॥ २४ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाभाद्रपदानक्षत्रप्रथमचरणप्रायश्चित्त-कथनं नाम शततमोऽध्यायः ॥ १०० ॥

## अथैकोत्तरशततमोऽध्यायः ॥ १०१ ॥

शिव उवाच ॥ धर्मेण जायते पुत्रो धर्मेण लभते श्रियम् ।
धर्मेण व्याधिनाशः स्यात्तस्माद्धर्मपरो भवेत् ॥ १ ॥
कांपिल्ये नगरे देवि ब्राह्मणस्तत्र तिष्ठति ।
स वेदपाठनिरतो धनाढ्यश्च बहूद्यमी ॥ २ ॥

---

-रके लड्डू और फलोंसे पूजन करै ॥ २० ॥ फिर पूजीहुई मूर्तिको ब्राह्मणको देदे ॥ २१ ॥ फिर बैलके सहित दशवर्णवाली गौको रेशमीवस्त्र उढाय विद्वान् श्रोत्रिय तपस्वी ब्राह्मणको दान करै ॥ २२ ॥ और सदा रविवारी सप्तमीका व्रत करै ॥ २३ ॥ हे देवेशि ! ऐसा करनेसे एक कन्या और दो पुत्र होते हैं और समस्तरोग नष्ट होजाते हैं ॥ २४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाभाद्रपदानक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नाम शततमोऽध्यायः ॥ १०० ॥

श्रीशिवजी बोले—हे पार्वति ! धर्मसे पुत्र उत्पन्न होता है, धर्मसे लक्ष्मी प्राप्त होती है और धर्मसे व्याधियोंका नाश होता है इस कारण पुरुषको धर्माचरण करना चाहिये ॥ १ ॥ हे देवि ! काम्पिल्यनगरमें एक ब्राह्मण रहता था, वह वेदपाठमें रत धनी और बडा उद्यमी था ॥ २ ॥

तस्य पत्नी वरारोहे पतिसेवासु तत्परा। एकदा चागता कन्या ब्राह्मणस्य किलानघे॥ ३॥ पुत्रेण सह देवेशि चादरस्तेन वै कृतः। ततो बहुदिने याते तस्य स्वर्णं च चोरितम्॥ ४॥ सर्वैस्तत्र स्थितैरेवं स्वर्णं प्रति सदाशिवे। उक्तं चानेन वै स्वर्णं हृतं तु ब्राह्मणं प्रति॥ ५॥ ततो रोषपरीतात्मा दौहित्रोऽभूदथो शिवे। विषं भुक्तं तदा तेन बहुरोषाकुलेन तु॥ ६॥ मरणं तस्य वै जातं दौहित्रस्य वरानने। ततो बहुदिने याते ब्राह्मणस्य तदा मृतिः॥७॥ तस्य पत्नी सती जाता सत्यलोके तदाऽवसत्। ततः पुण्यक्षये जाते मर्त्यलोके सुरेश्वरि॥ ८॥ मानुषत्वं ततो जातमयोध्यानगरे शिवे। धनधान्यसमायुक्तो राजमन्त्री विचक्षणः॥९॥ दौहित्रोऽस्य मृतो देवि तदुद्देशेन भो शिवे। जायन्ते बहवः कन्या अस्य पुत्रो न जायते॥ १०॥

---

हे वरारोहे! हे अनघे! तिसकी स्त्री पतिव्रता थी हे देवेशि! एक समय इस ब्राह्मणके घर इसकी कन्या पुत्रसहित आई, तब इसने उसका बडा आदर सत्कार किया ऐसे बहुत दिन जब बीतगये तब ब्राह्मणके घर चोरी होगई॥ ३॥ ४॥ हे शिवे! तब सबने ब्राह्मणसे कहा कि तेरी कन्याके पुत्रनेही सुवर्ण चुराया है॥ ५॥ हे शिवे! तब ब्राह्मणकी कन्याके पुत्रने क्रोधित होकर विष खाकर व्याकुलतासे अपने प्राण छोडदिये हे वरानने! चिरकालके पीछे फिर ब्राह्मणकी भी मृत्यु होगई॥ ६॥ ७॥ हे सुरेश्वरि! उसकी स्त्री तब सती होगई फिर उसने सतीके प्रभावसे सत्यलोकमें जाकर निवास किया पीछे पुण्य क्षीण होनेपर मनुष्यलोकमें॥ ८॥ अयोध्यानगरीके बीच हे शिवे! धनधान्यसे युक्त चतुर राजमंत्री होकर मनुष्य हुआ॥ ९॥ हे देवि! हे शिवे! इसके उद्देश्यसे पूर्वजन्ममें धेवतेकी मृत्यु हुई इस कारणसे इसके पुत्र नहीं होता है और बहुतसी कन्या उत्पन्न हुई हैं॥ १०॥

शरीरे सततं तूग्रो ज्वरो जातः सुदारुणः । शत्रवो बहवः सन्ति न सौख्यं लभते क्वचित् ॥ ११ ॥ पुण्यं शृणु वरारोहे पूर्वपापक्षयो यतः । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ १२ ॥ गायत्री त्र्यम्बकश्चेति श्रीश्च ते इति ऋक्त्रयम् । एतान्मंत्राञ्जपेल्लक्षं दशांशं हवनं ततः ॥ १३ ॥ दशांशं तर्पणं देवि मार्जनं तद्दशांशतः । गोदानं तद्दशांशं च तद्दशांशं च भोजयेत् । पक्वान्नैरथ देवेशि श्रद्धाभक्तिसमन्वितः ॥ १४ ॥ कूष्माण्डं नारिकेलं च पञ्चरत्नसमन्वितम् । गङ्गामध्ये प्रदातव्यं पूर्वपापविशुद्धये ॥ १५ ॥ वृषभस्तरुणः शुभ्रो घण्टाचामरशोभितः । ब्राह्मणाय प्रदातव्यं शय्यादानं विशेषतः ॥ १६ ॥ एवं कृते वरारोहे शीघ्रं पुत्रः प्रजायते । रोगस्यापि निवृत्तिः स्याज्ज्वरस्तस्य न जायते ॥ १७ ॥

इति श्रीकर्म० पूर्वाभाद्रपदाद्वितीयचरण० नामैकोत्तरशततमोऽध्यायः १०१

और इसके शरीरमें निरन्तर उग्ररूपसे घोर दारुणज्वर रहता है बहुतसे शत्रुओंके होनेसे इसको कभी सुख नहीं मिलता ॥ ११ ॥ हे वरारोहे ! अब उस पुण्यको सुनो जिसके करनेसे इसके पाप नष्ट होजाते हैं—प्रथम तो यह अपने घरके छठे अंशको पुण्यकार्यमें लगावै ॥ १२ ॥ "गायत्री" "त्र्यंबक" "श्रीश्चते" इन तीन मंत्रोंका तीन लाख जप करावै, जपका दशांश हवन करावै ॥१३॥ हे देवि ! हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै, मार्जनकी दशांशसंख्या गौओका दान करै और दानकी दशांशसंख्या परिमित ब्राह्मणोंको हे देवेशि ! श्रद्धा और भक्तिके साथ भोजन करावै ॥ १४ ॥ पूर्वजन्मके पापोंकी शुद्धिके निमित्त पंचरत्नके साथ कूष्मांड और नारियलको गंगाजीके बीचमें स्थित होकर दान करै ॥ १५ ॥ और एक सुन्दर सफेद तरुण बैलको घंटा और चामरसे शोभित कर ब्राह्मणके लिये दान करै एवं विशेषरूपसे शय्यादान करै ॥ १६ ॥ हे वरारोहे ! ऐसा करनेसे शीघ्र पुत्र प्राप्त होता है और रोग दूर होजाते हैं फिर ज्वर नहीं सताता ॥ १७ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाभाद्रपदानक्षत्रद्वितीयचरणप्रायश्चित्तकथनं नामैकोत्तरशततमोऽध्यायः ॥ १०१ ॥

## अथ द्व्यधिकशततमोऽध्यायः॥ १०२॥

श्रीशिव उवाच ॥ गान्धारनगरे देवि ब्राह्मणो वसति प्रिये। दयाशर्मेति विख्यातो मद्यपानरतः सदा॥ १॥ वेश्यासुरतसंतृप्त-श्चौरकर्मरतः सदा। म्लेच्छाचाररतः सोऽपि म्लेच्छान्नभोजनः सदा॥ २॥ धनं न सञ्चितं तेन म्लेच्छभार्यासु तत्परः। श्राद्ध-कर्मविहीनश्च पितुर्मातुश्च निन्दकः ॥ ३॥ एवं बहुगते काले मरणं तस्य चाभवत्। महाक्रकचनामानं नरकं दारुणं प्रति ॥ ४॥ निक्षिप्तः शृंखलां बद्धा यमदूतैर्यमाज्ञया। षष्टिवर्षसह-स्राणि भुक्त्वा नरकयातनाम् ॥ ५॥ नरकान्निःसृतो देवि गोधायोनिरभूत्पुरा। सरटस्य पुनर्योनिं चटकत्वं ततोऽलभत् ॥ ६॥ मानुषत्वं ततो लेभे शुभे देशे वरानने। धनधान्यसमा-युक्तो वंशहीनो महेश्वरि॥ ७॥

---

शिवजी बोले-हे देवि! हे प्रिये! गान्धारनगरमें एक ब्राह्मण वसता था, उसका नाम दयाशर्मा था और वह सदा मदिरा पीनेमे रत रहता था॥ १॥ एवं वेश्याके संगसे तृप्त चौरकर्ममे सदा रत म्लेच्छोंके आचारमे लीन रहकर म्लेच्छोंकाही अन्न भोजन करता था॥ २॥ इसने म्लेच्छकी भार्यामे तत्पर होकर धनका संचय नहीं किया, यह श्राद्ध कर्मको न करके पिता और माताकी निन्दा करता था॥ ३॥ इस भांति बहुत कालके बीतनेपर इसकी मृत्यु होगई, तब यमराजकी आज्ञासे यमदूतोंने इसको सांकलोसे बांध महा क्रकचनामक दारुण नरकमे डाल दिया वहां साठ हजारवर्षतक नरककी पीडा भोगी॥ ४॥ ५॥ हे देवि! नरकसे निकलकर गोहकी योनिको प्राप्त हुआ, फिर सरटकी योनिको प्राप्त होकर चटककी योनिको प्राप्त हुआ॥ ६॥ हे वरानने! हे महेश्वरि! फिर धनधान्यसे युक्त होकर वंशहीन हो सुन्दर

पूर्वजन्मनि देवेशि ब्राह्मणत्वं यतोऽत्यजत् । तत्पापेनैव भो देवि पुत्रस्य मरणं मुहुः ॥ ८ ॥ तन्मातापितरौ वृद्धौ त्यक्तौ दुर्मतिना यतः । अतः शरीरे वै रोगाः काकवन्ध्यासहव्रणाः ॥९॥ शान्तिं शृणु वरारोहे यतः पुत्रो हि जायते । गृहवित्ताष्टमं भागं पुण्यकार्ये नियोजयेत् ॥ १० ॥ पञ्चपलसुवर्णस्य गणाध्यक्षस्य चाकृतिम् । कृत्वा वै पूजयेच्चापि मन्त्रेणानेन सुव्रते ॥ ११ ॥ गणाध्यक्ष सुरेशान सर्वोपद्रवनाशन । मम पूर्वकृतं पापं हर दुःखनिवारण ॥ १२ ॥ प्रतिमां गन्धपुष्पाद्यैः पूजितां विविधैः फलैः । दापयेदथ विप्राय वेदज्ञाय तपस्विने ॥ १३ ॥ ततो गां कपिलां दद्यात्स्वर्णशृङ्गविभूषिताम् ॥१४॥ गणेशस्य तु मन्त्रं वै जपेल्लक्षमतन्द्रितः । हवनं तद्दशांशेन मार्जनं तर्पणं तथा । शतं च भोजयेदेव श्रोत्रियान्वेदपारगान् ॥ १५ ॥

---

देशमें मनुष्ययोनिको प्राप्त हुआ ॥ ७ ॥ हे देवेशि ! हे देवि ! इसने पूर्वजन्ममें ब्राह्मणत्वको त्यागा था इसी पापसे इसके पुत्रोंकी मृत्यु हुई है ॥ ८ ॥ और पूर्वजन्ममें अपनी दुर्मतिसे वृद्ध माता पिताको छोड दिया था, अतएव इसके शरीरमे रोग होते हैं और इसकी स्त्रीको काकवन्ध्यात्वदोषके साथ घावके रोग होते है ॥ ९ ॥ हे वरारोहे ! जिससे इसके पुत्र हो अब उस शांतिको सुनो-प्रथम तो यह अपने घरके धनके आठवे भागको पुण्यकार्यमें लगावै ॥ १० ॥ हे सुव्रते ! फिर बीस तोले सुवर्णकी शिवजीकी मूर्ति बनवावै और इन मंत्रोंसे पूजन करै ॥ ११ ॥ मंत्र-हे गणाध्यक्ष ! हे सुरेशान ! हे सब उपद्रवोंके नाशक ! हे दुःखनिवारण ! मेरे पूर्वजन्मके कियेहुए पापोंको हरो ॥ १२ ॥ इस भांति गंध पुष्प धूप दीप नैवेद्य ताम्बूल आदि विविध फलोंसे प्रतिमाका पूजन करके वेदपाठी तपस्वी ब्राह्मणोंको देदे ॥ १३ ॥ अनन्तर कपिला गौके सुवर्णसे सींग मढाकर दान करै ॥ १४ ॥ फिर गणेश मन्त्रका एक लाख जप करावै जपका दशांश हवन मार्जन और तर्पण कराकर

एवं कृत्वा विधानं तु ब्राह्मणांश्च समर्चयेत् । एवं कृते वरारोहे शीघ्रं पुत्रः प्रजायते ॥ १६ ॥ आधयः संक्षयं यान्ति सर्वं पापं च नश्यति । ततो भवति वंशश्च व्याधिनाशश्च जायते ॥ १७ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाभाद्रपदानक्षत्रतृतीयचरणप्रायाश्चित्त-कथनं नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

## अथ त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

शिव उवाच ॥ मध्यदेशे सुरेशानि गोमत्या निकटे शुभे । बलभद्रपुरं ख्यातं वसन्ति बहवो जनाः ॥ १ ॥ तत्र ब्राह्मण एको हि युद्धाचाररतः सदा । ब्रह्मकर्मपरिभ्रष्टो ब्राह्मणानां च निन्दकः ॥२॥ तस्य भार्याद्वयं चासीदेकां त्यक्त्वा द्विजस्ततः । द्वितीयां तोषयामास वस्त्रामत्रैर्विभूषणैः ॥ ३ ॥

---

सौ वेदपाठी श्रोत्रिय ब्राह्मणोंको भोजन करावै ॥ १५ ॥ इस प्रकार ब्राह्मणका पूजन करै हे वरारोहे ! ऐसा करनेसे शीघ्र पुत्र प्राप्त होताहै ॥ १६ ॥ और सम्पूर्ण आधि व्याधि एवं पाप नष्ट होजाते हैं, फिर वंशकी वृद्धि होती है॥१७॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाभाद्रपदानक्षत्रतृतीय-चरणप्रायश्चित्तकथनं नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

श्रीशिवजी बोले-हे सुरेशानि ! मध्यदेशमें सुन्दर गोमतीके किनारे प्रसिद्ध बलभद्र पुरमें बहुतसे मनुष्य वसते थे ॥ १ ॥ उसके बीचमें एक ब्राह्मण रहता था, वह युद्धके आचारमें सदा तत्पर ब्राह्मणोंके कर्मको छोडकर ब्राह्मणोंकी निन्दा करता था ॥ २ ॥ उसकी दो स्त्रियां थी उनमेंसे एकको छोडकर दूसरी स्त्रीको भोजन वस्त्र पात्र और आभूषणोंसे प्रसन्न रखता था ॥ ३ ॥

पुत्राश्च बहवो जाता ज्येष्ठायां शिववल्लभे । आखेटकं सदा याति ब्राह्मणो गहने वने । मृगं हत्वा वरारोहे भोजनं कुरुते सदा ॥ ४ ॥ अग्निदग्धं वनं कृत्वा मृगपक्षिगणस्य च । वधं वै कुरुते मूढो निर्दयश्च द्विजाधमः ॥ ५ ॥ एवं वयोन्तरे जाते तस्य मृत्युरभूत्किल । पश्चान्मृता ततो भार्या पुंश्चली व्यभिचारिणी ॥ ६ ॥ यमदूतैर्महाघोरे नरके दारुणाभिधे । यमाज्ञया तत्र नीतो बह्वीं पीडां तु लब्धवान् ॥ ७ ॥ सप्ततिर्वै सहस्राणि वर्षाणि गिरिजे शिवे । भुक्तं नरकजं दुःखं बहुकष्टं सुदारुणम् ॥ ८ ॥ नरकान्निःसृतो देवि गर्दभस्त्वभवत्किल । महिषस्य पुनर्योनिं मानुषत्वं ततोऽलभत् ॥ ९ ॥ धनाढ्यो वैश्यवृत्तिश्च सज्जनानां च सेवकः । मध्यदेशेऽभवद्देवि गुणवान् पुत्रवर्जितः ॥ १० ॥ ब्रह्मकर्म यतस्त्यक्त्वा कृता वै शस्त्रधारणा । अतः पुत्रविहीनोऽयं जायन्ते बहुकन्यकाः ॥ ११ ॥

---

हे शिववल्लभे ! इसकी बडी स्त्रीके बहुत पुत्र उत्पन्न हुए यह ब्राह्मण सघन वनमें सदा शिकार खेलता था और हे वरारोहे ! मृगको मारकर भोजन किया करता था ॥ ४ ॥ यह अधम ब्राह्मण वनमें आग लगाकर बहुतसे मृग आदि पक्षियोंको निर्दयपनसे मार डालता था ॥ ५ ॥ इस प्रकारसे इसकी समस्त आयु बीतनेपर मृत्यु होगई, पीछेसे इसकी परपुरुषगामिनी व्यभिचारिणी स्त्रीकीभी मृत्यु होगई ॥ ६ ॥ तब यमराजकी आज्ञासे यमदूतोंने महादारुण घोर नरकमें गिरादिया, हे शिवे ! हे गिरिजे ! वहां इसने सत्तर हजारवर्षतक नरकके दारुण कष्ट और दुःख भोगे ॥ ७ ॥ ८ ॥ हे देवि ! जब नरकसे निकला तब गधेकी योनिको प्राप्त हुआ, फिर भैसकी योनिमे जाकर मनुष्ययोनिको प्राप्त हुआ है ॥ ९ ॥ हे देवि ! यहां धनवान् वैश्यकी वृत्ति करनेवाला और सज्जनोंका सेवक गुणी और पुत्ररहित होकर मध्यदेशमें बसता है ॥ १० ॥ पूर्वजन्ममें इसने ब्रह्मकर्मको छोडकर शस्त्र धारण किया था इस कारण इसके

अग्निदाहं यतः कृत्वा दग्धं वै काननं महत् । मृगपक्षिवृका हस्तान्नष्टा अस्य ज्वरी ततः ॥ १२ ॥ शान्तिं शृणु वरारोहे यतः पापप्रणाशनम् ॥ १३ ॥ गोपालमन्त्रं वै जप्त्वा लक्षसंख्यं वरानने । दशांशं हवनं कुर्यात्तर्पणं मार्जनं तथा ॥ १४ ॥ गोपालस्य सदा ध्यानं सदा गोपालकीर्त्तनम् ॥ १५ ॥ शालग्रामशिलादानं सुवर्णरजतान्वितम् । शुभ्रवस्त्रेण संयुक्तं देयं तच्छ्रोत्रियाय च ॥ १६ ॥ भूमिदानं ततः कुर्याद्गोदानं च सुरेश्वरि । तिलधेनुं ततो दद्याद्ब्राह्मणान्भोजयेत्ततः ॥ १७ ॥ एवं कृते महेशानि पुत्रश्चैव प्रजायते । व्याधयः संक्षयं यान्ति काकवन्ध्या लभेत्सुतम् ॥ १८ ॥

इति श्रीकर्मविपाकसंहितायां पूर्वाभाद्रपदानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

---

पुत्र नहीं हुआ और बहुतसी कन्या उत्पन्न हुई ॥ ११ ॥ पूर्वजन्ममें जो इसने पक्षी आदिकोंके स्थानमें अथवा वनमे आग लगाकर मृगआदि पक्षियोंको मारा था तिस पापसे इसके शरीरमें सदा ज्वर रहता है ॥१२॥ हे वरारोहे ! अब इसके पूर्वजन्मके पापोंको नाश करनेवाली शांतिको सुनो ॥ १३ ॥ हे वरानने ! फिर गोपालजीके मंत्रका एक लाख जप करावै जपका दशांश हवन, मार्जन, तर्पण करावै ॥ १४ ॥ सदा गोपालजीका ध्यान और गोपालनामका कोर्तन करै ॥ १५ ॥ सुवर्ण और चांदीके साथ सफेद वस्त्रसे युक्त करके शालिग्रामकी शिलाको दान कर श्रोत्रिय ब्राह्मणको देवै हे सुरेश्वरि ! अनन्तर भूमिदान और गोदान करै और तिलधेनुका दान करके ब्राह्मणोंको भोजन करावै ॥ १६ ॥ १७ ॥ हे महेशानि ! ऐसा करनेसे पुत्र प्राप्त होता है, संपूर्ण व्याधिये नष्ट होजाती हैं और काकवन्ध्यानारी सुतको प्राप्त करतीहै१८॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पूर्वाभाद्रपदानक्षत्रचतुर्थचरणप्रायश्चित्तकथनं नाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## अथ चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

### उत्तराभाद्रपदानक्षत्रफलम् ।

शिव उवाच ॥ उज्जयिन्यां महेशानि क्षत्रियो वसति प्रिये । वैश्यकर्मरतः सोऽपि करोति क्रयविक्रयम् ॥ १ ॥ तस्य भार्या विशालाक्षि कुलटा व्यभिचारिणी ॥ २ ॥ संचितं तेन महिषी-धनं रथगजादिकम् । छागमांसं वरारोहे प्रत्यहं स भुनक्ति हि ॥३॥ एकदा श्राद्धसमये ब्राह्मणे दुर्वचोऽवदत् । पुरोहितस्य मरणं तदुद्देशेन वै शिवे । ततो बहुदिने याते तस्य मृत्युरभूत् पुनः ॥ ४ ॥ यमाज्ञया च तद्दूतैर्निक्षिप्तो नरके सदा । कुंभी-पाके महाघोरे षष्टिवर्षसहस्रकम् ॥ ५ ॥ महत्कष्टं ततो भुक्तं नरकान्निःसृतो यदा । सर्पयोनिं ततो भुक्त्वा कुक्कुटत्वं पुनः कृमिः ॥ ६ ॥ मानुषत्वं पुनर्लेभे देशे पुण्यतमे शुभे । कुला-चाररतः सोऽपि देवतागुरुपूजकः ॥ ७ ॥

---

शिवजी बोले-हे महेशानि ! हे प्रिये ! उज्जैन नगरीमें एक क्षत्रिय रहता था वह वैश्यकर्ममें रत रहकर क्रयविक्रय किया करता था ॥१ ॥ हे विशालाक्षि ! तिसकी स्त्री कुलटा और व्यभिचारिणी थी ॥ २ ॥ इस क्षत्रियने व्यापारके द्वारा बहुतसी भैंसे रथ घोडे हाथी इकट्ठे किये और प्रतिदिन हे वरारोहे ! यह बकरेके मांसको खाता था ॥ ३ ॥ हे शिवे ! इसने एक दिन श्राद्धके समय ब्राह्मणसे दुर्वचन कहे उस दुर्वचनको सुनकर इसका पुरोहित मरगया बहुत दिनोंके पीछे इसकीभी मृत्यु हुई ॥ ४ ॥ तब यमराजकी आज्ञासे यमदूतोंने महाघोर कुंभीपाक नरकमें साठ हजार वर्षोंके लिये डालदिया ॥ ५॥ वहां बडे कष्टोंको भोगकर जब यह निकला तब सर्पकी योनिको प्राप्त हुआ सर्पयोनिको भोग मुरगे और कीडेकी योनिको प्राप्त हुआ ॥ ६ ॥ फिर अतिपवित्र सुंदर देशमें मनुष्ययोनिको प्राप्त होकर अपने कुलके आचारमे रत और गुरुका पूजक

पुत्राश्च बहवो जातास्तेषां मृत्युश्च जायते । शरीरे रोग उग्रो वै बहु कष्टं मुहुर्मुहुः ॥ ८ ॥ पूर्वजन्मकृतं पापं भुज्यते खलु मानवैः । पुण्यं शृणु वरारोहे पूर्वपापप्रणाशनम् ॥ ९ ॥ दशपलसुवर्णस्य प्रतिमां विप्ररूपिणीम् । भूषितां विविधैर्वस्त्रै रत्नैर्देशसमुद्भवैः ॥ १० ॥ पूजयेच्चापि विधिवन्मंत्रेणानेन भोः शिवे ॥ ११ ॥ देवदेव महादेव भुवनानां च पालक । मम पूर्वकृतं पापं तत्क्षमस्व दयानिधे ॥ १२ ॥ त्वमेव शरणं देव त्वद्भक्तानां दिनेदिने । पूजयिष्यामि सततं नमामि चरणौ तव ॥ १३ ॥ ततो वै वेदिकामध्ये सुवितानविभूषिते । स्थापयेत्प्रतिमां देवि गन्धपुष्पैः सुपूजयेत् ॥ १४ ॥ ॐ शिवाय नमः ॥ ॐ हराय नमः ॥ ॐ त्र्यंबकाय नमः ॥ ॐ कपर्दिने नमः ॥ ॐ भवाय नमः ॥ ॐ शंकराय नमः ॥ ॐ शशिशेखराय नमः ॥ ॐ उग्राय नमः ॥

---

हुआ ॥ ७ ॥ यहां इसके अनेक पुत्र उत्पन्न हुए परन्तु उनकी मृत्यु होगई अब शरीरमे उग्र रोग उत्पन्न होकर वारंवार कष्ट होता है ॥ ८ ॥ हे वरारोहे! पूर्वजन्मका किया हुआ कर्मफल मनुष्यको अवश्य भोगना पडता है, अब इसके पूर्वपापकी नाश करनेवाली शांतिको सुनो ॥ ९ ॥ फिर चालीस तोले सोनेकी ब्राह्मणकी मूर्ति बनाकर अनेक भांतिके वस्त्र और रत्नादिकोसे भूषित करे ॥ १० ॥ हे शिवे ! फिर इन मंत्रोंसे विधिपूर्वक पूजन करे ॥ ११ ॥ मंत्र–हे देवदेव ! हे महादेव ! हे भुवनोंके पालक ! हे दयानिधे ! मेरे पूर्वजन्मके किये हुए संपूर्ण पापोंको क्षमा करो ॥ १२ ॥ हे देव ! अपने भक्तोंके आपही शरण हो, मैं निरन्तर आपका पूजन करूंगा आपके चरणकमलोंमें प्रणाम है ॥ १३ ॥ पीछे सुवितानसे ( सुंदरचँदोवेसे ) भूषित वेदीके बीचमें प्रतिमाको स्थापित करके हे देवि ! गन्धपुष्पादिसे पूजन करै ॥ १४ ॥ ॐ शिवाय नमः, ॐ हराय नमः, ॐ त्र्यंबकाय नमः, ॐ कपर्दिने नमः, ॐ भवाय नमः, ॐ शंकराय नमः, ॐ शशिशेखराय नमः, ॐ उग्राय नमः,

ॐ उग्ररूपाय नमः ॥ ॐ अहिर्बुध्न्याय नमः ॥ ॐ महादेवाय नमः ॥ गंधपुष्पादिभिर्देवि पूजयित्वा पृथक्पृथक् ॥ १५॥ षडक्षरं महामंत्रं जपेल्लक्षं महामनाः । दशांशं हवनं तद्वत्तर्पणं मार्जनं तथा ॥ १६ ॥ ततो गां कपिलां दद्यात्स्वर्णरत्नविभूषिताम् । ब्राह्मणाय ततो दद्याच्छय्यादानमनंतरम् ॥ १७॥ प्रतिमां पूजितां चैव ब्राह्मणाय शिवात्मने । प्रदद्याद्वेदविधिना ब्राह्मणान् भोजयेत्ततः ॥ १८ ॥ बन्धुभिः सह भुञ्जीत गुरुं च प्रार्थयेत्ततः । ब्रह्मविष्णुमहेशांश्च तत्स्वरूपं गुरुं विभुम् । प्रणमेच्चरणौ तस्य गुरुदेवस्य वै पुनः ॥ १९ ॥ ततः प्रदक्षिणां कृत्वा साष्टांगं प्रणिपत्य च । विसर्जयेत्तदा देवं सर्वकामप्रदं शुभम् ॥ २० ॥ एवं कृते महेशानि पुत्रपौत्रविवर्धनम् । व्याधयः संक्षयं यांति काकवन्ध्या पुनः सुतम् ॥ २१ ॥

---

ॐ उग्ररूपाय नमः, ॐ अहिर्बुध्न्याय नमः, ॐ महादेवाय नमः । हे देवि ! गंधपुष्पादिसे पृथक् २ पूजन करै ॥ १५ ॥ फिर " ॐ नमः शिवाय " इस मंत्रका एक लाख जप करावै जपका दशांश हवन, तर्पण और मार्जन करावे ॥ १६ ॥ अनंतर सुवर्ण रत्नादिसे भूषित करके एक कपिला गौ ब्राह्मणको दे और शय्यादान करै ॥ १७ ॥ इस प्रकार प्रतिमाका पूजन कर शिवरूपी ब्राह्मणको वेदकी विधिसे दे और ब्राह्मणोंको भोजन करावै ॥ १८ ॥ फिर गुरुकी प्रार्थना करै, ब्रह्मा, विष्णु, महेशके और तत्स्वरूपी विभु समर्थ गुरुदेवके चरणोंमें वारंवार प्रणाम करै ॥ १९ ॥ अनन्तर प्रदक्षिणा करके साष्टांग प्रणाम कर संपूर्ण कार्यमे मङ्गल करनेवाले देवका विसर्जन करै॥२०॥ हे महेशानि ! ऐसा करनेसे पुत्रपौत्रकी वृद्धि होती है, समस्त व्याधिये नष्ट

लभते नात्र सन्देहो मम वाक्यं न चान्यथा ॥ २२ ॥

इति श्रीकर्मविपाकसंहितायाम् उत्तराभाद्रपदानक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नाम चतुरुत्तरशततमोऽध्यायः ॥ १०४ ॥

---

## अथ पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

श्रीशिव उवाच ॥ प्रतिष्ठाने महादेवि कायस्थो वसति प्रिये । स्वकर्मणि रतो धीरः शांतः शक्तेरुपासकः ॥ १ ॥ एकस्तस्याभवन्मित्रं वैश्यो धनसमन्वितः । कायस्थस्तु तदा देवि गमनं तद्गृहेऽकरोत् ॥ २ ॥ आदरं बहुधा कृत्वा किंचित्कालं तदोषतुः । मासमेकं तदा देवि वासो वैश्यगृहेऽभवत् ॥ ३ ॥ वैश्यभार्या विशालाक्षी मृदङ्गी प्रियभाषिणी । प्रीतिरासीद्देवि तस्याः कायस्थे च गुणाकरे ॥ ४ ॥

---

होजाती हैं और काकवंध्या नारी निःसन्देह सुतको प्राप्त करती है, यह मेरा सत्य वचन है विपरीत नहीं हो सकता ॥ २१ ॥ २२ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराभाद्रपदानक्षत्रप्रथमचरण-प्रायश्चित्तकथनं नाम चतुरुत्तरशततमोऽध्यायः ॥ १०४ ॥

---

शिवजी बोले-हे देवि ! हे प्रिये ! प्रतिष्ठान नगरमे एक कायस्थ रहता था, यह कायस्थ अपने कर्ममें रत, धीर, शान्त और देवीका उपासक था॥१॥ हे देवि ! इस कायस्थका एक धनी वैश्य मित्र था, इस वैश्यके यहां एक दिन यह कायस्थ आया ॥ २ ॥ हे देवि ! तब वैश्यने बडा आदर सत्कार किया, इस कायस्थने एक मासतक वैश्यके घरमें निवास किया ॥ ३ ॥ हे देवि ! उस वैश्यकी स्त्री बडे नेत्रोवाली कोमलांगी और प्रियवचन बोलनेवाली थी, तिसकी

कायस्थोऽपि गृहं यातस्त्यक्त्वा वैश्यगृहं शिवे । वैश्यपत्नी पुनर्देवि कायस्थस्य गृहे गता ॥ ५ ॥ उभयोश्चाभवद्देवि विग्रहो वैश्यशूद्रयोः । एवं बहुगते काले वृद्धे सति वरानने ॥ ६ ॥ कायस्थस्याभवन्मृत्युर्यमदूतैर्यमाज्ञया । निक्षिप्तो नरके घोरे षष्टिवर्षसहस्रकम् ॥७॥ भुक्तं बहुविधं दुःखं नरके कृमिसंकुले । नरकान्निःसृतो देवि बलीवर्दो बभूव ह ॥ ८ ॥ ऋक्षस्य वै ततो योनिं छागयोनिमनन्तरम् । मानुषत्वं पुनर्लेभे धनधान्यसमन्वितम् ॥ ९ ॥ मित्रपत्नी यतो भुक्ता स्वभार्यां त्यज्य वैभवैः । तत्पापेन भवेद्देवि न पुत्रः खलु वै क्वचित् ॥ १० ॥ प्रथमं कन्यका जाता विधवा पूर्वपापतः । पुनः पुत्रस्य सन्देहः शरीरे सततं ज्वरः ॥ ११ ॥ चरणे च भवेत्पीडा जंघे कट्यां गुदे तथा । मृतवत्सा भवेन्नारी गर्भपातः पुनःपुनः ॥ १२ ॥

---

गुणी कायस्थसे प्रीति होगई ॥ ४ ॥ हे शिवे ! हे देवि ! तब कायस्थ वैश्यके घरको छोडकर अपने घरको चला गया, पीछेसे वैश्यकी स्त्रीभी कायस्थके घरको चलीगई ॥ ५ ॥ हे देवि ! तब वैश्य और कायस्थमे परस्परमें क्लेश हुआ, हे वरानने ! ऐसे बहुत काल बीतनेपर वृद्ध होकर कायस्थकी मृत्यु होगई, यमराजकी आज्ञासे यमदूतोने घोर नरकमें साठ हजार वर्षके लिये डाल दिया ॥ ६ ॥ ७ ॥ वहां अनेक प्रकारके कष्टोंको कीडेवाले नरकमें भोगकर जब निकला हे देवि ! तब इसको बैलकी योनि प्राप्त हुई ॥ ८ ॥ अनन्तर रीछकी योनिको भोग बकरेकी योनिको भोगा फिर धनधान्यसे युक्त होकर मनुष्ययोनिको प्राप्त हुआ ॥ ९ ॥ हे देवि ! इसने पूर्वजन्ममें अपनी पत्नीको त्यागकर मित्रकी स्त्रीसे भोग किया तिस पापसे इसके कोई पुत्र उत्पन्न नही होता है ॥ १० ॥ इसके जो प्रथम कन्या उत्पन्न हुई सो पूर्वपापसे विधवा होगई, फिर पुत्र होनेका सन्देह हुआ और इसके शरीरमे निरन्तर ज्वर रहता है ॥ ११ ॥ पैरोंमे जंघाओंमे कमरमें और गुदामे पीडा रहती है, इसकी स्त्री मृतवत्सा दोषको प्राप्त हुई और

शान्तिं शृणु वरारोहे पूर्वपापप्रणाशिनीम् । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ १३ ॥ गायत्रीमूलमन्त्रस्य लक्षं जाप्यं तु कारयेत् । हवनं तद्दशांशेन तर्पणं मार्जनं तथा ॥ १४ ॥ ब्राह्मणान्भोजयेत्षष्टिं सर्पिषा पायसेन च । गोदानं च यथाशक्ति भूमिदानं ततः शिवे ॥ १५ ॥ वापीकूपतडागांश्च पथिमध्ये तु कारयेत् । एवं कृते न सन्देहो वंशवृद्धौ वरानने ॥ १६ ॥ ज्वराणां संक्षयः शीघ्रं काकवन्ध्या लभेत्सुतम् । मृतवत्सा च या नारी जीवद्वत्सा भवेत्खलु ॥ १७ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराभाद्रपदानक्षत्रद्वितीयचरणप्रायश्चित्त-कथनं नाम पंचाधिकशततमोऽध्यायः ॥ १०५ ॥

## अथ षडधिकशततमोऽध्यायः ॥ १०६ ॥

शिव उवाच ॥ नैमिषारण्यदेशे तु मिश्रके च पुरोत्तमे ।
तत्र दामोदरो नाम राजपुत्रस्तदाऽवसत् ॥ १ ॥

---

उसके गर्भ वारंवार गिरजाते हैं ॥१२॥ हे वरारोहे ! अब पूर्वजन्मके पापोंकी नाश करनेवाली शांतिको सुनो-प्रथम तो यह अपने घरका छठा अंश पुण्य-कार्यमे लगावै ॥ १३ ॥ फिर गायत्रीमूलमंत्रका एक लाख जप करावै, जपका दशांश हवन मार्जन और तर्पण करावै ॥ १४ ॥ हे शिवे ! खीर और खांडसे साठ ब्राह्मणोंको भोजन करावै, अनन्तर गोदान करके यथाशक्ति भूमि-दान करै ॥ १५ ॥ और मार्गमें बावडी कुआँ एवं तालाव बनवावै हे वरानने ! ऐसा करनेसे निःसन्देह वंशकी वृद्धि होती है ॥ १६ ॥ और संपूर्ण ज्वर शीघ्रही नष्ट हो जाते है, काकवंध्या नारी पुत्रको प्राप्त करती है मृतवत्सा नारीभी सौ वर्षकी आयुवाले पुत्रको प्राप्त करती है ॥ १७ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराभाद्रपदानक्षत्रद्वितीयचरण-प्रायश्चित्तकथनं नाम पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

शिवजी बोले-हे पार्वति ! नैमिषारण्य देशके बीच उत्तम मिश्रकपुरमें

तस्य पत्नी वरारोहे नाम्ना वंशमती तथा । परस्त्रीलंपटो धूर्तो धनाढ्यो धनगर्वितः ॥ २ ॥ भार्यां त्यक्त्वा वरारोहे परस्त्रीणां च संग्रहम् । करोति प्रत्यहं देवि मृगमांसं भुनक्त्यपि ॥ ३ ॥ आखेटार्थं सदा याति मृगांश्च मृगशावकान् । प्रत्यहं घातयति स व्याधरूपो महाशठः ॥ ४ ॥ एवं सर्वं वयो यातं वृद्धे सति वरानने । मरणं तस्य वै जातं यमदूतैर्यमाज्ञया ॥ ५ ॥ नरके वै महाघोरे निक्षिप्तः शृंखलैर्युतः । समतिं वै सहस्राणि बहु कष्टं प्रभुक्तवान् ॥ ६ ॥ नरकान्निःसृतो देवि व्याघ्रयोनावजायत । कपियोनिस्ततो देवि मानुषत्वमभूत्पुनः ॥ ७ ॥ धनधान्ययुतः साधुस्तस्य भार्या मृतप्रजा ॥ ८ ॥ ब्राह्मणीगमनं देवि पूर्वजन्मनि यत्कृतम् । तत्पापेन वरारोहे तनौ पीडा मुहुर्मुहुः ॥९॥ मृगा हताश्च बहवो हताश्च मृगशावकाः । तेन पापेन भो देवि मृतवत्सत्वमाप्तवान् ॥ १० ॥

---

दामोदरनामक एक राजपुत्र रहता था ॥ १ ॥ हे वरारोहे ! उसकी स्त्रीका नाम वंशमती था और दामोदर पराई स्त्रियोंमे लम्पट, धूर्त, धनी और धनसे गर्वित रहता था ॥ २ ॥ हे वरारोहे ! हे देवि ! यह अपनी स्त्रीको छोडकर पराई स्त्रियोंका संग्रह करता और प्रतिदिन मृगके मांसको खाता था ॥३॥ व्याधरूपको धारण कर यह महाशठ शिकार खेलनेको जाता और वहां मृगोंके बच्चोंको मारा करता था ॥ ४ ॥ हे वरानने ! इस प्रकारसे इसकी आयु बीती वृद्ध होकर मृत्युको प्राप्त हुआ, तब यमराजकी आज्ञासे यमदूतोंने ॥५॥ सांकलोंसे बांधकर महाघोर नरकमे डाल दिया, वहां इसने हजार वर्षतक अनेक प्रकारके कष्ट भोगे ॥ ६ ॥ हे देवि ! जब नरकसे निकला तब व्याघ्रकी योनिको प्राप्त हुआ, फिर वानरकी योनिको भोगकर मनुष्ययोनिको प्राप्त हुआ ॥ ७ ॥ यह पूर्वजन्मके पुण्योंसे धनधान्यसे युक्त और पापोंसे इसकी स्त्रीको मृतवत्सा दोष लगा है ॥ ८ ॥ हे देवि ! पूर्वजन्ममे जो इसने ब्राह्मणीसे भोग किया तिस पापसे हे वरारोहे ! इसके शरीरमें वारंवार पीडा होती है ॥ ९ ॥ हे देवि ! पूर्वजन्ममें जो इसने मृग और मृगोंके बच्चोंके मारा

तस्योपायं प्रवक्ष्यामि शृणु देवि धृतव्रते ॥ ११ ॥ शिवस्य वैदिकं मन्त्रं लक्षं तु प्रजपेन्मुदा । लक्षद्वयं वरारोहे षडक्षरजपं तथा ॥ १२ ॥ शिवमूर्तिं दशपलसुवर्णस्य तु कारयेत् । ततस्तां पूजयेद्धीमान्गंधपुष्पादिचन्दनैः । धूपैर्दीपैः सुनैवेद्यैरावाहनविसर्जनैः ॥ १३ ॥ होमं च कारयेत्प्रीत्या कुण्डे सुभ्रूः सुशोभने । दशांशं हवनं तद्वन्मार्जनं तर्पणं ततः ॥ १४ ॥ स्वर्णशृंगीं ततो दद्यात्सवत्सां युवतीं तथा । ततस्तु भोजयेद्विप्रान्पयसा मोदकेन च ॥ १५ ॥ एवं कृते महेशानि शीघ्रं पुत्रश्च जायते । व्याधयः संक्षयं यान्ति नात्र कार्या विचारणा ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराभाद्रपदानक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम षडाधिकशततमोऽध्यायः ॥ १०६ ॥

---

था तिस पापसे इसकी नारी मृतवत्सादोषको प्राप्त हुई है ॥ १० ॥ हे देवि ! हे धृतव्रते ! अब इसके पापोंकी शांतिका उपाय कहता हूँ तुम सुनो ॥ ११ ॥ हे वरारोहे ! प्रथम यह शिवके वैदिकमंत्रका एक लाख जप करावै, फिर ( ॐ नमः शिवाय ) इस मंत्रका दो लाख जप करावै ॥ १२ ॥ अनन्तर चालीस तोले सुवर्णकी शिवजीकी मूर्ती बनवावै, फिर बुद्धिमान् मनुष्य उस मूर्तिमे शिवजीका आवाहन करै और गंध पुष्प चंदन धूप दीप नैवेद्य आदिसे पूजन कर शिवजीका विसर्जन करै ॥ १३ ॥ हे सुभ्रू ! हे सुशोभने ! फिर सुन्दर कुंडमें जपका दशांश हवन मार्जन और तर्पण करावै ॥ १४ ॥ फिर बछडे सहित तरुण गायको सुवर्णसे सींग मढाकर दान करै और दूध एवं लड्डुओंसे ब्राह्मणोंको भोजन करावै ॥ १५ ॥ हे महेशानि ! ऐसा करनेसे शीघ्र पुत्र प्राप्त होताहै और सम्पूर्ण व्याधियें नष्ट होजाती हैं, इसमे कुछ भी सन्देह नही ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराभाद्रपदानक्षत्रतृतीयचरणप्रायश्चित्तकथनं नाम षडाधिकशततमोऽध्यायः ॥ १०६ ॥

---

## अथ सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

शिव उवाच ॥ नगरेऽग्रपुरे देवि वैश्य एको हि तिष्ठति । दुणदास इति ख्यातस्तस्य भार्या सुगोपिका । चंचला कुटिला सा तु पतिवंचनतत्परा ॥ १ ॥ एकस्मिन्समये देवि द्विज एकः समागतः । बहुस्वर्णेन संयुक्तो धनाढ्यो बहुभाग्यवान् ॥ २ ॥ कोटिमुद्रां वरारोहे ततो वैश्यगृहे द्विजः । स्थापयामास धर्मात्मा नेपालेऽथ द्विजो गतः ॥ ३ ॥ तत्र वै मरणं देवि ब्राह्मणस्य ततोऽभवत् । तद्धनं तेन वैश्येन सर्वं भुक्तं वरानने ॥ ४ ॥ ततो वार्धक्यमापन्नो महामार्या उपद्रवात् । मरणं तस्य वैश्यस्य पुत्रभार्यायुतस्य च ॥ ५ ॥ यमदूतैर्महाघोरैर्महाघोरे सकर्दमे । क्षिप्तोऽयं षष्टिसाहस्रवर्षं देवि सुशोभने ॥ ६ ॥ नरकान्निःसृतो देवि सूकरत्वं ततोऽलभत् । ऋक्षयोनिं ततो देवि महिषत्वं ततोऽलभत् ॥ ७ ॥

---

शिवजी बोले—हे देवि ! अग्रपुरनगरमें एक वैश्य रहता था, दुणदास उसका नाम था और गोपिका नामवाली उसकी स्त्री थी, यह गोपिका चंचला कुटिला और पतिवंचिका थी ॥ १ ॥ हे देवि ! हे वरारोहे ! एक समय बहुतसा धन लेकर धनी भाग्यवान् एक ब्राह्मण दुणदासके घर आया ॥ २ ॥ उस धर्मात्मा ब्राह्मणने करोड मुद्रा वैश्य दुणदासके घर रख दिये और आप नेपालको चला गया ॥ ३ ॥ हे देवि ! हे वरानने ! वहां जाकर उस ब्राह्मणकी मृत्यु होगई तब उसके सम्पूर्ण धनको वैश्यने भोगा ॥ ४ ॥ अनन्तर महामारीके उपद्रवसे वृद्धावस्थाको प्राप्त होकर वैश्यकी स्त्रीपुत्रसमेत मृत्यु होगई ॥ ५ ॥ हे देवि ! हे सुशोभने ! तब महाघोर यमदूतोंने इसे घोर कर्दम नकरमें साठ हजार वर्षोंके लिये डाल दिया ॥ ६ ॥ हे देवि ! नरकसे निकलकर शूकरकी योनिको प्राप्त हुआ, हे देवि ! फिर रीछकी

मानुषत्वं ततो देवि सर्वलोकाजितं परम् । धनधान्यसमायुक्तं पुत्रकन्याविवर्जितम् ॥ ८ ॥ ब्राह्मणस्य यतो देवि धनं भुक्तं सुनिर्भयम् । पूर्वजन्मनि देवेशि ततः पुत्रो न जायते ॥ ९ ॥ अस्य शान्तिं प्रवक्ष्यामि शृणु देवि सुशोभने ॥ १० ॥ गायत्री-मूलमंत्रेण पञ्चलक्षजपस्ततः । हवनं तद्दशांशेन मार्जनं तर्पणं ततः ॥ ११ ॥ ब्राह्मणस्य ततो देवि प्रतिमां कारयेत्ततः । शतपलसुवर्णस्य रत्नवस्त्रविभूषिताम् ॥ १२ ॥ पूजयेच्चैव देवेशि चन्दनाद्यैः सुपुष्पकैः । धूपैर्दीपैर्महेशानि नैवेद्यैर्मोदकैस्तथा । प्रतिमां पूजितां तां तु ब्राह्मणाय समर्पयेत् ॥ १३ ॥ ततो गां कपिलां दद्यात्स्वर्णशृङ्गीं सनूपुराम् । ब्राह्मणान्भोजयेत्पश्चात् सर्पिषा पायसेन च ॥ १४ ॥ गोशतं च ततो दद्याद्घटदानं घृतस्य च । प्रयागे माघमासे तु स्नानं च सह भार्यया ॥ १५ ॥

---

योनिको प्राप्त कर महिषकी योनिको प्राप्त हुआ ॥ ७ ॥ हे देवि ! अनन्तर मनुष्ययोनिको प्राप्त हुआ, यहांपर सब लोकोंसे अजित, धनधान्यसे युक्त और पुत्रकन्याओंसे रहित हुआ ॥ ८ ॥ हे देवि ! हे देवेशि ! पूर्वजन्ममें इसने निर्भय होकर जो ब्राह्मणका धन भोगा इस कारणसे इसको पुत्र नहीं होता है ॥ ९ ॥ हे देवि ! हे सुशोभने ! अब इसके पापोंकी शांतिको कहता हूँ तुम सुनो ॥ १० ॥ प्रथम यह गायत्री मूल मंत्रका पांच लाख जप करावै जपका दशांश हवन, मार्जन और तर्पण करावै ॥ ११ ॥ हे देवि ! पीछे चार सौ तोले सुवर्णकी ब्राह्मणकी मूर्ति बनवावै फिर उस मूर्तिको रत्नवस्त्रादिसे विभूषित कर ॥ १२ ॥ हे देवि ! हे महेशानि ! चन्दन आदि सुन्दर पुष्पोंसे धूप दीप नैवेद्य आदि लड्डुओंसे पूजन करै और उस मूर्तिको ब्राह्मणके लिये देदे ॥ १३ ॥ अनन्तर कपिला गौके सुवर्णसे सींग मढाय और चांदीसे खुर मढाय दान करै, पीछे घी और खीरसे ब्राह्मणोंको भोजन करावै ॥ १४ ॥ माघके महीनेमें स्त्रीसहित प्रयागराजमें स्नान कर

एवं कृते भवेत्पुत्रः शीघ्रमेव न संशयः ।
व्याधयः संक्षयं यांति काकवन्ध्या लभेत्सुतम् ॥ १६ ॥

इति श्रीकर्मविपाकसंहितायामुत्तराभाद्रपदानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

## अथाष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

### रेवतीनक्षत्रफलम् ।

श्रीशिव उवाच ॥ वैदण्डे च पुरे देवि लुब्धको वसति प्रिये । सेवकेति समाख्यातस्तस्य भार्या तु निष्ठुरा ॥ १ ॥ अतीव निर्दयो देवि विहंगमृगघातकः । प्रत्यहं मृगमांसस्य विक्रयं कुरुते खलः ॥ २ ॥ एवं सर्वं वयो यातं वृद्धत्वे तु वरानने । मरणं तस्य वै जातं यमदूतैर्यमाज्ञया ॥ ३ ॥ निक्षिप्तो नरके घोरे षष्टिवर्ष-सहस्रकम् । भुक्तं च विविधं दुःखं कृमिसूचीमुखादिजम् ॥ ४ ॥

---

सौ गौ और सौ घी भरे हुए घडोका दान करै ॥ १५ ॥ ऐसा करनेसे निःसंदेह शीघ्र पुत्र प्राप्त होता है और संपूर्ण व्याधियोसे मुक्त होकर काकवंध्या नारी सुतको प्राप्त करती है ॥ १६ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायामुत्तराभाद्रपदानक्षत्रचतुर्थचरण-
प्रायश्चित्तकथनं नाम सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

श्रीशिवजी बोले-हे देवि ! हे प्रिये ! वैदंडपुरमे सेवकनामक एक लुब्धक रहता था और कटुभाषिणी इसकी स्त्री थी ॥ १ ॥ हे देवि ! यह बडा निर्दयी और मृगोको मारनेवाला था प्रतिदिन मृगमांसको बेचकर अपना निर्वाह करता था ॥ २ ॥ हे वरानने ! इस भांति इसकी सब आयु बीती पीछे वृद्ध होकर मरगया तब यमराजकी आज्ञासे यमदूतोने ॥ ३ ॥ घोर नरकमें साठ हजार वर्षके लिये डाल दिया, वहां सुईके समान मुखवाले

नरकान्निःसृतो देवि मृगत्वं प्राप्तवान् खलु। शृगालस्य ततो योनिं छागयोनिं ततोऽलभत् ॥ मानुषत्वं पुनर्जातं धनधान्यसमन्वितम् ॥ ५ ॥ पूर्वजन्मनि देवेशि जलदानं च वै कृतम् । धनाढ्यत्वं ततो जातं न पुत्रो मृगताडनात् ॥ ६ ॥ पुत्राश्च बहवो जाता मृत्युस्तेषां च जायते । रोगाणां च तथोत्पत्तिर्ज्वरश्चैव पुनः पुनः ॥ ७ ॥ शान्तिं शृणु वरारोहे पूर्वपापप्रणाशिनीम् । गृहवित्तषडंशेन पुण्यकार्यं च कारयेत् ॥ ८ ॥ गायत्र्याश्च शिवायेति जातवेदेति वै पुनः । दशायुतं जपं कुर्याद्दशांशं हवनं ततः ॥ ९ ॥ दशांशं मार्जनं देवि तर्पणं तद्दशांशतः । ततो वै भोजयेत् प्रेम्णा द्विजान् देवि दशांशतः ॥ १० ॥ दशवर्णां ततो दद्याद् वृषभं भूषितं शुभम् ॥ ११ ॥ पलपञ्चसुवर्णस्य माल्यं मेरुयुतं तु वै । ब्राह्मणाय ततो दद्याच्छय्यादानमनन्तरम् ॥ १२ ॥

---

कीडोसे दुःखी होकर अनेक प्रकारके कष्ट पाये ॥ ४ ॥ हे देवि ! जब यह नरकसे निकला तब मृगयोनिको प्राप्त हुआ फिर शृगालयोनिको प्राप्त होकर छागयोनिको प्राप्त हुआ, पीछे धनधान्यसे युक्त होकर मनुष्ययोनिको प्राप्त हुआ ॥ ५ ॥ हे देवेशि ! पूर्वजन्ममे इसने जलदान किया था इस कारणसे यह धनी हुआ और मृगोंके मारनेसे उसको पुत्र नही प्राप्त हुआ॥६॥हे देवि ! वैसे इसके पुत्र बहुत उत्पन्न हुए परन्तु उनकी मृत्यु हो गई और इसके शरीरमें वारंवार रोग और ज्वर उत्पन्न होते हैं ॥ ७ ॥ हे वरारोहे ! अब इसके पापोंकी नाश करनेवाली शांतिको सुनो-प्रथम तो यह अपने घरके छठे अंशको पुण्यकार्यमें लगावै ॥८॥ "गायत्री" "ॐ नमः शिवाय" "जातवेदसे" इन मंत्रोका तीन लाख जप करावै जपका दशांश हवन मार्जन करावै, मार्जनका दशांश तर्पण करावै, तर्पणका दशांश संख्या परिमित ब्राह्मणभोजन करावै ॥ ९ ॥ १० ॥ इसके उपरान्त दशवर्णवाली गौ और सुंदर बैलको भूषित करके दान करै ॥ ११ ॥ पीछे बीस तोले सुवर्णकी मेरुसहित माला

एवं कृते वरारोहे पुत्रः खलु प्रजायते ।
व्याधयः संक्षयं यांति काकवन्ध्या लभेत्सुतम् ॥ १३ ॥

इति श्रीकर्मविपाकसंहितायां रेवतीनक्षत्रप्रथमचरणप्रायश्चित्त-
कथनं नामाष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

---

## अथ नवाधिकशततमोऽध्यायः ॥ १०९ ॥

श्रीशिव उवाच ॥ श्रीपुरे नगरे देवि द्विज एकोऽवसत्पुरा । पुत्रपौत्रयुतो देवि धनाढ्यो वेदवर्जितः ॥ १ ॥ वैश्यकर्मरतः सोऽपि विक्रयं कुरुते सदा । महिषीवृषवस्त्राणां चामरव्याल-वाजिनाम् ॥ २ ॥ प्रत्यहं विक्रयं कृत्वा धनस्य बहुसंग्रही । एकदा तद्गृहे देवि गुरुस्तस्य समागतः ॥ ३ ॥ आदरं बहु चक्रे स मासे जाते ततः शिवे । गुरुरस्य हरिद्वारे स्नानार्थं च गतस्तदा ॥ ४ ॥ गुरुपुत्रस्तु वै मूर्तिं स्वर्णरत्नयुतां तथा । सद्रव्यां वै ततो देवि ब्राह्मणाय समर्प्य च ॥ ५ ॥

---

बनवाकर ब्राह्मणको दे फिर शय्यादान करै ॥ १२ ॥ हे वरारोहे ! ऐसा करनेसे निश्चय पुत्रकी प्राप्ति होती है, सम्पूर्ण व्याधियें नष्ट हो जाती हैं, काक-वंध्या नारी पुत्रको प्राप्त करती है ॥ १३ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां रेवतीनक्षत्रप्रथमचरण-
प्रायश्चित्तकथनं नामाष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

---

शिवजी बोले-हे देवि ! श्रीपुरनगरमें पुत्रपौत्रसे युक्त धनी और वेदरहित एक ब्राह्मण वसता था ॥ १ ॥ वह वैश्यकार्यमे लीन रहकर भैंस, बैल, वस्त्र, चामर, हाथी और घोडे इनको खरीदकर बेचा करता था । हे देवि ! इस व्यापारसे इसने बहुतसा धन इकट्ठा किया, एक समय इसका गुरु इसके घर आया ॥ २ ॥ ३ ॥ हे शिवे ! तब इसने गुरुका बडा आदर सत्कार किया; एक महीना रहकर गुरुजी हरिद्वार स्नान करनेको चलेगये ॥ ४ ॥ पीछे गुरुका पुत्र आया और सुवर्ण रत्नादीसे युक्त अपनी और पिताकी

हरिद्वारे ततो गत्वा तत्र प्राणमथात्यजत् । मूर्तिद्वयं गुरोश्चैव विक्रीय तद्व्ययं कृतम् ॥ ६ ॥ एवं बहुगते काले मरणं ब्राह्मणस्य च । यमाज्ञया तस्य दूतैर्नरके नाम्नि कर्दमे । निक्षिप्तो वै ततो देवि षष्टिवर्षसहस्रकम् ॥ ७ ॥ नरकान्निःसृतो देवि व्याघ्रयोनिं ततोऽलभत् । बिडालस्य पुनर्योनिं मानुषत्वं ततोऽलभत् ॥ ८ ॥ तीर्थे पुण्यतमे देवि कोशलायां सुरेश्वरि । ब्राह्मणस्य कुले जज्ञे ज्ञानवान्प्रियदर्शनः ॥ ९ ॥ देवतायतनप्रीतिः परस्त्रीलम्पटस्तथा ॥ १० ॥ तस्यापत्यत्रयं देवि कन्यका पुत्रकौ तथा । तेषां वै मरणं जातं पुनः पुत्रो न जायते ॥ ११ ॥ काकवन्ध्याऽभवद्भार्या गौराङ्गी सुन्दरी तु सा । तन्वङ्गी दीर्घकेशी च भर्त्रा साऽप्रियभाषिणी ॥ १२ ॥ तस्योपायं प्रवक्ष्येऽहं पुनः पुत्रो यतो भवेत् । हरिवंशश्रवणं देवि गोपालस्य तु कीर्तनम् ॥ १३ ॥

---

मूर्तिको इस ब्राह्मणको देकर हरिद्वारको चलागया और वहां जाकर प्राण छोडदिये, तब इन दोनों मूर्तियोंको बेचकर उस धनको ब्राह्मणने खर्च करडाला ॥ ५ ॥ ६ ॥ इस प्रकार बहुत समय बीतनेपर ब्राह्मणकी मृत्यु होगई, तब यमराजकी आज्ञासे यमदूतोंने कर्दमनामक नरकमें हे देवि ! इसे साठ हजार वर्षोंके लिये डाल दिया ॥ ७ ॥ हे देवि ! जब नरकसे निकला तब व्याघ्रकी योनिको प्राप्त हुआ फिर बिल्लीकी योनिको पाकर मनुष्ययोनिको प्राप्त हुआ ॥ ८ ॥ हे देवि ! हे सुरेश्वरि ! यहां अतिपवित्र अयोध्यानगरीमें ब्राह्मणके कुलमें जन्म लिया यह देखनेमें प्रिय, ज्ञानवान्, देवमंदिरोमें प्रीति रखनेवाला और पराई स्त्रियोंमे लम्पटता करता है ॥ ९ ॥ १० ॥ हे देवि ! इसके एक कन्या और दो पुत्र उत्पन्न हुए परन्तु उन तीनोंकी मृत्यु होगई फिर पुत्र नहीं उत्पन्न हुआ ॥ ११ ॥ और गौर वर्णवाली सुन्दरी सूक्ष्मांगी दीर्घकेशी पतिसे अप्रिय बोलनेवाली इसकी स्त्री काकवंध्या होगई है ॥ १२ ॥ हे देवि ! जिस उपायसे इसके पुत्र उत्पन्न होगा अब उस उपायको मैं तुमसे कहताहूं तुम सुनो—प्रथम तो यह हरिवंशपुराणकी कथा सुने और गोपाल-

वंशगोपालमन्त्रं वै गायत्रीमन्त्रमेव च । लक्षद्वयं वरारोहे जपेत्
प्रीत्या सदा सुधीः ॥ १४ ॥ हवनं तद्दशांशेन तर्पणं मार्जनं
तथा । तुलसीवाटिकां कृत्वा तन्मूले विष्णुपूजनम् ॥ १५ ॥
दशवर्णाख्यगोदानं शय्यादानं ततः शिवे । ब्राह्मणान्भोजयेत्
पश्चाच्छतसंख्यान्द्विजोत्तमान् ॥ १६ ॥ विष्णोश्च प्रतिमां
देवि हेम्नो दशपलस्य हि । पूजयित्वा विधानेन ब्राह्मणाय प्रदा-
पयेत् ॥ १७ ॥ एवं कृते न सन्देहो वंशो भवति नान्यथा ।
काकवन्ध्या लभेत्पुत्रं जीवत्पुत्रा मृतप्रजा ॥ १८ ॥ व्याधयः
संक्षयं यान्ति वन्ध्यात्वं च प्रशाम्यति । एवं न कुरुते देवि सप्त-
जन्मस्वपुत्रवान् ॥ १९ ॥

इति श्रीकर्मविपाकसंहितायां रेवतीनक्षत्रद्वितीयचरणप्रायश्चित्त-
कथनं नाम नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

नामका कीर्त्तन करै ॥ १३ ॥ हे वरारोहे ! कि बुद्धिमान् मनुष्य संतानगोपा-
लके मंत्रका और गायत्रीमन्त्रका दो लाख जप करावै ॥ १४ ॥ जपका दशांश
हवन, मार्जन और तर्पण करावै, पीछे तुलसीका बगीचा लगाकर उसकी
जडमें विष्णु भगवान्का पूजन करै ॥ १५ ॥ हे शिवे ! अनन्तर दश वर्ण-
वाली गौ और शय्याका दान करै पश्चात् सौ श्रेष्ठ ब्राह्मणोको भोजन
करावै ॥ १६ ॥ हे देवि ! चालीस तोले सोनेकी विष्णुभगवान्की मूर्ति
बनवाकर विधिपूर्वक पूजन कर ब्राह्मणोको देवे ॥ १७ ॥ ऐसा करनेसे
निःसन्देह वंश चलता है अन्यथा नहीं, काकवंध्या नारी और मृतवत्सा नारी
पुत्रको प्राप्त करती है ॥ १८ ॥ हे देवि ! और सम्पूर्ण व्याधियें नष्ट हो जाती
हैं स्त्रीका वंध्यात्व दोष दूर हो जाता है और ऐसा न करनेसे सात जन्मों-
तक पुत्रहीन रहता है ॥ १९ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां रेवतीनक्षत्रद्वितीयचरणप्रायश्चित्त-
कथनं नाम नवाधिकशततमोऽध्यायः ॥ १०९ ॥

## अथ दशाधिकशततमोऽध्यायः ॥११०॥

शिव उवाच ॥ माणिक्यनगरे देवि वसन्ति बहवो जनाः । लवणकारो वसत्येकः प्रत्यहं लवणं व्यधात् ॥ १ ॥ लवणस्य विक्रयान्नित्यं व्ययं कुर्वन्दिनेदिने । तस्य मित्रं द्विजः कश्चिदागतस्तस्य वै गृहे ॥२॥ धनाढ्यो रत्नसंयुक्तस्तत्र वासमकारयत् । आदरं बहुसम्मानं सख्युः स कृतवाञ्छिवे ॥ ३ ॥ पत्नी शूद्रस्य वै दुष्टा पुंश्चली चपला तथा । मासमेकं वरारोहे तस्य विप्रस्य च स्थितौ ॥ ४ ॥ मित्रपत्न्या विषं दत्तं ब्राह्मणाय तदा शिवे । भोजनान्नस्य वै मध्ये लवणकारो न वेद तत् ॥ ५ ॥ ब्राह्मणस्याभवन्मृत्युरर्द्धरात्रे गते सति । नद्यां शवं ततस्त्यक्त्वा धनं तस्य गृहीतवान् ॥ ६ ॥ ब्राह्मणस्य धनं गृह्य व्ययं कुर्वन् दिने दिने । भार्यया सह पुत्राभ्यां भुक्तं द्रव्यं वरानने ॥ ७ ॥

---

शिवजी बोले—हे देवि ! माणिकनगरमें बहुतसे मनुष्य बसते थे, उनमें एक लवणकार रहता था, यह प्रतिदिन लवण बनाता था ॥ १ ॥ लवणको प्रतिदिन यह बेचकर अपना निर्वाह किया करता था, एक दिन इस लवणकारका मित्र एक ब्राह्मण धन और रत्नादिकोंको लेकर इसके घर आया तब इसने मित्रका बडा आदर सत्कार किया ॥ २ ॥ ३ ॥ इस लवणकारकी स्त्री दुष्टा चंचला और परपुरुषगामिनी थी, हे वरारोहे ! एक महीनेतक ब्राह्मणके घरमें रहनेसे ॥ ४ ॥ हे शिवे ! इस लवणकारकी दुष्टा स्त्रीने लवणकारसे छिपाकर भोजनके बीचमें विष मिलाकर ब्राह्मणको देदिया ॥ ५ ॥ तब आधी रातके समय ब्राह्मणकी मृत्यु होगई, ब्राह्मणको नदीमें डाल दिया और इसका सब धन लेलिया ॥ ६ ॥ हे वरानने ! उस द्रव्यको लेकर लवणकार स्त्री

ततो वृद्धस्य सञ्जातं मरणं तस्य पापतः । पश्चान्मृता तु वै भार्या कुलटा व्यभिचारिणी ॥ ८ ॥ यमदूतैर्महाघोरे नरके भृशदारुणे । कुम्भीपाके तदा देवि निक्षिप्तश्च यमाज्ञया ॥ ९ ॥ युगमेकं विशालाक्षि भुक्त्वा नरकयातनाम् । नरकान्निःसृतो देवि सूकरत्वमवाप्तवान् ॥ १० ॥ पुनः काकस्य वै योनिं बिडालत्वं ततोऽलभत् । मानुषत्वं ततो देवि देशे शुद्धे ततोऽभवत् ॥ ११ ॥ पूर्वजन्मनि देवेशि कुरुक्षेत्रे यतो गतः । अतो धनं भवत्यस्य नापत्यं हि द्विजो हतः ॥ १२ ॥ शरीरे जायते व्याधिर्भार्या तस्य मृतप्रजा । अस्य पापस्य शमनं शान्तिं शृणु वरानने ॥ १३॥ गृहवित्ताष्टमं भागं ब्राह्मणाय समर्पयेत् ॥ १४॥ गायत्रीजातवेदोभ्यां त्र्यंबकेति ऋचं पुनः । लक्षत्रयं वरारोहे जपं वै कारयेत्सुधीः ॥ १५ ॥

---

पुत्रोंके साथ उसको खर्च करके भोगने लगा ॥ ७ ॥ अनन्तर वृद्ध होनेपर पापसे उसकी मृत्यु होगई पीछे उसकी कुलटा और व्यभिचारिणी स्त्री भी मरगई ॥ ८ ॥ हे देवि ! तब यमराजकी आज्ञासे यमदूतोंने महाघोर कुंभीपाकसंज्ञक नरकमे डाल दिया ॥ ९ ॥ हे विशालाक्षि ! हे देवि ! वहां एक युग नरककी पीडा भोगी, जब नरकसे निकला तब सूकरकी योनिको प्राप्त हुआ ॥ १० ॥ हे देवि ! फिर काककी योनिको, बिडालकी योनिको प्राप्त होकर शुद्ध पवित्रदेशमें मनुष्ययोनिको प्राप्त हुआ ॥ ११ ॥ हे देवेशि ! पूर्वजन्ममे यह कुरुक्षेत्रमें मृत्युको प्राप्त हुआ इससे धनी और ब्रह्महत्यासे संतानहीन हुआ ॥ १२ ॥ इसके शरीरमें व्याधि उत्पन्न होती है और इसकी स्त्री मृतवत्सा हो गई है हे वरानने ! अब इसके पूर्वजन्मके पापोकी नाश करनेवाली शांतिको सुनो ॥ १३ ॥ प्रथम यह अपने घरका आठवां भाग ब्राह्मणको अर्पण करै ॥ १४ ॥ फिर 'गायत्री' 'जातवेदसे' 'त्र्यंबकं यजामहे' इन तीनो मंत्रोंका हे वरारोहे ! बुद्धिमान् मनुष्य तीन लाख जप

हवनं कारयेच्चैव योनिकुण्डे सुशोभने । चतुरस्रे वरारोहे दशांशं विधिपूर्वकम् । तर्पणं तद्दशांशेन मार्जनं च विशेषतः ॥ १६ ॥ गां सवत्सां ततो दद्यात्स्वर्णवस्त्रविभूषिताम् । ब्राह्मणं भोजयेत् पश्चात्कूष्माण्डं प्रददेत्सुधीः ॥ १७ ॥ एवं कृते वरारोहे पुत्रो भवति नान्यथा । व्याधयः संक्षयं यान्ति काकवन्ध्या पुनः सुतम् ॥१८॥ मृतवत्सा लभेत् पुत्रं चिरंजीविनमुत्तमम् ॥१९॥

इति श्रीकर्म० रेवती० तृतीय० दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

## अथैकादशाधिकशततमोऽध्यायः ॥ १११ ॥

शिव उवाच ॥ अलर्कस्य पुरे देवि क्षत्रियो वसति प्रिये । चन्द्रशर्मेति विख्यातः पत्नी देवी ततोऽभवत् ॥ १ ॥ क्षत्रधर्मरतो नित्यं धनाढ्यः शूरसंमतः । कृष्णदास इति ख्यातो विप्रस्तस्य पुरोहितः ॥ २ ॥ विप्राय प्रददौ भूमिं गिरिजे विग्रहोऽभवत् । ततो बहु दिने याते दण्डं तस्मा अयाचत ॥ ३ ॥

---

करावै ॥ १५ ॥ हे सुशोभने ! हे वरारोहे ! फिर जपका दशांश चौकोन योनिकुंडमें विधिपूर्वक हवन करावै, हवनका दशांश मार्जन और मार्जनका दशांश तर्पण करावै ॥ १६ ॥ अनन्तर बछडे सहित गौका सुवर्ण और वस्त्रसे भूषित करके दान करै पीछे ब्राह्मणभोजन कराकर उनको कूष्मांड दे ॥ १७ ॥ हे वरारोहे ! ऐसा करनेसे पुत्र होता है अन्यथा नहीं और सम्पूर्ण व्याधियोंसे मुक्त होकर काकवंध्या नारी पुत्रको प्राप्त करती है, एवं मृतवत्सा नारी भी उत्तम चिरंजीवी पुत्रको प्राप्त करती है ॥ १८ ॥ १९ ॥

इति श्रीकर्मविपाक० रेवती० तृतीय० दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

शिवजी बोले-हे देवि ! हे प्रिये ! चंद्रशर्मानामक क्षत्रिय अलर्ककी पुरीमें निवास करता था उसकी स्त्रीका नाम देवी था ॥ १ ॥ यह क्षत्रियधर्मरत रहता और धनी तथा शूरवीर था, कृष्णदासनामक ब्राह्मण इसका पुरोहित था॥२ हे गिरिजे ! इस क्षत्रियने उस पुरोहितको पृथ्वी दान करके दी, फिर लडाई

ब्राह्मणोऽप्यवदद्देवि नाहं दण्ड्यः कदाचन । ततो रोषपरीतात्मा क्षत्रियो ब्राह्मणं प्रति ॥४॥ दुर्वचश्चावदद्देवि ब्राह्मणं साधुसंमतम् । मरणं ब्राह्मणस्यैव भूम्युद्देशेन वै प्रिये ॥५॥ ततो बहु गते वर्षे मरणं क्षत्रियस्य तु । यमदूतैर्महाघोरे नरके नाम्नि दारुणे ॥६॥ कुंभीपाके महाघोरे क्षिप्तः स यमशासनात् । युगत्रितयपर्यंतं नरके दुःखमाप्तवान् ॥ ७ ॥ नरकान्निःसृतो देवि प्रेतत्वं प्राप्तवानसौ । सूकरस्य पुनर्योनिं ततो जातस्तु मानुषः ॥ ८ ॥ मध्यदेशे विशालाक्षि हिमाविन्ध्यागमध्यगे । धनधान्यसमायुक्तो ब्राह्मणानां च सेवकः ॥९॥ पूर्वजन्मनि देवेशि मरणं ब्राह्मणस्य तु । भूम्युद्देशेन देवेशि तत्पापेन सुतो न हि । पुत्रोत्पत्तिः प्रमादाच्चेन्मरणं तस्य जायते ॥१०॥ काकवन्ध्या भवेन्नारी मृतवत्सा पुनःपुनः । शरीरे व्याधिरुत्पन्नो ज्वरस्तीव्रो मुहुर्मुहुः ११

---

होनेपर बहुत दिनोके उपरान्त उस पृथ्वीका ब्राह्मणसे कर मांगा । हे देवि ! इस बातको सुनकर ब्राह्मणने कहा कि, मैं तुम्हारे कर लेने योग्य नहीं हूँ । ब्राह्मणकी बातको सुनकर क्षत्रिय क्रोधित हुआ ॥ ३ ॥ ४ ॥ हे देवि ! हे प्रिये ! साधुसम्मत ब्राह्मणको उस क्षत्रियने दुर्वचन कहे, तब भूमिके उद्देश्यसे और क्षत्रियके कटुवचनोंसे ब्राह्मण मरगया ॥ ५ ॥ अनन्तर बहुत वर्षोंके उपरांत क्षत्रियकी भी मृत्यु होगई, यमराजकी आज्ञासे महाघोर यमराजके दूतोंने दारुण महाघोर कुंभीपाक नरकमें डाल दिया वहां तीन युगतक इसने वास किया ॥ ६ ॥ ७ ॥ हे देवि ! जब नरकसे निकला तब प्रेतयोनिको प्राप्त हुआ फिर सूकरकी योनिको भोगकर मनुष्ययोनिको प्राप्त हुआ ॥ ८ ॥ हे विशालाक्षि ! अब यह हिमालय और विंध्याचलके बीचमें धनधान्यसे युक्त और ब्राह्मणोंका सेवक हुआ ॥ ९ ॥ हे देवेशि ! पूर्वजन्ममें भूमिके उद्देश्यसे जो ब्राह्मणकी मृत्यु हुई थी उस पापसे इसके पुत्र नहीं होता है और प्रमादवश यदि होभीगया तो उसकी मृत्यु होजाती है॥१०॥इसकी स्त्री काकवंध्या होकर वारंवार पुत्रशोकको प्राप्त होती है और इसके शरीरमें वारंवार व्याधियें और तीव्र ज्वर

अस्य शान्तिमहं वक्ष्ये शृणु देवि समासतः। गृहवित्तषडंशं च ब्राह्मणाय समर्पयेत् ॥ १२ ॥ गायत्रीमूलमंत्रस्य पञ्चलक्षजपं चरेत्। दशांशं कारयेद्भक्त्या हवनं विधिपूर्वकम्। तर्पणं मार्जनं तद्वद्गोदानं च विशेषतः ॥ १३ ॥ ब्राह्मणस्य ततो देवि प्रतिमां कारयेद्बुधः। हेम्नः पञ्चपलस्यैव वस्त्रैरत्नैर्विभूषिताम् ॥ १४ ॥ ततो द्विजस्य प्रतिमां पूजयेत्तु यथाविधि । मंत्रेणानेन देवेशि पाद्यगन्धादिभिः पृथक् ॥ १५ ॥ वासुदेव जगन्नाथ शरणागत-वत्सल। ब्रह्महत्या कृता पूर्वं तत्सर्वं क्षन्तुमर्हसि ॥ १६ ॥ वल्मीकमृत्तिकां गृह्य वेदिं वै कारयेत्ततः। तन्मध्ये सर्वतोभद्रं शुभद्रव्यैस्तु कारयेत् ॥ १७ ॥ तन्मध्ये प्रतिमां स्थाप्य ततः पूजां तु कारयेत् ॥ १८ ॥ ॐ वासुदेवाय नमः ॥ ॐ जग-न्नाथाय नमः ॥ ॐ हृषीकेशाय नमः ॥ ॐ दामोदराय नमः ॥ ॐ अच्युताय नमः ॥ ॐ शंखचक्रगदाधराय नमः ॥ ॐ विष्णवे नमः॥ ॐ शार्ङ्गिणे नमः॥ ॐ अनन्ताय नमः॥ ॐगरुडध्वजाय

---

उत्पन्न होता है ॥११॥ हे देवि ! अब इसके पापोंकी शांतिको कहता हूँ तुम भली भांतिसे सुनो-प्रथम तो यह अपने घरका छठा भाग धन ब्राह्मणको अर्पण करै ॥ १२ ॥ फिर गायत्रीमूलमंत्रका पाँच लाख जप करावै जपका दशांश विधि-पूर्वक हवन करावै, हवनका दशांश तर्पण और तर्पणका दशांश मार्जन करावै फिर गोदान करै ॥ १३ ॥ हे देवि ! पीछे बीस तोले सुवर्णकी ब्राह्मणकी मूर्ति बनवाय बुद्धिमान् पुरुष वस्त्र और रत्नोंसे उस मूर्तिको भूषित करे ॥ १४ ॥ हे देवेशि ! इसके उपरान्त बनवाई हुई मूर्तिका विधिपूर्वक पूजन करके अगाडी कहे मंत्रोंसे पाद्य गंधादिद्वारा पृथक् २ पूजन करे ॥ १५ ॥ मन्त्र-हे वासुदेव ! हे जगन्नाथ ! हे शरणागतवत्सल ! मैंने जो पूर्वजन्ममें ब्रह्महत्या की है उसके पापको आपही क्षमा करने योग्य हो ॥ १६ ॥ पीछे बँमईकी मट्टी लेकर वेदी बनावै उस वेदीपर मंगल द्रव्योंसे सर्वतोभद्र बनावै ॥ १७ ॥ तिसके बीचमें प्रतिमाको स्थापितकर पूजन करै ॥ १८ ॥ उपरोक्त मन्त्रोंसे

नमः ॥ दशमन्त्रैर्महेशानि पूजयित्वा ततः सुधीः । प्रतिमां रक्त-वस्त्रेण च्छादितां पुष्पभूषिताम् ॥ १९ ॥ ब्राह्मणाय ततो दद्या-न्महाविष्णुस्वरूपिणे । प्रभोजयेत्ततो विप्रान्दक्षिणां दापये-त्ततः ॥ २० ॥ ततो विसर्जनं कुर्याद्वाचकं प्रणिपत्य च ॥ २१ ॥ एवं कृते वरारोहे शीघ्रं पुत्रः प्रजायते । काकवन्ध्या लभेत्पुत्रं सर्वव्याधिप्रणाशनम् ॥ २२ ॥ मृतवत्सा च या नारी जीवत्पुत्रा च जायते ॥ २३ ॥ यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥ अतः परतरं नास्ति सत्यं सत्यं वरानने ॥ २४ ॥

इति श्रीकर्मविपाकसंहितायां ब्रह्मपुराणे पितृकल्पोत्तरे सनत्कुमारमार्कं-डेयप्रश्ने श्रीपार्वती-ईश्वरसंवादे सर्वप्रायश्चित्तकथने रेवतीनक्षत्रचतुर्थ-चरणप्रायश्चित्तकथनं नामैकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

उस प्रतिमाको पूजन कर पुष्पोंसे भूषित और लाल वस्त्रसे आच्छादित करै ॥ १९ ॥ इसके पीछे विष्णुस्वरूपी ब्राह्मणको दे दे फिर ब्राह्मणोंको भोजन कराकर दक्षिणा देवे ॥ २० ॥ पश्चात् प्रायश्चित्त करानेवाले ब्राह्मणको प्रणाम करके विसर्जन करै ॥ २१ ॥ हे वरारोहे ! ऐसा करनेसे शीघ्र पुत्र प्राप्त होता है काकवंध्या नारी भी सुतको प्राप्त करती है और सम्पूर्ण व्याधियें नष्ट हो जाती हैं ॥ २२ ॥ और मृतवत्सा नारी चिरंजीवी पुत्रको प्राप्त करतीहै ॥ २३ ॥ जो मनुष्य इस कर्मविपाक संहिताको पढते वा सुनते हैं उनके सब पाप दूर हो जाते हैं, हे वरानने ! इससे श्रेष्ठ और कुछ नहींहै यह मैं सत्य ही सत्य कहता हूँ ॥ २४ ॥

इति श्रीकर्मविपाकसंहिताभाषाटीकायां पं० श्यामसुन्दरलालत्रिपाठि-कृतभाषाटीकायां पार्वतीहरसंवादे रेवतीनक्षत्रचतुर्थचरणप्राय-श्चित्तकथनं नामैकादशाधिकशततमोऽध्यायः ॥ १११ ॥

समाप्तोऽयं ग्रन्थः ॥


## पुस्तक मिलनेका ठिकाना-

गङ्गाविष्णु श्रीकृष्णदास, "लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस, कल्याण-बम्बई.

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्-प्रेस, खेतवाडी-बम्बई.